अच्युतग्रन्थमालायाः (क) विभागे १२शं कुसुमम्

माध्यन्दिनशाखीयं

# शतपथब्राह्मणम्

[ सप्तमतश्चतुर्दशकाण्डान्तः ]

( द्वितीयो भागः )

तच्च

सर्वतन्त्रस्वतन्त्राणामाम्नायविद्यावताराणां तत्रभवतां सुगृहीतनामधेयानां
महामहोपाध्यपण्डितप्रवरश्रीविद्याधरशर्मणामन्तेवासिना
वेदाचार्येण मिश्रोपाह्वपण्डित-
श्रीवंशीधरशास्त्रिणा
सम्पादितम्

प्रकाशनस्थानम्—
अच्युतग्रन्थमालाकार्यालयः, काशी ।

प्रथमावृत्तिः १००० ]  संवत् १९९७  [ मूल्यम्- [illegible] ]

* श्रीः *

# प्राक्कथनम्

प्रसिद्धाश्चत्वारो वेदाः, शाखाश्च प्रसिद्धाः सङ्ख्यया महाभाष्यादौ—"एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, नवधाथर्वणो वेदः, एकविंशतिधा बाह्वृच्यम्" इति । नामानि चोपलभ्यन्ते कतिचित् । तत्र यजुर्वेदो द्विधा शुक्लः कृष्णश्चेति । कृष्णयजुर्वेदस्य षडशीतिशाखाः । शुक्लस्य पञ्चदश । पूर्वत्र एकशतमित्यस्य एकाधिकं शतम् (१०१) इत्यर्थः । ताश्च माध्यन्दिन-कण्व-तित्तिरि-हिरण्यकेशि-सत्याषाढ़-बौधायनापस्तम्बप्रभृतयश्चरणव्यूहबौधायनादिगृह्यसूत्रेषूपलभ्यन्ते । एतासु शाखासु काश्चन शुक्लस्य काश्चन कृष्णस्य । अथ को वेदः ? काः शाखाः ? प्राधान्येनालौकिकैरुपायैः पुरुषार्थान् यो वेदयति स वेदः । प्रासङ्गिकतयाऽऽध्यात्मिकाधिदैविकाधिभौतिकानि तत्त्वानि बोधयतीत्यपि वेदस्य वेदत्वम् । स च वेदः केनापि रूपेण एक एवासीदिति पुराणेषु दृश्यते । न च तस्य क्रमः क्वाप्युपलभ्यते । ऋग्यजुःसाम्नां पृथग्गणानुद्धृत्य चतस्रः संहिता भगवता वेदव्यासेन संगृहीता इति तु लभ्यत एव । अतोऽनुमीयते पूर्वं कमप्येकं विषयमवलम्ब्य तस्य विधिः, ततस्तस्य प्रशंसा, ततस्तत्रेतिकर्तव्यता, फलम्, तत्रैव विधेयधर्मविनियुक्तानामृग्यजुःसाम्नां शिष्यबुद्धौ पदार्थप्रतिबिम्बनार्थं दृष्टान्ता इत्यादिविषयक्रमेण वा देवतास्तुतिक्रमेण वा मन्त्रब्राह्मणात्मकस्य वेदस्य पिण्डितः पाठ आसीदिति दधिमथनादिव तक्रनवनीतविभागो जातः । एवं सति मन्त्रब्राह्मणयोरुभयोरपि नित्यत्वं नितरां सिद्धयति । एवं मन्त्रसमुदायात् पृथक् समुद्धृते ऋगादि-मन्त्रगणेऽवशिष्टं ब्राह्मणमपि तत्तन्मन्त्रलिङ्गैः पृथक् संगृहीतम् । ततस्तद्विभाजक-र्षिशिष्यैर्यावद्भिः पदवर्णवाक्यस्वरभेदैरुच्चारितैर्विनियुक्तैर्जप्तैः स्मृतैर्वा विहित-कर्मापूर्वसाधकता सगुणा भवति तावद्भिः पाठैः कल्पान्तरीयैरीश्वरीयसङ्केतविषयैः शाखाभेदः स्वतपोबलेन दृष्टः । येन यस्याः शाखाभेदो दृष्टस्तेन तस्या एव प्रवचनमपि कृतमिति तस्यैव नाम्ना प्रसिद्धा सा शाखा । ततस्तच्छिष्यपरम्परायां प्रचलिता या शाखा तच्छाखीयास्ते जाताः । अतस्तेषां स्वशाखीय एव विधिः, पाठः, क्रिया, क्रमश्चेत्यादिरपूर्वसाधक इति तथैवानुष्ठीयतेऽद्यापि तत्तच्छाखीयैः ।

तत्र यजुषां माध्यन्दिनशाखा प्रधानभूतेति नात्र विवादः । तथा हि 'इमन्देवाः' इति (यजु० ९ । ४०) राज्याभिषेकमन्त्रे 'एष वोऽमी राजा' इति सामान्यतः सर्वनाम्ना

पाठो माध्यन्दिनशाखायाम्। 'एष वः कुरवो राजा', 'एष पञ्चालो राजा' इत्यूहविवरण-रूपेण काण्वशाखायाम्। 'एष वो भरतो राजा' इति तैत्तिरीयशाखायाम्, 'एष ते जनते राजा' इति काठकादौ। तथा च सामान्यविशेषयोरभेदेऽपि व्याप्यव्यापकभावस्याऽवश्यंभावात् सामान्यपाठस्य व्यापकत्वात् प्रधानभूता माध्यन्दिनसंहिता, तदनुसारित्वाद् ब्राह्मणमपि प्रधानं तस्याः। किञ्चेदं ब्राह्मणम् 'हिङ्कृत्यान्वाह' इति साम विधत्ते। 'नासामा यज्ञोऽस्ति' इति सामहीनस्य वैगुण्यं प्रतिपादयति, हिङ्कारपूर्वकमेव सामगानमिति च नियच्छति। प्रकृतकर्मोपयोगिनमौद्गात्रमपि स्वयमेव विशदं विधत्ते नान्यदपेक्षत इति। एवं तत्प्रकरणे हौत्रमपि स्वयं विधत्ते। तस्मात् समग्राङ्गोपदेशः प्रकृतियागेषु माध्यन्दिनीयशतपथविहितेषु।

इदं शतपथब्राह्मणं माध्यन्दिनशाखायाः। सा च शाखा प्रधानतमा सर्ववेदशाखासु, प्रकृतिभूतानामिष्टिपशुसोमानां प्रयोगसमवेतार्थस्मारकाणां मन्त्राणां साकल्येन पाठवत्त्वात्। तद्विधायकत्वादिदं ब्राह्मणमपि प्रधानम्। समग्राङ्गोपदेशकं चेदमेव ब्राह्मणम्। अन्यानि तु परिशिष्टरूपाण्येवेति प्रतिभाति, तेषामेतदवशिष्टविधायकत्वात्। तथाहि— इष्टिषु दर्शपूर्णमासेष्टी प्रधानभूते, तयोरुपक्रमे शालाप्रवेशमारभ्य आचमनादि-क्रियाकलापस्य सयुक्ति सदृष्टान्तं सेतिकर्तव्यतं सप्रयोजनं च विधायकत्वात्। तत्र 'व्रतमुपैष्यन्....अप उपस्पृशति' इति विधायकं वाक्यम्। 'लिङर्थे लेट्' (पा० सू० ३।४।७) इति स्पृशति इत्यस्य लेडन्तत्वात्। आहवनीयगार्हपत्ययोर्मध्ये प्राङ्मुखस्तिष्ठन्निति इतिकर्तव्यता। 'तद्यदप उपस्पृशति' इत्यादि युक्तिः। ततोऽपां प्रशस्तिः। 'मेध्यो भूत्वा' इत्यादि प्रयोजनम्। एवं 'सोऽग्निमेवाभीक्षमाणो व्रतमुपैति' इति व्रतग्रहण विधिः। 'अग्ने व्रतपते व्रतं चरिष्यामि' इति उपक्रमः। तत्रैव 'अथ संस्थिते विसृजते' इत्यादिना उपसंहारोऽपि दर्शितः। अन्ये ब्राह्मणग्रन्थाः कर्मारम्भभूतमाचमनादिकं नाधिकुर्वते। नापि स्वस्मिन् विहितानां कर्मणां समग्राण्यङ्गान्युपदिशन्ति, किन्तु साकाङ्क्षाण्येव दृश्यन्ते। आग्नावैष्णवाद् द्वादशकपालादारभ्य ऐतरीये ब्राह्मणे कर्माणि दृश्यन्ते। ताण्ड्ये महाब्राह्मणे गवामयनादिकं प्रथमं दृश्यते। तत्रापि न समग्राङ्गोपदेश इति हेतोस्तत्र प्रकृतियागा अपेक्ष्यन्ते। ते च माध्यन्दिनीये इति समायातं तस्यैव प्राधान्यम्। अत्र तु इष्टिमात्रस्य प्रकृतिभूता दर्शपूर्णमासेष्टिः साङ्गोपाङ्गा प्रथमकाण्डे विहिता। यस्या मन्त्राः संहितायां प्रथमाध्यायस्य पञ्चमकण्डिकात आरभ्य द्वितीयाध्यायस्याष्टाविंशतिकण्डिकापर्यन्तम्। 'अग्ने व्रतपते व्रतं चरिष्यामि' इति प्रतिज्ञापूर्वकं पठित्वा द्वितीयाध्यायस्याष्टाविंशतितमायां कण्डिकायाम् 'अग्ने व्रतपते व्रतम-

चारिषम्'इत्युपसंहृताः। एवमस्मिन् ब्राह्मणे पृथक् पृथक् क्रियासु विनियुक्ता व्याख्याताः समर्थिता निदर्शिताश्च मन्त्राः। प्रथमकाण्डान्ते उपसंहारश्चैवम्। 'अथ व्रतं विसृजते····इदमहं य एवास्मि सोऽस्मि' इति प्रतीकमादाय 'तदु खलु पुनर्मानुषो भवति तस्मादिदमहं य एवास्मि सोऽस्मीत्येवं 'व्रतं विसृजेत' इति। एवं सोमयागानां प्रकृतिभूतोऽग्निष्टोमः। तस्य च मन्त्रा माध्यन्दिनसंहितायाश्चतुर्थाध्यायमारभ्याष्टमाध्यायस्य द्वात्रिंशत्कण्डिकापर्यन्तं साङ्गोपाङ्गाः क्रमशः पठिताः। स एवास्मिन् ब्राह्मणे तृतीयकाण्डे शालाप्रवेशमारभ्य प्रपञ्चितः। ततस्तस्यैव विकृतिभूता ज्योतिष्टोमादयो निदर्शिताश्चतुर्थपञ्चमकाण्डयोः। किं बहुना, सर्वे प्रकृतियागा अत्रैव विहिताः श्रूयन्ते। अतः प्रधानताऽस्य स्वतः सिद्धा।

ननु शताध्यायवत्त्वादन्वर्थनामधेयं प्रथमशाखीयं चेति काण्वशतपथब्राह्मणं कथं न प्रधानमिति चेत्, न; सापेक्षत्वाद् व्युत्क्रमत्वाच्चेति। तत्र हि—'स यद्वा इतश्चेतश्च सम्भरति' इत्युपक्रमो दृश्यते। तत्र 'स' इति पदमधिकृतं कर्तारमपेक्षते। न चात्राधिकृतः कर्ता इति पूर्वोक्तहेतुभिः सिद्धप्रधानत्वं माध्यन्दिनं पाठमपेक्षते। तत्र हि व्रतमुपैष्यन्निति कर्ताऽधिक्रियते। अधिकृत एव स इति परामृष्टुं योग्य इति सापेक्षता। काण्वेऽपि शतपथे द्वितीयकाण्डादौ व्रतमुपैष्यन्निति दृश्यते। अतस्तस्यैव परामर्श इति चेत्, सर्वादीनां पूर्वपरामर्शकत्वस्यैव प्रसिद्धत्वान्न परपरामर्शित्वम्। ननु कथमन्यग्रन्थस्थस्तच्छब्दोऽन्यग्रन्थस्थं व्रतमुपेतारं कर्तारं परामृशेदिति चेत्, सजातीयत्वेनैककार्यविधायकत्वेन व्याप्यव्यापकभावात्। शतपथत्वेन समानत्वेऽपि कथं व्याप्यव्यापकभाव इति चेत्, मा भूत्परिमाणकृतो व्याप्यव्यापकभावः, प्रधानकृतस्त्वस्त्येव। सापेक्षमसमर्थं निरपेक्षं समर्थमिति न्यायेन निरपेक्षस्य माध्यन्दिनस्य प्राधान्यात्, पूर्वोक्तहेतुभिश्च। ननु

"याज्ञवल्क्यस्य शिष्यास्ते कण्व[1]वै[2]धेय[3]शालिनः।
मध्यन्दिनश्च शापेयी विदग्धश्चाप्य उद्दलः॥
ताम्रायणश्च वात्स्यश्च[10] तथा गालव[11]शैशिरौ[12]।
आटवी[13] च तथा पर्णी[14] वीरणी[15] सपरायणः॥
इत्येते वाजिनः प्रोक्ता दश पञ्च च संस्मृताः" (वायुपु० अ० ६१)

इति शुक्लयजुःशाखाप्रवर्तकेषु कण्वस्य प्रथमपाठात् प्रथमा कण्वशाखा। तच्छाखीयं ब्राह्मणमपि प्राथम्यात् कथन्न प्रधानमिति चेत्, प्राथम्यादुपविशतु प्रथमासने, न तु क्रमिककर्मकलापबोधने। ननु काण्वे एव क्रमिकः कर्मकलापः। तत्र हि प्रथमं

संभारसंपादनम् , पुनरग्न्याधानं प्रतिपाद्यते । नह्यग्न्याधानमन्तरेण किमपि वैदिकं कर्म कर्तुं शक्यते, अनधिकारित्वात् । अतः काण्वब्राह्मणस्य प्राधान्यमिति चेत्, तदपि न। बलवत्तरं साधनम्। आधाने पवमानेष्टिर्विधीयते। सा च दर्शपूर्णमासविकृतिः । विकृतौ च समग्राङ्गोपदेशाभावात् प्रकृतिसापेक्षता । तथा चाधाने स्मृतिविषयीभूते सापेक्षतया बलादुपस्थिता दर्शपौर्णमासेष्टिः प्रथमा सम्पद्यते क्रियाकलापबुभुत्सुहृदयारोहणायेति तदुपक्रम्य प्रवर्तमानं माध्यन्दिनीयमेव ब्राह्मणं प्रधानम् । नहि व्याप्यव्यापकभावमवलम्ब्य वेदस्यैकत्वमेकवाक्यत्वमेककर्मविधायकत्वमेकापूर्वसाधकत्वं च कर्मणां सेत्स्यति । यथा खलु त्रयाणां दर्शयागानां त्रयाणां पौर्णमासयागानां भिन्नकालिकानामपि साङ्गोपाङ्गानामेकापूर्वसाधकता, तथैव हौत्राध्वर्यवौद्गात्रविनियुक्तानामृग्यजुःसाम्नामेककर्मसंपादकत्वम्, तथैव ब्राह्मणानां मिलित्वैव कर्मकलापविधायकत्वमिति सिद्धं कस्यचित् समग्राङ्गोपदेशकत्वं कस्यचिदवशिष्टप्रतिपादकत्वमिति सिद्धो व्याप्यव्यापकभावः।

अथ कीदृक्स्वरूपा देवताऽभिमताऽस्मिन् शतपथे ? मूर्तिमती पञ्चभूतात्मिका दृश्यत एव सूर्यादिबिम्बस्था नारायणमूर्तिश्चन्द्रादिमण्डलस्था च चेतना । ननु 'भूम्यै स्वाहा, 'अन्तरिक्षाय स्वाहा' इत्यादौ जडानामपि पदार्थानामुद्देश्यत्वेन देवतात्वं प्रतीयते तत्कथं चेतनावत्त्वमिति चेत् , पुराणपुरुषस्य व्यापकस्य यज्ञाधिष्ठातुर्महाभाग्यत्वात् प्रत्येकव्यक्तिगत्वेन तत्तद्व्यक्त्यधिष्ठातृत्वात् तदभिमानी पृथक् पृथक् देवता चेतना एव । यथा खलु मनुष्यादीनां शरीरस्य जडत्वेऽपि तदधिष्ठातुर्जीवस्य चेतनत्वेन शरीरस्यापि चेतनाभिमानिता, एवं भूम्यादीनामभिमानिनी देवता चेतना इति ध्येयम् । ननु यदि मूर्तिमती देवता तर्हि हविरादिसम्प्रदानार्थमाहूताऽपि स्वाहेति समर्पितं हविः कथं न स्वीकुरुते ? यदि स्वीकुरुतेऽदृश्या महैश्वर्यवती, तर्हि समकालमनेकेषु देशेषु सत्सु यागेषु न शक्नोति सा सर्वत्र गन्तुम्। यत्रैव सा न गच्छेत्तत्रैव वैगुण्यम् । यागवैगुण्यात् फलवैगुण्यम् । फलवैगुण्यात्तद्बोधकवेदाप्रामाण्यमिति महती कष्टपरम्परा । न कापि कष्टपरम्परा, व्यापिका देवता द्रव्यमात्रेषु व्याप्ता स्वकीयायां प्रियायां संज्ञायामपि व्याप्ता । संज्ञासंज्ञिनोश्चाभेदात् संज्ञामयी देवता कर्मकाले मन्त्रोच्चारणस्यावश्यकत्वादुपस्थितैव । ननु संज्ञायाः शब्दरूपत्वात् शब्दस्य च गुणत्वात् गुणस्य द्रव्यसमवेतत्वात् कथमन्यत्रगामित्वम् इति चेत् , न; शब्दो द्रव्यं देशान्तरगामित्वात् आघातजनकत्वात् । सति पटहप्रणादे हृदयकम्पादेस्तार्किकैरपि अनुभूयमानत्वात् । एवं सिद्धे शब्दस्य द्रव्यत्वे नित्यत्वं नानोपायैः साध्यते मीमांसकैर्वैयाकरणैः। वेदान्तिभिश्च व्यावहारिकनित्यत्वं स्वीकृतमेवेति शक्नोति नानादेशानुपस्थातुं मन्त्र-

मयी चेतना देवता यज्ञकर्मणि । नैतावता सूर्यादीनां तैजसी चेतना सूर्यमण्डलवर्तिनी मूर्तिरपलपितुं शक्यते प्रत्यक्षत्वात् । यथा भूलोके भौमं शरीरं तथा द्युलोके तैजसं शरीरं भवितुमर्हति, लोकत्वात् । भोगायतनशरीरं विनाऽदृष्टकार्ययोर्जन्यजनकभावानुपपत्तेः । यद्यत्कार्यं तत्तददृष्टजन्यमिति व्याप्तेः सिध्यति नानारूपवती देवता । यज्ञादौ कर्मणि तु शब्दमय्या एव भावना कर्तव्या तद्द्वारैवेष्टफलसिद्धिरिति नियमात् । अतएव जैमिनिना सिद्धान्तितमन्यथयति श्रीहर्षः—

'विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये ।
विग्रहं मखभुजामसहिष्णुर्व्यर्थतां मदशनिं स निनाय ॥ ( नै. ५।३९ ) ।

एवं हि दार्शनिकाः सिद्धान्ताः स्वसरणिसंशोधनाय प्रसरन्ति । यथा तार्किकैः सुवर्णादेः पदार्थजातस्य प्रतिज्ञातसप्तपदार्थान्तर्गतद्रव्याणां नवत्वरक्षायै युक्त्या तेजसि कृतेऽप्यन्तर्भावे नापलपितुं शक्यते गुरुत्वं तेजस्यविद्यमानमपि । वस्तुतः संयुक्तद्रव्यं सुवर्णादिकम् । एवं विग्रहवतोऽपि पुरुहूतादेः स्वनिग्रहपरिहाराय पुरुहूतमयत्वस्वीकारेऽपि न पुरुहूतवाच्यत्वतिरस्कारः, वाच्यवाचकयोर्भेदस्य सर्वलोकवेदप्रसिद्धत्वात् । यत्रापि शब्दस्य शब्द एव वाच्यः 'त्रेस्त्रयः' (पा. सू. ७।१।५३) इत्यादौ भेदः सिद्ध एव, अर्थभेदात् । एवं चास्तु याज्ञिकेऽवसरे जैमिनीयः सिद्धान्तः फलदायकः । पुरुहूतादीनां पुरुरूपत्वे साधिते तु रूपवतामपि तेषां कथं न चाक्षुषविषयतेति निग्रहापत्तिः । अतस्तथाभावनाः । शब्दो हि प्रथमा प्रतिमा देवतानाम् । तस्य तादात्म्यरूपेण तादात्म्यं भावनीयमित्येव तात्पर्यम् । अत एव "इन्द्रो वज्रेण वृत्रस्य शिरः", "वज्रहस्तः पुरन्दरः", "अपां फेनेन नमुचेः शिरः" इत्यादिप्रकरणस्थं ब्राह्मणं संवदति ।

ननु 'उर्वशी हाप्सरा ऐडं पुरूरवमकायत' 'जनमेजयं पारीक्षितम्' इत्यादिभिः प्रतीयते प्रत्यासन्नोऽयं वेद इति चेत् , न; अनादीनीमानि नामानि । प्रतिकल्पं तादृशनामवतां दर्शनात् । तथाहि देवीभागवतोक्तः परीक्षितः सप्तविंशतितमकलियुगस्य । श्रीमद्भागवतस्य तु अष्टाविंशतितमकलियुगस्येति । सूर्यवंशेऽपि जनमेजयस्त्रेतादावासीत् । देवीभागवतप्रामाण्येन यस्य समयः कोटिभ्य उपरितनः सिध्यति, दृश्यतामवताराध्याये श्रीरामचन्द्रस्य समयः । तस्मात्पूर्वकालिकः सः । एवं 'स्यू' शब्दः केतुमालीयभाषासु सूच्यां प्रसिद्धः । किमेतावता भाषाभ्यो वेदे शब्दा आगता इति कुकल्पना क्रियते, न कदापि । नेपालेऽपि स्यूशब्देन सूची

गृह्यते। 'विष्णोः स्यूरसि' ( शु० य० ५ । ३० ) इत्यादित एव वेदात् प्रसृताः सर्वे शब्दास्तासु तासु भाषासु यत्र तत्र प्रसिद्धाः। कः खलु विषयो न दर्शितो ब्राह्मणेषु। विशेषतः प्रकृतशतपथे। शतपथत्वं च न केवलमस्य शताध्याय-वत्त्वेनैव। अपि तु शतशो विषयप्रतिपादनमार्गदर्शनेनापि। तथाहि सर्वाणि विधि-वाक्यानि पठ्यन्तेऽत्र। अत एव श्रौतसूत्राणां खनिः। तथैवानुक्रमदर्शनेन सर्वानुक्रम-णिकानाम्। स्वाध्यायप्रशंसादिनिदर्शनेन स्मृतीनाम्। तदश्वमेधस्याश्वमेधत्वम्, तद्वेदस्य वेदत्वम्, इत्यादिविवृतिव्याकृतेर्व्याकरणस्य। क्वचित् संज्ञाशब्दानां निर्वचनात् देवतास्वरूपनिर्वचनाच्च निरुक्तस्यापि खनिरेव। अत्र 'एका च मे तिस्रश्च मे' इति विषमाङ्कसंकलनया 'चतस्रश्च मे' इत्यादि समाङ्कसंकलनया 'एकयाऽस्तुवत' इत्यादि-स्थलेषु च संख्येयगणनया गणितमूलभूतो योगो दर्शितः। ग्रहनक्षत्रादिवर्णनेन ज्योतिर्विज्ञानं दर्शितम्। वृत्रोदाहरणनिदर्शनेन नमुचिवधनिदर्शनेन समुद्रमंथनादि-निदर्शनेन च पुराणेतिहासानामाकरभूतमिदं ब्राह्मणम्। लौकिकान्यपि संख्यातीतानि विज्ञानानि दृश्यन्ते प्रासङ्गिकानि, ग्रन्थविस्तारभयपरिहारायात्र नोदाह्रियन्ते। दृश्यन्तां पुस्तकावलोकनरसिकैर्विषयसूच्यां प्रकरणशीर्षकेषु च।

अस्मिन् ब्राह्मणे उदात्तानुदात्तौ द्वावेव स्वरौ न स्वरान्तरम्। यकारस्य जकारो-च्चारणम्, षकारस्य खकारोच्चारणम्, अनुस्वारस्य ॱंकारोच्चारणम्, पदादिस्थवकारस्य द्वित्ववकारोच्चारणम्, रेफस्योष्म-ऋकारैः संयुक्तस्य रेकारोच्चारणम्, लकारस्यो-ष्मसंयुक्तस्य लेकारोच्चारणम्, माध्यन्दिनसंहितावदेव भवति। विसर्गेष्वङ्गुलि-प्रक्षेपणं तु न क्रियते। यत्र द्वयोरक्षरयोस्त्रयाणां वाऽनुदात्तता तत्र सर्वाण्यप्यक्षराणि हस्तेन कण्ठेन च अनुदात्तानि उच्चारणीयानि।

कृष्णयजुर्ब्राह्मणेऽपि त्रयः स्वराः सन्ति। ब्राह्मणान्तरेषु स्वराणामभाव एव।

सामवेदे गाने मध्यम-गान्धार-ऋषभ-षड्ज-धैवत-निषाद-पञ्चमेति क्रमेण सप्त स्वराः क्रियन्ते। तत्र मध्यमे हस्तो रिक्त एव स्थाप्यते। गान्धारे अङ्गुष्ठेन तर्जन्या मध्यं पर्व स्पृश्यते। ऋषभेऽङ्गुष्ठेन मध्यमाङ्गुलिमध्यपर्व, षड्जेऽनामिकामध्यपर्व, धैवते कनिष्ठामध्यपर्व, निषादे कनिष्ठामूलम्, पञ्चमे तर्जन्यग्रं स्पृश्यते।

यस्य वर्णस्योपरि ʌ एतच्चिह्नं तस्य दीर्घमुच्चारणं तर्जनीमध्यस्पर्शो हस्तस्य तिर्यक्करणं च भवति।

यत्र—एतद्दण्डसदृशं चिह्नं तत्र तर्जनीमारभ्य कनिष्ठिकापर्यन्तं स्पृशेत्।

यत्र $\overset{उ}{\underset{२}{}}$ एतच्चिह्नं भवेत् तत्र पूर्ववत् तर्जनीमारभ्य कनिष्ठान्तं कनिष्ठामारभ्य तर्जनीं यावत् स्पृष्ट्वा मध्यमामन्तः क्षिपेत् ब्राह्मतीर्थसंस्पृष्टां कुर्यादिति ।

यत्र $\overset{क}{\underset{३}{}}$ एतच्चिह्नं भवेत् तत्र मध्यमामग्रमारभ्य मूलं यावत् स्पृशेत् ।

यत्र वर्णस्योपरि ९ लिखितं स्यात्तत्र तर्जनीमूलमारभ्य अग्रं यावत् स्पृशेत् ।

विरामे विसर्गे सानुनासिकमुच्चरेत् । अनुनासिकस्य चोच्चारणं ङकारतुल्यं भवति । दीर्घमॄकारं रे इत्युच्चरेत् । ऋकारस्य च रे इत्युच्चारणं षकारहकारयोर्योगे विधेयम् । सामसंहितायां मध्यम-गान्धार-ऋषभास्त्रय एव स्वराः क्रमेण स्वरितोदात्तानुदात्ता भवन्ति ।

अत्र वैदिकानां सौकर्यार्थं दर्शपूर्णमासादिवेदिनिर्माणप्रकार उच्यते—

## तत्र दर्शपूर्णमासवेदिनिर्माणप्रकारः—

गार्हपत्यमध्यादाहवनीयस्य मध्यपर्यन्तं मध्येऽन्तरमष्टौ, एकादश, द्वादश वा प्रक्रमाः । गार्हपत्यमध्यं केन्द्रत्वेन परिकल्प्य सार्धत्रयोदशाङ्गुलमितरज्ज्वा वृत्तं कार्यम् । इदं गार्हपत्याग्नेः स्थानम् । आहवनीयस्थानमायामतो विस्तारतश्च हस्तमितम् । गार्हपत्याहवनीयान्तरस्य द्वादशपदपरिमितत्वपक्षे तदन्तरस्य षड्ढस्तात्मकत्वात् षड्ढस्तां तदीयषष्ठभागेन हस्तात्मकेन संयोज्य अर्थात् सप्तहस्तां रज्जुं गृहीत्वा तस्या अन्तयोः पाशौ कृत्वा, मध्ये च तृतीये तृतीये भागे चिह्नं कृत्वा, एकं पाशं गार्हपत्यमध्यशङ्कौ आसज्य द्वितीयपाशमाहवनीयमध्यशङ्कौ आसञ्जयेत् । रज्जुमध्यवर्तिनोर्द्वयोश्चिह्नयोः पश्चिमचिह्नस्थाने रज्जुं गृहीत्वा दक्षिणत आकर्षयेत्, यत्र तच्चिह्नं पतति तत्र तच्चिह्नं कृत्वा तस्मात्स्थानाद् उत्तरतः सार्धनवाङ्गुलव्यवहिते देशे शङ्कुर्देयः । शङ्कुस्थानं केन्द्रत्वेन परिकल्प्य यवाधिकोनविंशत्यङ्गुलमितरज्ज्वा वृत्तं कार्यम् । वृत्तमध्ये केन्द्रसंलग्ना परिधिपूर्वभागमादाय परिधिपश्चिमं यावत्सरलरेखा कार्या । रेखात उत्तरभागस्य त्यागः कार्यः । वृत्तस्य दक्षिणार्धं दक्षिणाग्निस्थानम् । पूर्वोक्तयोश्चिह्नयोः पूर्वचिह्नस्थाने रज्जुं गृहीत्वा उत्तरत आकर्षणे यत्र चिह्नं पतति तदुत्करस्थानम् । आहवनीयमध्यशङ्कुसकाशात् पश्चिमतस्त्र्यरत्निव्यवहिते देशे शङ्कुर्देयः । आहवनीयप्राचीशङ्कुसकाशात् सार्धारत्निव्यवहिते देशे दक्षिणत उत्तरतश्च शङ्कुर्देयः । चतुर्षु कोणस्थशङ्कुषु सूत्रार्पणाद् विषमचतुरस्रं भवति । प्राचीशङ्कुमारभ्य पश्चिमशङ्कुपर्यन्तं कोणद्वयवेष्टनेन सूत्रं प्रदेयम् । तत्सूत्रार्धपरिमितेन सूत्रेण प्राचीशङ्कुमारभ्य दक्षिणकोणस्थशङ्कुवेष्टनेन दक्षिणतः, उत्तरकोणस्थशङ्कुवेष्टनेन

उत्तरतश्च शङ्कुर्देयः। ताभ्यां शङ्कुभ्यां पूर्वार्धचतुर्थांशेन वेदिमध्ये सङ्ग्रहौ कार्यौ*। द्वादशाङ्गुलं पदम्। अष्टयवमङ्गुलम्। चतुर्विंशत्यङ्गुलो हस्तः। ( का० शु० प० १।२६–३० ) इति।

## चातुर्मास्यवेदिनिर्माणप्रकारः—

चातुर्मास्ययागे पूर्वस्यां दिशि वेदिद्वयं निर्मातव्यम्। तत्र दक्षिणस्यां प्रतिप्रस्थातुः, उत्तरस्यामध्वर्योः। प्रतिप्रस्थातुर्वेदिर्दर्शपूर्णमासवद्भवति। अत्र गार्हपत्यदक्षिणाग्नी न भवतो नाप्युत्करः। अध्वर्योर्वेदिरपि दर्शपूर्णमासवदेव भवति परन्तु तत्र पूर्वपश्चिमयोर्दैर्घ्यं सप्तारत्निमितं षडरत्निमितं वा भवति। विस्तारस्तु दर्शपूर्णमासवदेव। अत्र संग्रहौ न भवतः। आहवनीयस्थाने द्वात्रिंशदङ्गुलदीर्घा तावद्विस्तारा समचतुरस्रा चतुरङ्गुलोच्चा उत्तरवेदिः कर्तव्या। तन्मध्ये प्रादेशदीर्घा तावद्विस्तारा एकाङ्गुलोच्चा नाभिर्भवति। पश्चाद्भागे उभयोर्वेद्योरन्तरालं प्रादेशमितं भवति। उत्करो दर्शपूर्णमासवत्पूर्वतृतीये वेद्या बहिर्भवति। स च षडङ्गुलवृत्तभ्रामणेन द्वादशाङ्गुलवृत्तो द्व्यङ्गुलखातश्च निष्पाद्यः। उत्करात्पूर्वस्यां दिशि द्वात्रिंशदङ्गुलमितं देशं त्यक्त्वा द्वात्रिंशदङ्गुलदीर्घस्तावद्विस्तारोऽष्टाङ्गुलषडङ्गुलान्यतरपरिमाणखातवान् चात्वालनामको गर्तो निष्पादनीयः। अध्वर्युवेदेः पश्चिमदिशि अरत्निद्वयं मुक्त्वा गार्हपत्यखरः ४१ अथवा ४८ अङ्गुलमितहस्तेन दर्शपूर्णमासवत् संपादनीयः। दक्षिणाग्निखरश्च पश्चिमवितृतीये देशे दक्षिणस्यां दिशि गार्हपत्यात् सपादहस्तद्वयमितमन्तरालं त्यक्त्वा संपादनीयः। दक्षिणाग्नेः पश्चिमदिशि द्व्यङ्गुलमितमन्तरालं मुक्त्वा प्रतिप्रस्थातृवेदिमध्यस्य समानसूत्रा प्राकृती वेदिः सभ्यावसथ्यगार्हपत्यदक्षिणाग्निसंग्रहोत्कराहवनीययुता कार्या। प्राकृत्या एतद्वेद्याः संबन्धिनो दक्षिणाग्नेर्हस्तमितमन्तरालं मुक्त्वा दक्षिणस्यां दिशि दक्षिणाग्निमध्यसमसूत्रा पितृयज्ञवेदिर्दर्शपूर्णमासवत् कार्या। इयं वेदिर्दक्षिणस्यां त्र्यरत्निविस्तारा उत्तरस्यां चतुररत्निविस्तारा त्र्यरत्निदीर्घा मध्ये दक्षिणाग्नियुता भवति। अत्र गार्हपत्याहवनीयसंग्रहोत्करा न भवन्ति। एवमुत्तरस्यां दिशि चतुष्पथे वा त्र्यम्बकेष्ट्यर्थं प्राकृती वेदिराहवनीययुता प्रकृतिवत् कार्या। इयं वेदिरुत्तरस्यां दिशि त्र्यरत्निविस्तारा दक्षिणस्यां चतुररत्निविस्तारा त्र्यरत्निदीर्घा भवति। गार्हपत्यदक्षिणाग्निसंग्रहोत्कराणामभावोऽत्रेति।

## सौमिकवेदिनिर्माणप्रकारः—

आदौ यागयोग्यां भूमिं निश्चित्य तत्र पश्चिमभागे द्वादशभिर्दशभिर्वा अरत्निभिः

परिमितं चतुरस्रं मण्डपमनुदग्द्वारं प्राग्वंशं पञ्चहस्तमितैश्चतुर्भिः स्तम्भैर्युतं सर्वत उपरि च समाच्छादितं निर्मिमीते। उपरि दक्षिणोत्तरं तृणबलिकादिनिधानम्। अयं मण्डपः प्राचीनवंशशब्देन विमितशब्देन च व्यपदिश्यते। प्राचीनः प्रागग्रो वंशो मध्यबलो यस्येति। अरत्निद्वयविस्ताराणि द्वाराणि सर्वत्र। विमितस्य पूर्वस्मादन्ताद् द्व्यरत्नि-व्यवहिते देशे शङ्कुर्देयः स आहवनीयमध्यः। आहवनीयस्थानमायामतो विस्तारतश्च हस्तमितम्। तस्मात्पश्चात् सप्तारत्निव्यवहिते देशे शङ्कुर्देयः स गार्हपत्यमध्यः। तत्र सार्धत्रयोदशाङ्गुलमितरज्ज्वा वृत्तं कार्यं स गार्हपत्यः। चतुरङ्गुलविस्तारा द्वादशाङ्गुलोत्सेधा मेखलाः सर्वत्र। आहवनीयमध्यशङ्कोरारभ्य गार्हपत्यमध्यं यावद्वर्तमानस्य भूभागस्य सप्तारत्निपरिमितत्वात् सप्तारत्निपरिमितां रज्जुं गृहीत्वा तदीयसप्तमभागेन अरत्न्यात्मकेन संयोज्य, अर्थादष्टहस्तां रज्जुं गृहीत्वा तस्या अन्तयोः पाशौ कृत्वा मध्ये च तृतीये तृतीये भागे चिह्नं कृत्वा एकं पाशं गार्हपत्यमध्यशङ्कौ आसज्य द्वितीयपाशमाहवनीयमध्यशङ्कौ आसञ्जयेत्। रज्जुमध्यवर्तिनोर्द्वयोश्चिह्नयोः पश्चिमस्थाने रज्जुं गृहीत्वा दक्षिणत आकर्षयेत्। यत्र तच्चिह्नं पतति तत्र तच्चिह्नं कृत्वा तस्मात्स्थानादुत्तरतः सार्धनवाङ्गुलव्यवहिते देशे शङ्कुर्देयः। शङ्कुस्थानं केन्द्रत्वेन परिकल्प्य यवाधिकोनविंशत्यङ्गुलमितरज्ज्वा वृत्तं कार्यम्। वृत्तमध्ये केन्द्रसंलग्ना परिधिपूर्वभागमादाय परिधिपश्चिमं यावत् सरलरेखा कार्या। रेखात उत्तरस्य भागस्य त्यागः कार्यः। वृत्तस्य दक्षिणार्धं दक्षिणाग्निस्थानम्। पूर्वोक्तयोश्चिह्नयोः पूर्वचिह्नस्थाने रज्जुं गृहीत्वा उत्तरत आकर्षणे यत्र तच्चिह्नं पतति स उत्करमध्यः। तत्र त्र्यङ्गुलेन भ्रमणं कार्यम्, एकाङ्गुलो गर्तश्च कार्यः। आहवनीयमध्यशङ्कोः पश्चात् त्र्यरत्निव्यवहिते देशे शङ्कुर्देयः। तस्माद्दक्षिणत उत्तरतश्च द्व्यरत्निव्यवहिते देशे शङ्कू देयौ, ते श्रोणी। आहवनीयपूर्वशङ्कोर्दक्षिणत उत्तरतश्च सार्धारत्नि-सार्धारत्निव्यवहिते देशे शङ्कू देयौ तावंसौ। चतुर्षु कोणस्थशङ्कुषु सूत्रार्पणाद्विषमचतुरस्रं भवति। वेदेर्दक्षिणकोणमारभ्य दक्षिणपार्श्वे द्वात्रिंशदङ्गुले देशे शङ्कुर्देयः स सङ्ग्रहमध्यः। तत्र एकोनविंशत्यङ्गुलमितकर्कटेन वेदिमध्येऽर्धवृत्तं कार्यम्, स सङ्ग्रहः। एवमुत्तरतोऽपि सङ्ग्रहः कार्यः। त्र्यङ्गुलखाता वेदिः। अखातौ सङ्ग्रहौ मतौ। गार्हपत्यस्योत्तरेऽवकाशं विहाय गार्हपत्यवत्सभ्यायतनं कर्तव्यम्। एवमाहवनीयस्योत्तरे आवसथ्यायतनं गार्हपत्यवत्। अयमेव प्राकृतिको विहारः। विशेषस्तु गार्हपत्यमध्यशङ्कोरुदक् सार्धद्व्यरत्निव्यवहिते देशे शङ्कुर्देयः स खरस्य मध्यः। तत्र चतुर्विंशत्यङ्गुलमितं द्व्यङ्गुलोत्सेधं चतुरस्रं मृदा कुर्यात् स खर इत्युच्यते। एवमेवा-

हनीयस्योत्तरतो द्वितीयः खरः कर्तव्यः। विमितस्य पश्चादुत्तरतश्च पञ्चारत्निपरिमितं परिवृतद्वयं कर्तव्यम्। तत्रैकं पत्नीशाला, अपरं दीक्षास्नानस्थानम्, घर्मपात्रपाकस्थानं च। परिवृतद्वयेऽपि उत्तरे द्वारं कार्यम्। विमितपूर्वद्वारमध्यशङ्कोः सकाशात् पूर्वस्यां दिशि द्विपदात्मकप्रक्रमत्रयव्यवहिते देशे शङ्कुर्देयः सोऽन्तःपात्यः। सोमे द्विपद-प्रक्रमेणैव मानम्। पदं तु दशाङ्गुलम्, द्वादशाङ्गुलम्, पञ्चदशाङ्गुलं वेति। दशाङ्गुल-पदपक्षे सदोमानमरत्निनैव कार्यम्। अन्तःपात्याद्दक्षिणत उत्तरतश्च पञ्चदशसु पञ्चदशसु प्रक्रमेषु शङ्कू देयौ, ते महावेदेः श्रोणी। अन्तःपात्यशङ्कोः सकाशात् पूर्वस्यां दिशि द्विपदात्मकषट्त्रिंशत्प्रक्रमव्यवहिते देशे शङ्कुर्देयः, तस्माद्दक्षिणत उत्तरतश्च द्वादशसु द्वादशसु प्रक्रमेषु शङ्कू देयौ, तावंसौ। अन्तःपात्यशङ्कोः पूर्वस्यां दिशि द्विपदात्मक-सार्धप्रक्रमव्यवहिते देशे शङ्कुर्देयः, स सदसः पश्चिमप्रान्तः। तस्माद्दक्षिणत उत्तर-तश्च नवारत्निव्यवहिते देशे शङ्कू देयौ, ते सदसः श्रोणी। सदसः पश्चिमशङ्कोः पुरस्तान्नवारत्नि-नवारत्निव्यवहिते देशे शङ्कुर्देयः, स सदसः पूर्वप्रान्तः। तस्मा-द्दक्षिणत उत्तरतश्च नवारत्निव्यवहिते देशे शङ्कू देयौ, तावंसौ सदसः। सदसः पश्चिमे पूर्वे च द्वारे कार्ये। अन्तःपात्यात्पूर्वस्यां दिशि षट्सु प्रक्रमेषु शङ्कुर्देयः, तस्माद्दक्षिणतः पञ्चारत्निव्यवहिते देशे शङ्कुर्देयः, तदौदुम्बरीस्थानम्। षट्प्रक्रमान्ते निहितशङ्कोः पूर्वस्यां दिशि एकविंशत्यङ्गुले शङ्कुर्देयः, तद्दक्षिणत एकोनत्रिंशदधिक-शताङ्गुलेषु शङ्कुर्देयः, स प्रशास्तृधिष्ण्यमध्यः। एवं पृष्ठ्यात उत्तरतो नवाङ्गुले शङ्कुर्देयः स होतृधिष्ण्यमध्यः। वेदिमध्ये वर्तमाना प्राचीरेखा पृष्ठ्या। तस्मा-दुत्तरतः षट्त्रिंशदङ्गुलान्तरालाश्चत्वारः शङ्कवो निखेयाः। ते ब्राह्मणाच्छंसि-पोतृ–नेष्टृच्छावाकधिष्ण्यानां मध्याः। शङ्कुषु अष्टादशाङ्गुलानि चतुरस्राणि चतुरङ्गुलोच्चानि स्थण्डिलानि मृदा कर्तव्यानि, ते धिष्ण्या उच्यन्ते। यूपावट-देशात्पश्चिमतः पदं त्यक्त्वा शङ्कुर्देयः, तस्मात्पश्चिमतः पञ्चारत्निव्यवहिते देशे शङ्कुर्देयः, तस्माद्दक्षिणत उत्तरतश्च सार्धद्व्यरत्नि-सार्धद्व्यरत्निव्यवहिते देशे शङ्कू देयौ, ते उत्तरवेदेः श्रोणी। एवं पूर्वस्मादंसौ। इयं दशपद्योत्तरवेदिः कार्या सा च चतुरङ्गुलोच्चा हस्तोन्नता वा। उत्तरवेदेः पश्चात् पदद्वयात्मकप्रक्रमव्यवहिते देशे हविर्धानपूर्वद्वारमध्ये शङ्कुर्देयः। तस्मात्पश्चाद्दशसु प्रक्रमेषु पश्चिमद्वारमध्यशङ्कुः। द्वारशङ्कोर्दक्षिणे उत्तरे च पदद्वयात्मकपञ्च-पञ्चप्रक्रमव्यवहिते देशे शङ्कुचतुष्टयं देयम्। एवं कृते दशप्रक्रममितश्चतुरस्रश्चतुस्तम्भो हविर्धानमण्डपः संपद्यते। हविर्धान-मण्डपे समप्रमाणानि चत्वारि कोष्ठकानि भावयित्वा आग्नेयकोष्ठस्य मध्ये चतुर्विंशत्य-

ङ्गुलमितं समचतुरस्रं प्रकल्प्य तस्य चतुर्षु कोणप्रान्तेषु प्रादेशमात्रविस्तारान् प्रादेशान्तरालान्बाहुमात्रनिम्नान् गर्तान् खनेत् । तेषामुपरि वारणानि फलकानि भूसंलग्नानि स्थपुटयेत् । एते गर्ता उपरवशब्देन व्यपदिश्यन्ते । हविर्धानस्य वायव्यकोणादुत्तरे समसूत्रतया पदद्वयात्मकचतुःप्रक्रमव्यवहिते देशे शङ्कुर्देयः · स आग्नीध्रीयस्य नैर्ऋत्यकोणः । तस्मादुत्तरतः पञ्चारत्निव्यवहिते देशे शङ्कुर्देयः स आग्नीध्रीयस्य वायव्यकोणः । तयोः शङ्क्वोरार्जवेन पुरस्तात् पञ्चारत्निव्यवहिते देशे शङ्कू देयौ । तौ आग्नेयैशानणौ । पञ्चारत्निपरिमितं चतुरस्रमाग्नीध्रीयं कार्यम् । तस्य दक्षिणे पूर्वे च द्वारे कर्तव्ये । एवमेव दक्षिणे आग्नीध्रीयस्य समसूत्रतया मार्जालीयागारं पूर्वद्वारवर्जमुदग्द्वारमाग्नीध्रीयवत्कर्तव्यम् । उभयोर्मध्ये ऽष्टादशाङ्गुलपरिमितौ धिष्ण्यौ कर्तव्यौ । महावेदेरुत्तरांसादुदक् त्रिंशदङ्गुले शङ्कुर्देयः । तस्मात्प्रत्यक् चतुस्त्रिंशदङ्गुलव्यवहिते देशे शङ्कुर्देयः स चात्वालमध्यः । द्वात्रिंशदङ्गुलपरिमितश्चतुरस्रश्चात्वालः कार्यः । उत्तरांसात्पश्चाद् द्वादशसु प्रक्रमेषु पृष्ठ्याया उत्तरतश्च चतुर्दशसु प्रक्रमेषु उत्करमध्यः । तत्र षडङ्गुलेन भ्रमणं कार्यम्, चतुरङ्गुलो गर्तश्च कार्यः । चात्वालादुत्तरतः पूर्वद्वारं पञ्चारत्निमितं शामित्रम् । हविर्धानमण्डपस्योपरि च्छदिस्त्रयेण, सदसो नवभिश्छदिर्भिरुदगग्रैराच्छादनम् । सदोमण्डपे कोणेषु स्तम्भचतुष्टयम् । महावेद्या अवशिष्टांशस्य आच्छादनं भवेन्न वा । उत्तरवेद्यास्तु आच्छादनं क्रियते । सदोहविर्धानयोः परितोऽपि च्छादनम् । त्र्यङ्गुलखाता महावेदिः ।

अयं सौमिकवेदिनिर्माणप्रकारस्तृतीयकाण्डेऽत्रैव विहितः । एवमन्योऽपि पैतृक्यादिवेदिनिर्माणप्रकारस्तत्र तत्रोक्तो बोध्यः । इत्थमनेकविधानां विधिमन्त्रार्थवादनिषेधादीनामाकरोऽयं ग्रन्थः । तत्र विधिः—प्रमाणान्तराज्ञातफलवति कार्ये पूर्वमप्रवृत्तं पुरुषं यः प्रवर्तयति स विधिरित्युच्यते । अत एव प्रवर्तना, प्रेरणा, प्रैष इत्यादयो विधेः पर्यायशब्दाः । अज्ञातज्ञापकोऽप्रवृत्तप्रवर्तकश्च विधिरिति च न्यायविदः । स च लोके आचार्यादिपुरुषनिष्ठोऽभिप्रायविशेषः । लोके हि आचार्यादिः स्वशिष्यं भृत्यं वा कञ्चित्कर्मणि प्रेरयितुमिच्छन् लिङ्घटितं वाक्यमुच्चारयति तच्छ्रुत्वा च शिष्यादिः तस्मिन् कार्ये झटिति प्रवर्तते प्रवृत्तश्च केनचित्पृष्ट आचार्यप्रेरितोऽहमिदं करोमि इति वदति सोऽपि आचार्यादिरहमेनमस्मिन्कार्ये प्रवर्त्तयामि इति अभिमनुते अनेन व्यवहारेण आचार्यादिप्रेरकनिष्ठोऽभिप्रायविशेष एव विधिप्रेरणादिशब्दाभिधेय इत्यवगम्यते । वेदे च स धर्मविशेषो विध्यादिशब्दनिष्ठ एवेति वेदस्यापौरुषेयत्वमभिदधतां मीमांसकानां सिद्धान्तः । ईश्वरकर्तृकत्वं तु

वेदस्याङ्गीकुर्वतां नैयायिकादीनां मते ईश्वरेच्छैव स इति सिद्ध्यति । तत्तत्क्रियाजन्यमपूर्वमेव नियोगशब्दाभिधेयं विधिशब्दवाच्यं मन्यन्ते मीमांसैकदेशिनः प्राभाकराः । विधेयधात्वर्थादिनिष्ठमिष्टसाधनत्वमेव विधिरिति मण्डनमिश्रप्रभृतयः केचित् । वैयाकरणा अपि मण्डनमिश्राशयमेवानुरुन्धते ।

इष्टसाधनत्वम्, बलवदनिष्टाननुबन्धित्वम्, कृतिसाध्यत्वम् इति त्रितयमपि विधिः इत्यपि केचन नैयायिकाः । एवं प्रेरणादिपदार्थस्य लिङ्बोध्यस्यैव मुख्यतो विधित्वेऽपि तद्घटितवाक्यस्य विधिरिति व्यवहारः क्रियते लोके वेदे च । तादृशो विधिश्चतुर्विधः । उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारविधिश्चेति ।

### तत्रोत्पत्तिविधिः—

येन विधिना इदं कर्म कर्तव्यम् इत्यवबोध्यते स उत्पत्तिविधिः । उत्पत्तिरत्राज्ञातज्ञापनम्, एतद्वाक्याभावे प्रमाणान्तरेण केनापि एतत्कर्मस्वरूपं नावगमितम्, अतश्च अनेनैव विधिना कर्मस्वरूपं कर्तव्यतया अवबोध्यत इति कर्मस्वरूपमात्रबोधकस्य विधेरुत्पत्तिविधिरिति व्यवहारः । यथा—'अग्निहोत्रं जुहुयात्', सोमेन यजेत' इत्यादयः ।

### विनियोगविधिः—

उत्पन्नस्य कर्मणः अर्थात् प्रमाणान्तरेणावगतस्य द्रव्यदेवतादेर्वा लोकावगतस्य अन्याङ्गतो बोधको विधिर्विनियोगविधिः । यथा—'दध्ना जुहोति' अत्र लोकावगतस्य दध्नः अग्निहोत्राङ्गत्वमनेन विधिना बोध्यत इति, अयं विधिर्विनियोगविधिरित्युच्यते । एवं 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यादावपि लोकावगताग्न्यादिदेवताया होमाङ्गत्वमवगम्यत इत्ययमपि विधिर्विनियोविधिरित्युच्यते । विनियोगोऽङ्गत्वबोधनम्, तत्सम्बन्धी विधिर्विनियोगविधिरित्यर्थः ।

### प्रयोगविधिः—

दर्शपूर्णमासादिप्रकरणेषु पृथक् पृथक् श्रुतानां प्रधानविधीनामङ्गविधीनां च एकवाक्यतासम्पादनेन अनुष्ठानस्य यथावत्सिद्धये यो विधिः कल्प्यते स प्रयोगविधिः । यथा—दर्शपूर्णमासप्रकरणे एवं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति प्रधानविधिः श्रूयते, तत्रैव 'समिधो यजति' इत्यादयोऽङ्गविधयोऽपि । तेषां क्रमेणानुष्ठानसिद्धये 'समिदाद्यङ्गविशिष्टाभ्यां दर्शपूर्णमासाभ्यां स्वर्गं सम्पादयेत्' इति यो विधिः कल्प्यते स प्रयोगविधिः । प्रयोगोऽनुष्ठानम्, तद्बोधको विधिः प्रयोगविधिः ।

### अधिकारविधिः—

विहितस्य कर्मणः फलसम्बन्धो येन विधिना बोध्यते सोऽधिकारविधिः ।

अधिकारः फलभोक्तृत्वम्, तत्सम्बन्धबोधको विधिरधिकारविधिरित्यर्थः। यथा—'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति। यः स्वर्गं कामयते स तत्सम्पादनाय अग्निहोत्रहोमं कुर्यादिति। एवं च अस्य कर्मण इदं फलमिति यो विधिर्बोधयति सोऽधिकारविधिरिति फलितम्। स विधिः पुनस्त्रिविधः—अपूर्वविधिः, नियमविधिः, परिसंख्याविधिश्चेति।

एतद्विधिप्रवृत्तेः पूर्वं यः पदार्थः प्रमाणान्तरेण सर्वथाऽज्ञातः तादृशार्थबोधको विधिरपूर्वविधिः। यथा 'व्रीहीन् प्रोक्षति', 'अग्निहोत्रं जुहोति' इत्यादिः। अत्र हि एतद्विध्यभावे प्रोक्षणादि केनापि प्रमाणान्तरेण न प्राप्तं तादृशमर्थमवबोधयत्येव विधिः।

## नियमविधिः—

एतद्विधिप्रवृत्त्यभावेऽपि विधेयार्थस्य यत्र विकल्पेन ( पाक्षिकतया ) प्राप्तिः तत्र यः प्राप्यमाणस्य अप्राप्तांशः तादृशांशप्रापको विधिर्नियमविधिः। यथा 'व्रीहीनवहन्ति' अत्र एतद्विध्यभावेऽपि अवहननस्य प्रमाणान्तरेण प्राप्तिरस्ति। कथमिति चेत्? 'यदाग्नेयोऽष्टाकपालः पुरोडाशः पौर्णमास्याममायां चाच्युतो भवति' इति वाक्येन पुरोडाशद्रव्यको यागो विहितः, तेनैव पुरोडाशसम्पादनमर्थप्राप्तम्। पुरोडाशश्च पिष्टपिण्डरूपः, पिष्टानि च तण्डुलैः सम्पाद्यानि, तण्डुलाश्च विमुक्ततुषा व्रीहय उच्यन्ते, वितुषीभावश्च अवहननेन सम्पाद्यते, एवं च अवहननमन्तरा वितुषीभावस्यासम्भवाद् अवहननं पुराडाशान्यथानुपपत्तिरूपया अर्थापत्त्या अन्वयव्यतिरेकाभ्यां चावगम्यत एव। तथापि अवघातस्य वितुषीभावसाधनत्वेनैव प्राप्तेर्वक्तव्यत्वाद् वितुषीभावसाधनानां नखविदलनादीनामपि प्राप्तिः कदाचिद् भवतीति, तत्पक्षे अवहननस्य प्राप्तिर्नास्ति। अतश्च अवहननस्य पाक्षिकी एव प्राप्तिरिति। नखविदलनदशायां या अप्राप्तिरस्ति तादृशाप्राप्तांशपूरकत्वाद् विधिरयं नियमविधिरित्युच्यते। नियमोऽप्राप्तांशपूरणम्, तद्बोधको विधिर्नियमविधिरित्यर्थः।

## परिसंख्याविधिः—

उभयोः साधनयोः प्राप्तौ इतरव्यावृत्तिफलको विधिः परिसंख्याविधिः। परिसंख्या व्यावृत्तिः तद्बोधको विधिः परिसंख्याविधिरित्यर्थः। यथा—'पञ्च पञ्चनखा भक्ष्याः' अत्र शशादिपञ्चनखपञ्चकस्य तदतिरिक्तपञ्चनखस्य च भक्ष्यत्वेन प्राप्तौ सत्यां पञ्चातिरिक्तपञ्चनखभक्षणव्यावृत्तावेव विधेस्तात्पर्यमिति परिसंख्या-

विधिः । शशादीतरपञ्चनखभक्षणव्यावृत्तिरनेन विधिना क्रियत इति विधिरयं परिसंख्याविधिः । नियमविधेरप्राप्तांशपूरणं व्यापारः, इतरनिवृत्तिस्तु आर्थिकी । परिसंख्याविधौ तु इतरनिवृत्तिरेव व्यापार इति तयोर्भेदः ।

## मन्त्रः—

अनुष्ठेयक्रियादिस्वरूपप्रकाशका मन्त्रा इत्युच्यन्ते । विधिना हि तत्तत्कर्म कर्तव्यतया विहितम् । अनुष्ठेयस्य कर्मणोऽप्रमादायानुष्ठानकाले स्मरणमपि अवश्य-कर्तव्यतया समापतति, तच्च स्मरणं तदर्थबोधकैर्मन्त्रैः क्रियत इति मन्त्राणां प्रयोग-समवेतार्थस्मारकत्वं सिद्ध्यति ।

यद्यपि उपायान्तरेणापि स्मरणं कर्तुं शक्यते तथापि अन्येनोपायेन स्मरणे कारिते तत्तत्प्रकरणपठिता मन्त्रा निरर्थका भवेयुः । नह्यन्यत् प्रयोजनं तेषामुपपादयितुं शक्यते । अतस्तदानर्थक्यभिया मन्त्रैरेव स्मरणमुपादेयं नान्येनोपायेनेति नियमः क्रियते । नियमस्वरूपं तु नियमविधिस्वरूपनिरूपणावसरे निरूपितम् । ते च मन्त्रा अनेक-प्रभेदभिन्ना अपि प्राधान्येन चातुर्विध्यभाजः । करणमन्त्रः, क्रियमाणानुवादिमन्त्रः, अनुमन्त्रणमन्त्रः, जपमन्त्रश्चेति । तत्र पूर्वं मन्त्रमुक्त्वा मन्त्रान्ते यत्र कर्म क्रियते स करणमन्त्रः, यथा—याज्यापुरोऽनुवाक्यादयः । तत्र हि यद्देवताकं हविरग्नौ प्रक्षेप्तु-मिष्यते तद्देवताकां याज्यां पठित्वा याज्यान्ते वषट्कारे कृते हविरग्नौ प्रक्षिप्यते । अतः प्रक्षेपपूर्वभावित्वात् मन्त्रोऽयं करणमन्त्र इत्युच्यते ।

## क्रियमाणानुवादी मन्त्रः—

यत्र मन्त्रोच्चारणकाल एव कर्म क्रियते स क्रियमाणानुवादी मन्त्रः क्रियमाणस्य कर्मणोऽनुवादकरणात् । यथा—यूपपरिव्याणमन्त्रः । स हि त्रिवृता रशनया अध्वर्युणा यूपे परिवेष्ट्यमाने तत्काल एव 'युवा सुवासा' इति मन्त्रोऽध्वर्युणा पठ्यते । अतः क्रियमाणकर्मसमकालमेव मन्त्रपाठात् मन्त्रोऽयं क्रियमाणानुवादी उच्यते ।

## अनुमन्त्रणमन्त्रः—

हविःप्रक्षेपाद्यनन्तरं यो मन्त्रः पठ्यते सोऽनुमन्त्रणमन्त्रः । यथा—'एको मम एका तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः त्विषिमान् भूयासम्' इति । स हि अध्वर्युणा हविःप्रक्षेपे कृते स्वेनापि 'इदमग्नये न मम' इति उद्देश्यत्यागरूपे यागेऽनु-ष्ठिते समनन्तरमेव यजमानेन पठ्यते । अतः अनु यागानन्तरं मन्त्र्यते उच्चार्यते इत्यनु-मन्त्रणमन्त्र इति व्युत्पत्त्याऽनुमन्त्रणमन्त्रत्वमस्य ।

## जपमन्त्रः—

केवलमदृष्टार्थमपि जपरूपत्वेन ये पठ्यन्ते ते जपमन्त्राः। 'मयीदमिति यजमानो जपति' इत्येवमादिः। अत्र पूर्वोक्तानां त्रयाणां प्रयोगसमवेतार्थस्मारकविधया दृष्टार्थत्वम्। अन्तिमस्य तु केवलमदृष्टार्थत्वमिति केषाञ्चिन्मतम्। जपमन्त्रस्यापि अर्थस्मारकविधमेव प्रयोजनवत्त्वमिति केचित्। एतेषामृग्यजुःसामरूपेण पुनस्त्रैविध्यम्। तत्र पादबद्धा अर्थात् छन्दोबद्धा मन्त्रा ऋचः, प्रश्लिष्टतया संहितारूपेण पठिता मन्त्रा यजूंषि, ऋचामुपरि क्रियमाणो गीतिविशेषः साम इत्युच्यते।

## अर्थवादः—

विधिसमीपे विधेयार्थस्तावकतया प्रवृत्तं वाक्यमर्थवादः। विधिर्हि यं कञ्चनार्थं विदधाति तत्र पुरुषाणां प्रवृत्तिसिद्धये तद्विषयिणीं स्तुतिमपेक्षते। अर्थवादश्च तादृशमर्थं स्तौति। यथा लोके इयं गौः क्रेतव्येत्युक्ते तावन्मात्रेण पुरुषाणां प्रवृत्तिर्न जायते, इयं बहुक्षीरा जीवदपत्या साध्वी इत्यादिस्तुतौ कृतायां समनन्तरमेव प्रवृत्तिर्जायते पुरुषाणाम्। वेदेऽपि विधिमात्रेण पुरुषाणां प्रवृत्त्यनुदयात् तत्सिद्ध्यर्थं स्तुत्या कयाचन भाव्यम्। तादृशी स्तुतिरर्थवादेन क्रियते। एवं निषेधस्थलेऽपि निषेध्यादर्थात् पुरुषाणां निवृत्तिसिद्धये निषेधोऽपि निषेध्यस्य निन्दामभिलषति। सा निन्दा च तत्सहितेनार्थवादेन क्रियते। एवं च अर्थवादस्य विधिसन्निहितस्य प्रवृत्तिजनकत्वम्, निषेधसन्निहितस्य निवृत्तिजनकत्वमिति भेदोऽपि फलितः। अस्य च चातुर्विध्यमुपलभ्यते वेदे निन्दा-प्रशंसा-परकृति-पुराकल्पभेदात्। निन्दाप्रशंसयोः स्वरूपमधुनैवोपवर्णितम्। यत्रैककर्तृकमुपाख्यानं श्रूयते सा परकृतिः। यत्र त्वनेककर्तृकमुपाख्यानं स पुराकल्पः। इतोऽप्यधिकतया भेदा उपात्ता भाष्यादौ—

> "हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः
> परक्रिया पुराकल्पो व्यवधारणकल्पना।
> उपमानं दशैते तु विधयो ब्राह्मणस्य तु" इति।

ते च भेदाः पूर्वोक्तेषु चतुर्ष्वेवान्तर्भूताः॥

वस्तुतस्तु अर्थवादानां स्तुतिनिन्दान्यतरबोधकत्वेनैव फलवत्त्वस्याप्यङ्गीकरणीयतया स्तुतिनिन्दान्यतरबोधकं वाक्यमर्थवाद इति लक्षणमनुगमय्य तेषां द्वैविध्याङ्गीकरणमेवोचितं प्रतीयते।

ग्रन्थेऽस्मिन् मुख्यतया यागो विहितो होमो दानञ्च।

## तत्र यागो नाम—

देवतोद्देशेन अग्नौ प्रक्षेपविशिष्टो द्रव्यत्यागो यागः। सर्वत्र हि यजति-चोदना-चोदितस्थले अर्थात् 'सोमेन यजेत' इत्यादौ यजिधात्वर्थः कश्चित्प्रतीयते। तस्मिन्नेव वाक्ये तदुद्देशेन किञ्चिद् द्रव्यमपि विधीयते। वाक्यान्तरेण च देवताया अपि विधानमस्ति। तत्र तां देवतामुद्दिश्य तस्य द्रव्यस्य यस्त्यागः 'इदमिन्द्राय न मम' इत्यादिरूपो मानसिकव्यापारः स एव यागपदार्थः। स च त्यागरूपत्वाद्यजमानेनैव कर्तव्यो न तु ऋत्विगादिभिः। तेषां यजमानद्रव्ये स्वत्वाभावेन त्यागकरणेऽसामर्थ्यात्।

ते च यागाः प्रकृतिभूता विकृतिभूताश्च सन्ति। तत्र 'यस्य कर्मणः सन्निधाने तदपेक्षितं सर्वमप्यङ्गजातं पठितम् अन्यतश्चाङ्गापेक्षा नास्ति सा प्रकृतिः। अथवा यतो विकृतिरङ्गानि गृह्णाति सा प्रकृतिः। यथा दर्शपूर्णमासौ। तत्र हि अन्वाधानादिब्राह्मणतर्पणान्तानि सर्वाण्यङ्गानि स्वसन्निधान एवाम्नातानि। नान्यतोऽङ्गान्यागच्छन्ति। अस्मादेव सर्वास्विष्टिषु धर्मा अतिदेशेन गच्छन्ति, अतो दर्शपूर्णमासयागः सर्वासामिष्टीनां प्रकृतिरुच्यते। इयं प्रकृतिर्द्विधा मूलप्रकृतिः, अवान्तरप्रकृतिश्च। यत्कर्म सर्वथा स्वाङ्गविषये कर्मान्तरं नापेक्षते स्वापेक्षितसर्वाङ्गविशिष्टमेव पठितं सा मूलप्रकृतिरित्युच्यते। यथा दर्शपूर्णमासादिः। यत्तु कर्म स्वाङ्गविषये किञ्चित्कर्मान्तरमपेक्षते साऽवान्तरप्रकृतिरित्युच्यते। यथाऽग्नीषोमीयः पशुः। अयं च प्रयाजानुयाजाद्यङ्गविषये[1][2] दर्शपूर्णमासावपेक्षते। सवनीयादीनां पशुयागानां यूपादिविषये

---

१ प्रयाजाः—समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति इति पञ्चभिर्वाक्यैर्विहिताः समिदादिसंज्ञकाः पञ्च यागाः प्रयाजा इत्युच्यन्ते। इमे च दर्शपूर्णमासप्रकरणे पठितास्तदङ्गभूताः। तत्र दर्शपूर्णमासयोः पञ्चैव प्रयाजाः। विकृतौ क्वचिन्नव प्रयाजा इज्यन्ते। 'एकादशप्रयाजान् यजति' इत्यादिना संख्याधिक्यमपि यत्र विहितं तत्र एतेषामेव पञ्चानामावृत्त्या संख्याधिक्यं संपादनीयम्। अत्र समित्, तनूनपात्, इट्, बर्हिः इति चत्वारि चतुर्णां प्रयाजानां नामधेयानि तानि च तन्नामकदेवतासम्बन्धं निमित्तीकृत्यैव प्रवृत्तानि। अत एव तादृशेषु चतुर्षु प्रयाजेषु समिदादयः क्रमेण देवताः, पञ्चमे परप्रयाजे यक्ष्यमाणदेवतानां स्वाहाग्निमित्यादिनामसंकीर्तनात् ता एव देवताः। यत्र तु संख्याधिक्यं तत्र देवताभेदः।

२ अनुयाजाः—दर्शपूर्णमासयागे त्रयोऽनुयाजाः। अत्र समिदादिवत् न त्रयाणां नाम श्रुतं किन्तु मन्त्रवर्णबोध्याया एव देवताया अत्रापि स्वीकारात्, तन्नाम्नैव बर्हिः, नराशंसः, स्विष्टकृत्, इति नाम्ना व्यवह्रियन्ते। इमेऽनुयाजा अपि प्रयाजवद्विकृतौ नवैकादशादिसंख्याधिक्यं भजन्ते तत्रापि प्रयाजवदेव देवतान्तरं बोध्यम्।

अपेक्षा भवति । तत्र तिस्रो मूलप्रकृतयः—दर्शपूर्णमासौ, अग्निहोत्रम्, अग्निष्टोमसंस्थाको ज्योतिष्टोमश्च । एषु च न कुतश्चित्कर्मणोऽङ्गान्यतिदिश्यन्ते ।

विकृतिः—यत्र कानिचिदेवाङ्गानि पठितानि इतराणि तु अपेक्षितानि अन्यत आनीयन्ते सा विकृतिः । यथा 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति विहिता सौर्येष्टिः । तत्र हि स्वसन्निधाने न समग्राङ्गोपदेशः किन्तु 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इत्यादिकतिपयानामेवाङ्गानाम् । इतराणि तु दर्शपूर्णमासत एवानीयन्ते ।

त्यक्तस्य हविषो विहितदेशे आहवनीयादौ यः प्रक्षेपः स होम इत्युच्यते । स द्विविधः प्रधानहोमः, अङ्गहोमश्चेति । 'अग्निहोत्रं जुहोति' इत्यादयः प्रधानहोमाः तत्तत्फलोद्देशेन विहिताः । तत्र न प्रक्षेपमात्रं धात्वर्थः किन्तु प्रक्षेपः, उद्देशः, त्याग इति त्रितयमपि ।

यद्यपि एतदंशत्रयं यागेऽप्यविशिष्टं देवतोद्देशेन द्रव्यत्यागस्य प्रक्षेपविशिष्टस्यैव यागपदार्थत्वात्, होमेऽपि देवतोद्देश्यकद्रव्यत्यागस्य सत्त्वात् । तथापि त्रयाणा-मंशानां समप्राधान्यं होमस्थले, यागस्थले तु प्रक्षेपस्याङ्गत्वम्, इतरयोः समप्राधान्य-मिति विशेषः । अयमेव प्रक्षेपो यागाङ्गभूतोऽङ्गहोम इत्युच्यते । अयमेव प्रभेदः सूत्रकारेण जैमिनिना 'यजतिचोदना द्रव्यदेवताक्रियं समुदायं कृतार्थत्वात्', 'तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात्" ( जै० सू० ४।२।२८,२९ ) इति सूत्राभ्यां प्रकटीकृतः। 'यज्ञं व्याख्यास्यामः,' 'द्रव्यं देवतात्यागः' (का० श्रौ० सू० १।२।१,२) इति कात्यायनोऽपि ।

अत्राङ्गत्वनिर्णायकानि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्या रूपाणि षट् प्रमाणान्युक्तानि, तान्यपि सुखावबोधाय प्रसङ्गत उदाह्रियन्ते ।

### तत्र श्रुतिर्नाम—

अङ्गत्वबोधने प्रमाणान्तरापेक्षां विना स्वातन्त्र्येण यः समर्थः शब्दः स श्रुति-रित्युच्यते । इयं श्रुतिस्त्रिविधा—विधात्री, अभिधात्री, विनियोक्त्री चेति । तत्र यः प्रवर्तनारूपविधिबोधकः शब्दः स विधात्रीत्युच्यते । स च लिङ्-लेट्-लोट्-तव्य-प्रत्ययादिः, तस्यैव हि विधायकत्वं शास्त्रकारैरभिमतं, यथा-यजेत, यजानि, यष्टव्यमित्यादि ।

शक्त्या स्वार्थाभिधायकः शब्दः अभिधात्रीत्युच्यते । यथा—'व्रीहीनवहन्ति' इत्यत्र व्रीहिपदं सतुषद्रव्यव्रीहिरूपस्वार्थाभिधायकम् । यद्यपि इयं श्रुतिर्लिङ्गप्रमाणेऽन्तर्भूतै-वाभाति शब्दगतस्यार्थप्रतिपादनसामर्थ्यस्यैव लिङ्गत्वात्, तथापि मन्त्रघटकीभूतपदानां यत् सामर्थ्यं तल्लिङ्गमित्युच्यते । विधिवाक्यगतस्य तस्यैव सामर्थ्यस्य श्रुतित्वमिति

बोध्यम् । अङ्गत्वबोधने या प्रमाणान्तरं नापेक्षते सा विनियोक्त्री श्रुतिस्तृतीया यथा—'दध्ना जुहोति' इत्यत्र दधिपदोत्तरं तृतीया श्रूयते सा च 'कर्तृकरणयोस्तृतीया' ( पा० सू० २।३।१८ ) इत्यनेन करणत्वे कर्तृत्वे च विहिता । करणत्वं च, साधकतमं करणम्' ( पा० सू० १।४।४२ ) इत्यनेन यत्क्रियानिर्वृत्तौ अन्तरङ्गं साधनं तदेवोच्यते । एवं च दध्नेति तृतीयया श्रुतमात्रया स्ववाक्योपात्तहोमं प्रति स्वप्रकृत्यर्थस्य दध्नः साधकतमत्वरूपकरणत्वं बोध्यते । नात्र प्रमाणान्तरमपेक्ष्यते । तच्च करणत्वमेव अङ्गत्वापरपर्यायम् इति व्यवह्रियते । इयं द्वितीयातृतीयादिविभक्तिः श्रुतिरित्युच्यते । अत एव 'निरपेक्षो रवः श्रुतिः'इति लक्षणमुक्तं मीमांसकैः । इयं विभक्तिरूपा श्रुतिः । अत्र सत्यपि सर्वासां विभक्तीनां विभक्तित्वे समाने न सर्वासां श्रुतित्वम्, किन्तु द्वितीया-तृतीया-चतुर्थी-पञ्चमी-सप्तमीरूपाणां पञ्चानामेव विभक्तीनां श्रुतित्वम् । षष्ठ्यास्तु सम्बन्धमात्रबोधिकाया न श्रुतित्वम् । प्रथमाविभक्तेस्तु केषाञ्चिन्मते श्रुतित्वं केषाञ्चिन्मते न । अत्र द्वितीयाश्रुतेरुदाहरणं 'व्रीहीन् प्रोक्षति' इति । तृतीयाश्रुतेः 'दध्ना जुहोति', 'व्रीहिभिर्यजेत' इत्यादि । चतुर्थीश्रुतेः 'विप्राय गां ददाति', 'आत्रेयाय हिरण्यं ददाति' इत्यादि । पञ्चमीश्रुतेः 'अग्नेस्तृणान्यपचिनोति', 'धान्याद्गां वारयति' इत्यादि ( लोके ) । सप्तमीश्रुतेः—यदाहवनीये जुहोति', 'पदे जुहोति' इत्यादि ।

कर्मषष्ठ्या अपि अङ्गत्वं केचनेच्छन्ति यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र इन्द्रियकामस्येति द्वितीयार्थे षष्ठी । दध्ना इन्द्रियं भावयेदिति हि तदर्थः । श्रुतेरस्या विनियोक्त्र्या अन्ये अपि द्वे विधे स्तः समानाभिधानरूपा, एकपदरूपा चेति । तत्र यः शब्दः प्रकृतिप्रत्ययाद्यात्मना अविभाज्यः सन् अनेकधर्मविशिष्टः तत्तद्धर्मावच्छिन्नत्वपुरस्कारेणानेकमर्थमभिदधाति स समानाभिधानश्रुतिरित्युच्यते । यथा 'रामेण' इत्यत्र रामप्रातिपदिकोत्तरं श्रूयमाणा एकैव विभक्तिः सा च विभागानर्हा, परन्तु तत्र विभक्तित्वम्, एकवचनत्वम्, पुंलिङ्गत्वमिति धर्मत्रयमस्ति । तत्र विभक्तित्वधर्मपुरस्कारेण करणत्वं ब्रूते, एकवचनत्वधर्मपुरस्कारेण एकत्वम्, पुंलिङ्गत्वपुरस्कारेण च पुंस्त्वमभिधत्ते । एतेषां त्रयाणामर्थानामभिधायक एक एव शब्दः समान एवेति समानाभिधानश्रुतिरित्युच्यते । एवं यजेतेत्याद्याख्यातस्थलेऽपि बोध्यम् । तत्रापि लिङ्त्वावच्छिन्नेन तेन प्रवर्तनायाः, आख्यातत्वावच्छिन्नेन तेन आर्थीभावनायाः, एकत्वावच्छिन्नेन एकत्वसंख्यायाश्च बोधनात् । अनेकेषामर्थानामभिधायकस्य शब्दस्य समानत्वात् समानाभिधानश्रुतिरिति ।

यत्प्रकृतिप्रत्ययरूपेण एकं पदं सत् प्रकृत्यात्मना कश्चिदर्थम्, प्रत्ययात्मना च कश्चिदर्थमवबोधयति सा एकपदश्रुतिः। यथा 'यजेत' इत्यत्र प्रकृत्या यागोऽभिधीयते, प्रत्ययेन च एकत्वम्। तत्र एकत्वात्मिकायाः संख्याया यागाङ्गत्वं तदेकपदश्रुत्या। इयं समानपदश्रुतिरित्यपि क्वचिदभिधीयते। अत्र विनियोक्त्र्या एव श्रुतेस्त्रिविधाया अङ्गत्वे प्रामाण्यम्। इतरयोस्तु प्रकारान्तरेण प्रामाण्यमङ्गीकृतं मीमांसकैः। इयं च श्रुतिरङ्गत्वबोधिका पूर्वमीमांसायां द्वितीयेऽध्याये निरूपिता। अन्या च काचित्पञ्चमाध्यायगोचरा। साऽनुष्ठेयपदार्थानां क्रमबोधिका। 'अथ ततः प्रथमं कृत्वा परिवीय' इत्येवमादिरूपा यथा—'अथैष ज्योतिः', 'ततो होतारं वृणीते, 'वषट्कर्तुः प्रथमभक्षः', 'वेदं कृत्वा वेदिं करोति', यूपं परिवीय सवनीयं पशुमुपाकरोति, अत्र पूर्वं किञ्चिदनुष्ठाय अनन्तरं कर्तव्यत्वेन बोधनीये पदार्थे 'अथ' 'ततः' इत्यादिशब्दः प्रयुक्तः। एवं च आनन्तर्यक्रमरूपबोधको थः शब्दः स श्रुतिपदवाच्यः पाञ्चमिकः। अतश्च तृतीयाध्यायनिरूपिता श्रुतिरङ्गत्वबोधिका। पञ्चमाध्यायगता चानन्तर्यरूपक्रमबोधिकेत्यवगन्तव्यम्।

## लिङ्गम्—

तत्तत्पदार्थगतं सामर्थ्यं लिङ्गमित्युच्यते। तथा चोक्तं 'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते'। एवं च यस्य यत्सामर्थ्यं तल्लिङ्गम्। यथा खनित्रस्य मृत्खनने सामर्थ्यम्। कुठारस्य वृक्षच्छेदने सामर्थ्यमित्यादि।

तच्च द्विधा विभक्तं शब्दगतम्, पदार्थपदार्थगतं चेति। पदार्थगतं सामर्थ्यं च अनन्तरोदाहृतम्। शब्दगतं सामर्थ्यं च तत्तदर्थप्रकाशनरूपं यथा—'अग्निर्मूर्द्धा-दिवः' ( शु० य० ३।१२ ) इति मन्त्रः अग्निं प्रकाशयति। 'इमं मे वरुण, ( शु० य० २१।१ ) इति मन्त्रो वरुणं प्रकाशयति। एवं च तत्तत्पदार्थगतं स्वमर्थमालोच्य तत्तत्कार्ये तेषां तेषां यो विनियोगः क्रियते स लिङ्गात्। यथा खनित्रस्य खननसामर्थ्यं पर्यालोच्य खनने विनियोगः क्रियते। यथा वा 'हस्तेनावद्यति' इत्यत्र हस्तस्य कठिनद्रव्यावदान एव सामर्थ्यमवगम्य चरुपुरोडाशरूपहविरवदाने एव विनियोगः क्रियते न तु मांसाद्यवदानेऽपि[1]। एवं 'स्वधितिनावद्यति' इत्यत्र स्वधितेः सामान्यतोऽवदानाङ्गत्वश्रवणेऽपि मांसावदाने एव तस्य सामर्थ्यं दृष्ट्वा तत्रैव तस्याङ्गत्वं प्रकल्प्यते न तु चरुपुरोडाशाद्यवदानेऽपि। इदमेवार्थगतं लिङ्गमित्युच्यते।

शब्दगतं तु लिङ्गमर्थप्रकाशनरूपसामर्थ्यं पूर्वमुक्तम्। तेन तत्तन्मन्त्राणां तेषु तेषु

---

१ अवदानं नाम समुदायरूपेण तत्तद्यागसिद्धये सम्पादितानां हविषां स्रुवहस्तादिना हवनार्थं युद्ग्रहणं तदुच्यते।

कार्येषु अङ्गत्वं बोध्यते। यथा 'बर्हिर्देवसदनं दामि' (मै० सं० १।१२) इति मन्त्रस्य बर्हिर्लवनप्रकाशकत्वरूपं सामर्थ्यं बुद्ध्वा अनेन मन्त्रेण दर्शपूर्णमासाङ्गभूतबर्हिर्लवनं कर्तव्यमिति बर्हिर्लवने विनियुज्यते। एवं सत्यपि लिङ्गस्य द्वैविध्ये शब्दगतस्यैव सामर्थ्यस्य लिङ्गत्वमित्यभिप्रयन्त्यर्थसंग्रहकारादयः सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयत इति वाक्यमुदाहरन्तः। परन्तु शब्दगतार्थगतयोरुभयोरेव सामर्थ्ययोर्लिङ्गत्वं ग्रन्थकारैरुक्तं तदेव युक्तमित्युत्पश्यामः।

## वाक्यम्—

'समभिव्याहारो वाक्यम्' इति सामान्यतो वाक्यलक्षणं कथयन्ति। समभिव्याहारश्च एकस्मिन्वाक्ये अङ्गित्वेन अङ्गत्वेन च अभिमतयोः पदार्थयोरुपादानं यथा— 'औदुम्बरो यूपो भवति' इत्यत्र यूपः अङ्गित्वेनाभिमतः, औदुम्बरत्वं चाङ्गत्वेन। तयोरौदुम्बरो यूपो भवतीत्येकस्मिन्वाक्ये सहोपादनमेव वाक्यम्। अत्र च लक्षणे अङ्गत्वबोधकद्वितीयातृतीयाद्यभावे सतीति निवेशनीयम्, अन्यथा 'दध्ना जुहोति' इति श्रुतिविनियोगस्थानेऽपि वाक्यविनियोगः प्रसज्येत। यद्यप्यत्रापि समभिव्याहारोऽस्त्येव तथापि तत्र दध्नेति तृतीयाविभक्तेः श्रवणात् तस्याश्च श्रुतिरूपत्वात् श्रुतेश्च सर्वापेक्षया प्रबलत्वात् प्रधानेन व्यपदेशो भवतीति न्यायेन श्रुतेरेवोदाहरणमिदं न तु वाक्यस्य। एवं च श्रुतिवाक्यस्थलयोरुभयत्रापि एकवाक्योपादानरूपसमभिव्याहारसत्त्वेऽपि तत्र यदि द्वितीयातृतीयादिसंयोगस्तदा श्रुत्या विनियोगः, तदभावे तु वाक्यीयो विनियोग इति ध्येयम्। यत्तु 'एकतिङ् वाक्यम्' इत्यपि वाक्यस्य लक्षणं क्रियते वैयाकरणैः, 'पदसमूहो वाक्यम्' इति तु नैयायिकाः, तत्सर्वमर्थावबोधकस्य लौकिकस्य वाक्यस्य लक्षणम्, न तत्राङ्गाङ्गिभावावबोधनमस्ति। पूर्वोक्तं तु वाक्यमङ्गत्वबोधकप्रमाणेष्वन्तर्गतं मीमांसकैरभिधीयते।

## एकवाक्यम्—

एकवाक्यस्य लक्षणम्—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" (जै० सू० २।१।४६) इति जैमिनिनोक्तम्, तस्यायमर्थः—वाक्यत्वेनाभिमतानां पदसमूहानां मध्ये एकस्य द्वयोस्त्रयाणां वा ततो विभागे यदि पदान्तराणि साकाङ्क्षान्येवावतिष्ठन्ते न कञ्चनार्थमबोधयितुं शक्नुवन्ति, सर्वाणि पदानि मिलितानि च सन्ति एकमेवार्थमवबोधयन्ति तदेकं वाक्यमिति, यथा 'देवस्य त्वा० गृह्णामि' (शु. य. १. १०) अत्र सर्वाणि पदानि मिलित्वा निर्वापरूपमेकमर्थं प्रतिपादयन्ति। देवस्यत्वेत्यादिनिर्वपामीत्यन्तेषु पदेषु मध्ये कस्यापि पदस्य विभागे सति इतराणि पदानि साकाङ्क्षाण्येव सन्ति,

न च कञ्चनार्थमवबोधयन्ति समुदितान्येव हि निर्वापरूपार्थप्रतिपादकानि । अतः साकाङ्क्षत्वे सति एकार्थप्रतिपादकत्वरूपमेकवाक्यत्वं सर्वैरपि शास्त्रकारै-रङ्गीक्रियते ।

## प्रकरणम्—

'उभयाकाङ्क्षाप्रकरणम्' उभयोरङ्गभावेन अङ्गित्वभावेन चाभिमतयोर्वस्तुनोर्या परस्पराकाङ्क्षा सा प्रकरणमित्युच्यते । तथा हि दर्शपूर्णमासप्रकरणे—'आग्नेयोऽष्टा-कपालः पुरोडाशः, इत्यादिवाक्यैराग्नेयादयो यागा विहिताः, तेषां च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्येन स्वर्गरूपफलार्थत्वमवगमितम् । दर्शपूर्णमासशब्दवाच्यैराग्ने-यादिभिर्यागैः स्वर्गं सम्पादयेदिति । तेषां च आकाङ्क्षा उदेति कथं स्वर्गः सम्पादनीय इति । यथा हि लोके कुठारेण छिनत्तीत्येतावदुक्ते यो नाम छेदनप्रकारं न जानाति तस्य आकाङ्क्षोदेति कथमनेन कुठारेण द्वैधीभावः सम्पादयितुं शक्यत इति तद्वदत्रापि । अत्र लोके कुठारं हस्ताभ्यामुद्यम्य कुठाराग्रभागं काष्ठोपरि पातयेत् , एवं बहुवारं निपातने कृते द्वैधीभावः सम्पद्यत इति वक्तव्यं भवति । एवमुक्ते तत्प्रकारमभिज्ञाय तथैव कुर्वन्पुरुषः काष्ठे द्वैधीभावरूपं फलं प्राप्नोति । एवं कथमेभिः स्वर्गः सम्पादयितुं शक्यत इत्याकाङ्क्षायामुदितायामन्वाधानादीनि ब्राह्मणतर्पणान्तान्यङ्गानि एवमेवा-नुष्ठेयानि; एवमनुष्ठितेषु तेषु तैरुपकृता आग्नेयादयो यागाः स्वर्गरूपं फलं जनयन्ति इत्युक्ते अन्वाधानादीन्यङ्गान्यनुष्ठातुमुद्यतः पुरुषो यथोक्तमनुतिष्ठन् तदुपकृतैर्दर्शपूर्ण-मासयागैः स्वर्गरूपं फलं प्राप्नोति । अतश्च दर्शपूर्णमासयागानां कथंभावाकाङ्क्षायाः सत्त्वाद् अन्वाधानादीनां क्रियाणां प्रयोजनाकाङ्क्षायाश्च सत्त्वाद् उभयाकाङ्क्षा वर्तते । अनया चोभयाकाङ्क्षया परस्परं सम्बन्धो भवति । अन्वाधानादिभिरङ्गकलापैर्दर्शपूर्ण-मासोपकारं भावयेत् । तदुपकृतैर्दर्शपूर्णमासयागैः स्वर्गं सम्पादयन्ति । एवं च या दर्शपूर्णमासयागानामन्वाधानादीनां च कर्मणां परस्पराकाङ्क्षा सैवोभयाकाङ्क्षारूपं प्रकरणं तेन च उभयेषामङ्गाङ्गिभावः सिद्ध्यति । इदं च प्रकरणं द्वेधा कथ्यते मीमांसकैः—महाप्रकरणम् , अवान्तरप्रकरणं चेति । तत्र प्रधानयागस्य तदङ्गानां च या परस्परमुपकार्योपकारकभावविषयिणी आकाङ्क्षा सा महाप्रकरणमित्युच्यते यथा— दर्शपूर्णमासप्रयाजयोः परस्पराकाङ्क्षा । दर्शपूर्णमासाः प्रधानानि प्रयाजाश्चाङ्गानि, तेषां च याकाङ्क्षा सा महाप्रकरणम् । तदङ्गानां च या परस्परमाकाङ्क्षा सा अवान्तर-प्रकरणम् । यथा—प्रयाजा दर्शपूर्णमासाङ्गभूताः तेषां तदङ्गानामभिक्रमणादीनां च या-ऽऽकाङ्क्षा साऽवान्तरप्रकरणम् । अभिक्रमणं नाम—प्रयाजहोमकाले एकैकामाहुतिं

प्रति किंचित् किंचिदग्रे पदनिक्षेपणरूपं गमनम्। इतिकर्तव्यता नाम—कथमिदं कर्तव्यमित्याकारिका याऽऽकाङ्क्षा सोच्यते। 'पचेत्' इत्युक्ते कथमहं पचेयमित्याकाङ्क्षोदेति अस्या एवेतिकर्तव्यतायाः कथम्भावाकाङ्क्षा, इत्थम्भावाकाङ्क्षा, प्रकरणविशेषाकाङ्क्षा इत्यादिव्यवहार इति।

## स्थानम्—

अन्यतराकाङ्क्षा स्थानम्। अङ्गत्वेनाङ्गित्वेन च सम्बन्धयोग्ययोः पदार्थयोरन्यतरस्य स्वापेक्षितोपकारकलाभेन उपकार्यलाभेन वा निवृत्ताकाङ्क्षत्वे सति अन्यतरस्य तादृशाकाङ्क्षासत्त्वे इतरस्यापि आकाङ्क्षामुत्थाप्य यः परस्परं सम्बन्धः स स्थानमित्युच्यते। यथा—'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत् स्वर्गकामः' इत्यनेन काचनेष्टिः नक्षत्रेष्टिसंज्ञका विहिता। सा च औषधद्रव्यका दर्शपूर्णमासविकृतिः। तस्याश्च साध्याकाङ्क्षायां स्ववाक्योपात्तं स्वर्गादिकं साध्यत्वेनान्वेति। साधनाकाङ्क्षायां समानपदोपात्तो धात्वर्थः करणत्वेनान्वेति। तत इतिकर्तव्यताकाङ्क्षोदेति। उदितायां च तस्यां तच्छामकत्वेन स्वप्रकृतिभूताद् दर्शपूर्णमासयागात् प्रयाजादयो धर्मा अतिदिश्यन्ते। यद्यपि सौर्ययागसन्निधावपि उपहोमसंज्ञकाः केचन होमाः पठिताः। ते च सौर्ययागेन सह इतिकर्तव्यतया सम्बद्धुं शक्नुवन्ति। तथापि सौर्ययागो न तान् प्रथमतः स्वाकाङ्क्षाशामकत्वेन परिगृह्णाति, तेषां प्रथमतया स्वसन्निधावेव प्रठितत्वेन ततः पूर्वं क्वचिदपि तैरुपकाराजननात्, स्वापेक्षितोपकारजननेऽनिश्चितत्वात्, निश्चिततया कृतोपकाराणि प्रयाजादीनि प्राकृतान्येव स्वोपकारजनकत्वेनापेक्षन्ते, तेषां तु प्रकृतावुपकारसम्पादनेन कृतार्थत्वाद् आकाङ्क्षा विनिवृत्ता। शान्ताकाङ्क्षाणामपि तेषां पुनराकाङ्क्षामुत्थाप्य सौर्ययागेन साकं सम्बन्धः सम्पाद्यते। अतश्च सौर्ययागस्य साकाङ्क्षत्वात् प्रयाजादीनां च निराकाङ्क्षत्वाद् अन्यतराकाङ्क्षैव वर्वर्ति, नोभयाकाङ्क्षा इति विकृतिप्राकृताङ्गयोर्योऽङ्गाङ्गिभावेन सम्बन्धः सोऽन्यतराकाङ्क्षारूपस्थानप्रमाणेनैव। एवं प्राकृताङ्गसम्बन्धेन विनिवृत्ताकाङ्क्षायां प्रकृत्यां तस्याः पुनराकाङ्क्षामुत्थाप्य स्वसन्निधिपठिताङ्गैः साकं यः सम्बन्धः क्रियते सोऽप्यन्यतराकाङ्क्षयैव। विकृतिसन्निधौ पठितान्युपहोमादीनि अनन्यप्रयोजनानि स्वप्रयोजनलाभार्थं विकृतिसम्बन्धमपेक्षन्ते। विकृतिस्तु प्राकृतैरङ्गैर्निराकाङ्क्षा तिष्ठति। एवं निराकाराकाङ्क्षया प्रकृत्या सह साकाङ्क्षाणामुपहोमानां विकृतेराकाङ्क्षामुत्थाप्य यः सम्बन्धः सोऽप्यन्यतराकाङ्क्षारूपस्थानप्रमाणेन।

एवं च यत्राङ्गाङ्गिनोरुभयोरपि स्वारसिकैवाङ्क्षा प्रकरणम्। यत्र तु द्वयो-

रन्यतरत्र प्रकारान्तरेण शान्ताकाङ्क्षत्वम्, अन्यतरस्य च साकाङ्क्षत्वम्, तत्र यो निराकाङ्क्षस्यापि आकाङ्क्षामुत्थाप्य इतरेण सम्बन्धः स स्थानमिति। इदमेव च क्रम इत्यप्युच्यते। इदमङ्गत्वग्राहकेषु प्रमाणेषु पञ्चमं प्रमाणम्। इदमेव सादेश्यमित्युच्यते। सादेश्यं च समानदेशवत्त्वम्। समानदेशश्च पाठतोऽपि संभवत्यनुष्ठानतोऽपि। अत इदं पाठसादेश्यमनुष्ठानसादेश्यमिति द्विधा विभक्तम्। तत्र पाठतः सादेश्यं यथा 'दैव्याय कर्मणे शुन्धध्वं देवयज्यायै' (शु० य० १।) इति मन्त्रः सान्नाय्ययागसन्निधौ पठित इति कृत्वा सान्निध्यपाठात् सान्नाय्यपात्राङ्गं भवति। अनुष्ठानेन ययोः पदार्थयोरेकस्मिन्काले एकस्मिन्देशे वाऽनुष्ठानं तयोरङ्गाङ्गिभावोऽनुष्ठानसादेश्यात्। यथा सोमयागाङ्गभूतोऽग्नीषोमीयपशुयागो द्वितीयदिनकर्तव्यस्य सोमक्रमस्य सन्निधौ पठितः, तथापि तत्र पाठे औपवसथ्याख्ये चतुर्थेऽहनि अनुष्ठानं तस्य विहितम्, तद्दिनकर्तव्यताङ्गमध्ये उपाकरणनियोजनादयः पदार्थाः पठिताः, तेषां च तद्दिन एवानुष्ठानं कर्तव्यम्। तस्मिन्नेव च दिनेऽग्नीषोमीयः पशुरनुष्ठेय इति तेषां पदार्थानामग्नीषोमीयपशुयागाङ्गत्वमनुष्ठानसादेश्यात् समानदेशेऽनुष्ठानात्। अत्र देशशब्देन कालोऽभिधीयते एकस्मिन्काले चतुर्थेऽहनीति यावत्। पाठसादेश्यमपि द्विधा विभक्तम्—यथाक्रमपाठः, सन्निधिपाठश्चेति। यथाक्रमपाठः—प्रथमं पठितस्य यागस्य प्रथमपठितो मन्त्रोऽङ्गम्। द्वितीयं पठितस्य यागस्य द्वितीयपठितो मन्त्रोऽङ्गमित्येवं रीत्या। सन्निधिपाठस्तूदाहृत एव।

### समाख्या—

इदमङ्गत्वबोधने षष्ठं प्रमाणम्। समाख्या संज्ञा। सा च यौगिकी गृह्यते तयाऽप्यङ्गत्वं बोध्यते। यथा—आध्वर्यवम्, औद्गात्रम्, हौत्रमित्यादिसंज्ञया तत्तद्भागपठितेषु मन्त्रेषु पदार्थेषु वाऽध्वर्य्वादीनां कर्तृतयाऽङ्गत्वम्। रूढसंज्ञा तु लिङ्गेऽन्तर्भवति इति। अलं विस्तरेण।

अस्मिन् संस्करणे पाठकसुखाय वर्णाः स्थूलाः सुस्पष्टा योजिताः। काण्डादौ काण्डप्रतिपाद्या विषयाः समुल्लिखिताः। अध्यायादौ तद्विषयाः। प्रकरणादौ प्राकरणिका विषयाः शीर्षके लिखिताः। भूमिकाविस्तारहेतुर्विषयानुक्रमणिका च पृथङ् निवेशिता। अतः पूर्वं प्रतिज्ञातादपि विस्ताराद्नावश्यकतया विरम्यते।

मन्येऽनेन संस्करणेन पाठकानां स्यादेव विशेषलाभ इति। एवं विश्वेश्वरकृपया समाप्तमुद्रणस्यास्य ग्रन्थस्य सम्पादनकार्ये विषयसूची-कण्डिकासूचीनिर्माणादौ च यदस्मत्प्रियशिष्येण गोयनकासंस्कृतमहाविद्यालयेऽच्युतग्रन्थमालासहायकसम्पादकेन वेदाचार्येण श्रीवंशीधरशर्मणा सुबहुपरिश्रान्तमुपकृतं च तत्सर्वथा प्रशंसनीयम्।

अतस्तस्मै सकलकल्याणास्पदायाशीःपरम्परां प्रयुञ्जे । अथ च प्रार्थये भगवन्तं यज्ञ-पुरुषमेतादृशकार्योद्यतं श्रीगौरीशङ्करगोयनकाश्रेष्ठिनं सपुत्रमायुष्मन्तं करोत्विति । अन्ततो विबुधवरानधीतिनश्च सानुनयमभ्यर्थये—ग्रन्थमिमं यथावदुपयुज्य सफल-यन्तु सम्पादकीयं परिश्रमं वर्धयन्तु च प्रकाशयितुरतुलमुत्साहमिति ।

काशी<br>वसन्तपञ्चमी<br>१९९७

श्रीविद्याधरशर्मा<br>( महामहोपाध्यायः )

* श्रीगुरुः शरणम् *

# सम्पादकीयम्

इह खलु सम्पादनीयेषु धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु प्रथमो धर्म एवेतरमूलस्तम्भतया समाद्रियते धार्मिकप्रवरैः। सोऽयं धर्मो वेदप्रतिपाद्य इति वेद एव सर्वस्वं नामास्तिकधुरन्धराणाम्। वेदशब्दो हि विद्धातोः करणार्थे घञ्प्रत्यये कृते निष्पद्यते। वेद्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया येन स वेद इति। सायणाचार्यस्त्वाह 'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः' इति।

तथा च स्मर्यते—

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥" इति।

इत्थं हि प्रत्यक्षादिभिरन्यैश्च प्रमाणैर्योऽर्थो नावगम्यते स्वर्गादिरूपश्रेयःसाधनीभूतं तमर्थं यः शब्दसमुदाय आवेदयति स एव वेदशब्दार्थ इति प्रत्येतव्यम्।

तत्र 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति हि अद्यावधि प्रसिद्धिरस्ति। तत्र सन्ति बहूनि प्रमाणि तेषु कानिचिदिह निर्दिश्यन्ते—

'मन्त्रब्राह्मणमित्याहुः' (बौ० गृ० २।६।२)। 'आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च' (कौ० सू० १।३)। 'मन्त्रब्राह्मणं वेद इत्याचक्षते' (बौ० गृ० २।६।३)।

'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आप० श्रौ० सू० २४।१।३१। सत्या० श्रौ० सू० १।१।७। कात्यायन परि० प्र० सू०। बौधा० गृ० सू० २।६।३)।

'त्रिगुणं पठ्यते यत्र मन्त्रब्राह्मणयोः सह।
यजुर्वेदः स विज्ञेयः शेषाः शाखान्तराः स्मृताः॥' (च० व्यू०)।

'ब्राह्मणं ब्रह्मसंघाते वेदभागे नपुंसकम्' (मे० को०)। इत्यादिवचनैर्बहुभिराचार्यैर्ब्राह्मणभागस्य वेदत्वमेवाङ्गीकृतम्।

अत एव 'तच्चोदकेषु मन्त्राख्या' (पू० मी० २।१।३२) इति मन्त्रलक्षणमाचक्षाणस्य जैमिनिमुनेः 'शेषे ब्राह्मणशब्दः' (पू० मी० २।१।३३) इति ब्राह्मणलक्षणे मन्त्रभागादवशिष्टे वेदैकदेशे ब्राह्मणशब्द इत्यर्थकं 'शेषे' पदं सङ्गच्छते। अतस्तन्मतेऽप्युभयोरेव वेदत्वम्। अन्यथा 'शेषे' पदं व्यर्थं स्यात्।

'मन्त्रब्राह्मणयोराहुर्वेदशब्दं महर्षयः' (षड्गुरुशिष्यः)।

'मन्त्रब्राह्मणात्मकत्वं तावद्वेदस्यादुष्टं लक्षणम्' इति सायणः।

'मन्त्रब्राह्मणयोर्वेदनाम प्रोक्तमृगादिषु' (शु० नी० ४।२७१)।

'विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात्' ( पू० मी० २।१।३० ) । विधिर्ब्राह्मणम्, तेन विधिमन्त्रयोरेकार्थता सिद्धा । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' ( पू० मी० १।२।१ ) इत्यर्थवादखण्डनात्मकपूर्वपक्षसूत्रेऽपि जैमिनिमहर्षिणा ब्राह्मणस्य वेदत्वं निर्दिष्टम्, यतोऽर्थवादः प्राधान्येन ब्राह्मणस्यैव विषयः ।

तथा च जैमिनिसूत्राणां प्रख्यातव्याख्याता तत्र भवान् शबरस्वाम्यप्याह—'मन्त्राश्च ब्राह्मणं च वेदः' ( पू० मी० १।२।३३ ) । अथ च 'वेदोऽखिलो धर्ममूलम्' ( मनु० २।६ ) इति वचनात्सकलस्य वेदस्य धर्ममूलता निर्दिष्टा । धर्मस्य लक्षणं च—'चोदनालक्षणोऽर्थो धर्मः' इत्यादि । 'अष्टवर्षं ब्राह्मणमुपनयीत' 'अहरहः सन्ध्यामुपासीत' 'स्वर्गकामो यजेत' इत्यादिविधिवाक्यान्येव चोदना । मन्त्रभागे तु केवलं प्रार्थनैव दृश्यते न विधयः । विधीनां तु ब्राह्मणभागे एव सत्तास्ति । 'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः' ( मनु० २।१३ ) इति मनुवचने श्रुतिशब्देन ब्राह्मणभागस्यैव ग्रहणं धर्मस्य तस्मिन्नेव सत्त्वात् । अनेनापि ब्राह्मणभागस्य वेदत्वं सिद्धम् । 'ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वारौ'[1] ( प्र० परि० ८ ) इति ब्राह्मणे स्वरविधानाद् ब्राह्मणभागस्य वेदत्वं सिध्यति । स्वरनियमश्च वेद एव, तथा चोक्तम्—'स्वरसंस्कारयोश्छन्दसि नियमः' ( शु० प्राति० १।१ ) । अत एव मन्त्रभागो ब्राह्मणभागश्चोभावेव वेदशब्देनोच्येते प्राक्तनैर्विद्वद्भिर्गृह्येते च ।

तत्र मन्त्रभागे यथर्ग्वेदस्य प्राधान्यमेवं ब्राह्मणभागे माध्यन्दिनीयशतपथब्राह्मणस्यैव प्राधान्यम् । कथं चास्य प्रधानता इति तु श्रीगुरुचरणैः प्राक्कथने दर्शितमेव ।

ऋग्यजुःसामाथर्वभेदेन वेदस्य चातुर्विध्यं प्रसिद्धम् । एवं चतुर्धा विभक्ता अपि वेदा बहुशाखाभिन्नाः सन्ति । तथा चाह भगवान् पतञ्जलिः—

'एकशतमध्वर्युशाखाः' सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदः' ( म० भा० पस्पशा० ) इति ।

'सहस्राध्वा सामवेदो यजुरेकशताध्वकम् ।
एकविंशत्यध्वयुक्तमृग्वेदमृषयो विदुः ॥
नवाध्वाऽथर्वणोऽन्ये तु प्राहुः पञ्चदशाध्वकम्' ( षड्गुरुशिष्यः ) ।

तथा च—

एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा ।
शाखानां तु शतेनाथ यजुर्वेदमथाकरोत् ॥
सामवेदं सहस्रेण शाखानां च विभेदतः ।
आथर्वणमथो वेदं बिभेद नवकेन तु ॥

( कूर्मपुरा० ४९।५१–५२ )

---

1 छान्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः ।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥

इत्यनेन तु केषाञ्चिन्मतेऽथर्ववेदस्य पञ्चदशशाखावत्त्वमपि सिध्यति। एवं प्रतिवेदं बहुशाखानां नामानि ग्रन्थान्तरेषु श्रूयन्ते तासु कतिचिदेवोपलभ्यन्ते कतिचिच्च कालवशाद्विनष्टाः।

एवं प्रतिशाखं ब्राह्मणं भवेदिति न्यायेनानुमीयते यद् बहूनि ब्राह्मणान्यासन् तेषु कतिचिदिह निर्दिश्यन्ते—

## उपलभ्यमानानि ब्राह्मणानि—

तत्रर्ग्वेदे—

( १ ) ऐतरेयब्राह्मणम्—अत्र ब्राह्मणे अष्टौ पञ्चिकाः, चत्वारिंशदध्यायाः, पञ्चाशीत्युत्तरद्विशतं खण्डाः सन्ति। तत्रादितः पञ्चिकाषट्के सोमयागनिरूपणम्। अवशिष्टे पञ्चिकाद्वये च राज्याभिषेककथनम्।

( २ ) शाङ्खायनब्राह्मणम्—अत्र त्रिंशदध्यायाः सन्ति।

अस्यैव कौषीतकीतिनामान्तरं केचन मन्यन्ते। केचिच्च तस्य पृथगस्तित्वं स्वीकुर्वते।

## यजुर्वेदे—

( १ ) माध्यन्दिनीयशतपथब्राह्मणम्—शतं पन्थानो यस्येति व्युत्पत्त्याऽस्य शतपथाभिधेयता। के च ते पन्थान इति जिज्ञासायां पथिशब्दस्यात्राध्यायपरत्वमङ्गीकार्यम्। अस्ति ह्यस्मिन्नध्यायशतकम्। अत्र चतुर्दशकाण्डानि, शतमध्यायाः, अष्टषष्टिः (६८) प्रपाठकाः, अष्टात्रिंशदुत्तरचतुःशतं (४३८) ब्राह्मणानि, चतुर्विंशत्युत्तरषट्शताधिकसप्तसहस्रं (७६२४) कण्डिकाश्च सन्ति। तत्र प्रथमकाण्डे—दर्शपूर्णमासयागः। द्वितीयकाण्डे—अग्निहोत्रम्, पिण्डपितृयज्ञः, दाक्षायणयज्ञः, नवान्नेष्टिः, चातुर्मास्यानि च। तृतीयचतुर्थकाण्डयोः—सोमयागः। पञ्चमकाण्डे—वाजपेयराजसूयौ। षष्ठादिदशमान्त (६–१०) काण्डेषु चयनम्। एकादशे—पशुबन्धः, पञ्चमहायज्ञाः, मित्रविन्देष्टिः, दर्शपूर्णमासादिशेषश्च। द्वादशे—द्वादशाहसत्रम्, संवत्सरसत्रम्, सौत्रामणी च। त्रयोदशे—अश्वमेधः, पुरुषमेधः, सर्वमेधः, पितृमेधश्च। चतुर्दशे—प्रवर्ग्यः, बृहदारण्यकं च।

( २ ) काण्वशतपथब्राह्मणम्—अत्र सप्तदश काण्डानि, चतुरधिकमेकशतम् (१०४) अध्यायाः, पञ्चत्रिंशदधिकचतुःशतं (४३५) ब्राह्मणानि, षडुत्तराष्टशताधिकषट्सहस्राणि (६८०६) कण्डिकाश्च विद्यन्ते।

अत्रापि माध्यन्दिनीयशतपथोक्ता एव विषयाः किञ्चिद्व्यत्ययेन प्रतिपादिताः। यथा प्रथमकाण्डे—अग्निहोत्रम्, पिण्डपितृयज्ञः, दाक्षायणयज्ञः, चातुर्मास्यानि। द्वितीयकाण्डे—दर्शपूर्णमासेष्टिः। तृतीयकाण्डे—अग्निहोत्रार्थवादः, दर्शपूर्णमासार्थवादः। चतुर्थकाण्डे—सोमयागः। पञ्चमकाण्डे—सोमयागशेषः। षष्ठकाण्डे—

वाजपेयः। सप्तमकाण्डे—राजसूयः। अष्टमकाण्डे—उखासम्भरणम्। नवमादिद्वादशान्तकाण्डेषु—चयनम्। त्रयोदशे काण्डे—आधानकालः, पथिकृत्, शंयुवाकः, पत्नीसंयाजाः, पशुबन्धः। चतुर्दशे—सौत्रमणी। पञ्चदशे—अश्वमेधः। षोडशे—प्रवर्ग्यः। सप्तदशे—बृहदारण्यकम्।

( ३ ) तैत्तिरीयब्राह्मणम्—अत्र त्रीण्यष्टकानि, क्वचिदष्टकस्थाने काण्डशब्दोऽपि प्रयुक्तः। अष्टाविंशतिः प्रपाठकाः, त्रिपञ्चाशदुत्तरत्रिशतम् (३५३) अनुवाकाश्च सन्ति।

## सामवेदे—

( १ ) ताण्ड्यब्राह्मणम्—अत्र पञ्चविंशतिः प्रपाठकाः, सप्तचत्वारिंशदधिकत्रिशतं (३४७) खण्डाश्च वर्तन्ते। सायणाचार्यस्तु प्रपाठकस्थानेऽध्यायशब्दं प्रयुक्तवान्। अस्मिन् ह्यग्निष्टोमसंस्थाकं ज्योतिष्टोममारभ्य सहस्रसंवत्सरपर्यन्ताः सर्वे सोमयागाः प्रतिपादिताः।

( २ ) षड्विंशब्रा०—अत्र पञ्च प्रपाठकाः, अष्टाचत्वारिंशत् खण्डाश्च सन्ति।

( ३ ) मन्त्रब्राह्म०—अस्मिन्द्वौ प्रपाठकौ, षोडश खण्डाश्च सन्ति।

( ४ ) दैवतब्राह्म०—अस्मिंस्त्रयः खण्डाः, द्विषष्टिः कण्डिकाश्च सन्ति। अत्र विशेषतश्छन्दसामेव वर्णनम्।

( ५ ) आर्षेयब्रा०—अत्र त्रयः प्रपाठकाः, द्व्यशीतिः खण्डाश्च सन्ति। अस्मिन्ब्राह्मणे साम्नामार्षानुक्रमणी।

( ६ ) सामविधानब्रा०—अत्र त्रयः प्रपाठकाः, पञ्चविंशतिः खण्डाश्च सन्ति। अस्मिन्नभिचारादिकर्मणां वर्णनम्।

( ७ ) संहितोपनिषद्ब्राह्म०—अत्रैकः प्रपाठकः पञ्च खण्डाश्च।

( ८ ) वंशब्राह्म०—अत्र खण्डत्रयमस्ति। तत्र सामवेदाचार्याणां वंशपरम्परा निरूपिता।

( ९ ) जैमिनीयब्राह्म०—अत्र द्व्यशीत्युत्तरैकादशशतं (११८२) खण्डा विद्यन्ते। अस्यैव तलवकारब्राह्मणमित्यपि नामान्तरम्।

( १० ) जैमिनीयार्षेयब्रा०—अत्र चतुरशीतिः खण्डाः सन्ति।

## अथर्ववेदे—

( १ ) गोपथब्राह्मणम्—अत्रास्ति पूर्वभाग उत्तरभागश्चेतिभागद्वयम्। पूर्वभागे पञ्च प्रपाठकाः, उत्तरभागे च षट् प्रपाठकाः सन्ति। 'तत्र गोपथः शतप्रपाठकं ब्राह्मणमासीत्। तस्यावशिष्टे द्वे ब्राह्मणे पूर्वमुत्तरं च' ( आ० च० ) अनेन त्वनुमीयते यद्ब्राह्मणमिदं पुरा बृहदासीत्।

## ग्रन्थान्तरेषु नामत उपलभ्यमानानि ब्राह्मणानि यथा—

( १ ) चरकब्राह्मणम् । ( २ ) श्वेताश्वरब्रा० । ( ३ ) काठकब्रा० । ( ४ ) मैत्रायणीयब्रा० । ( ५ ) जाबालब्रा० । ( ६ ) खाण्डिकेयब्रा० । ( ७ ) औखेयब्रा० । ( ८ ) हारिद्रविकब्रा० । ( ९ ) आह्वरकब्रा० । ( १० ) कङ्कतिब्रा० । ( ११ ) गालवब्रा० । ( १२ ) तुम्बरुब्रा० । ( १३ ) आरुणेयब्रा० । ( १४ ) पैङ्गायनिब्रा० । ( १५ ) सौलभब्रा० । ( १६ ) शैलालिब्रा० । ( १७ ) पराशरब्रा० । ( १८ ) माषशराविब्रा० । ( १९ ) कापेयब्रा० । ( २० ) अन्वाख्यानब्रा० । ( २१ ) भाल्लविब्रा० । ( २२ ) शाट्यायनब्रा० । ( २३ ) कालबविब्रा० । ( २४ ) रौरुकिब्रा० ।

एतेषां ब्राह्मणानां ग्रन्थान्तरेषु नामान्येव श्रूयन्ते । आकृतितस्त्वेतानि नोपलभ्यन्ते । एवमन्यान्यपि बहूनि ब्राह्मणान्यासन्नित्यनुमीयते ।

सम्पूर्णमिदं माध्यन्दिनीयं शतपथब्राह्मणमद्यावधि स्थानद्वय एव मुद्रितम् । अजमेरनगर्यां जर्मनप्रदेशे च ।

तत्र पुस्तकद्वये बह्व्योऽक्षन्तव्या अशुद्धयो दरीदृश्यन्ते । अतोऽच्युतग्रन्थमाला-व्यवस्थापकैः संशुद्धं संस्करणं प्रकाशयितुमेतत्सम्पादनकार्ये मत्सतीर्थ्यो वेदाचार्यः श्रीचन्द्रधरशर्मा नियोजितः । स चास्य प्रथमभागं सम्पाद्य द्वितीयभागारम्भ एव पञ्चत्वं गतः । पूर्ववत्तत्कार्यं संचालयितुं कृतमतिना मयास्य शोधनसमये पुस्तक-चतुष्टयात्साहाय्यमलायि ।

तत्र प्रथममादर्शपुस्तकं हस्तलिखितमतिप्राचीनं च पं० श्रीमदमरनाथशास्त्रिणाम् ।
द्वितीयं हस्तलिखितमस्मदाराध्यश्रीगुरुचरणानाम् ।
तृतीयं लिपजिग् ( जर्मन ) नगरे मुद्रितम् ।
चतुर्थम् अजमेरनगर्यां मुद्रितम् ।

### प्रणतयः

यैराबाल्याच्छुकशावक इवाहं स्नेहाल्लालितः पालितोऽध्यापितश्च येषां चाशिषैवैतत्सम्पादनकार्यक्षमोऽभवं तेषामाराध्यचरणानां सर्वतन्त्रस्वतन्त्राणां साक्षाद्वेद-मूर्तीनां विद्वन्मूर्द्धन्यानां महामहोपाध्यायादिविविधविरुदभाजामस्मद्गुरूणां पण्डित-प्रवरश्रीविद्याधरशर्मगौडमहोदयानां चरणसरोरुहेषु सादरं सविनयं च समर्पयामि प्रणतिततीः ।

### कृतज्ञता

यैरतिप्राचीनहस्तलिखितादर्शपुस्तकप्रदानेनानुगृहीतस्तेषां पण्डितप्रवरश्रीमदमर-नाथदीक्षितमहोदयानां कृते च चिरकृतज्ञतां प्रकटयामि ।

## धन्यवादाः

ये च मध्ये मध्ये स्वसम्मतिप्रदानेनोपकृतवन्तस्तेभ्योऽच्युतग्रन्थमाला-विश्व-नाथपुस्तकालययोरध्यक्षेभ्यः साहित्याचार्यपण्डितप्रवरश्रीकृष्णपन्तशास्त्रिभ्यो वितरामि धन्यवादाननेकान् ।.

यत्र तत्रोपलब्धान् पाठभेदानधो निवेश्य दुरूहस्थलेषु च टिप्पणमपि संयोज्याऽत्र प्रतीकनिर्दिष्टानां तत्तद्वेदस्थमन्त्राणां स्थानसङ्केतश्चाधो निवेश्य प्रकाश्यतेऽयं माध्यन्दि-नीयशतपथब्राह्मणद्वितीयभागः ।

माध्यन्दिनीयशतपथब्राह्मणकण्डिकानामकाराद्यनुक्रमणिका चान्ते निवेशिता, या चाद्यावधि कुत्रापि न मुद्रितासीत् । अत आशासे सर्वमेवैद्वदुपयोगि सम्पत्स्यते स्वाध्यायशीलेभ्यो वैदिकधर्मावलम्बिभ्यः ।

एवं भूयांसमायासमङ्गीकृत्य सविशेषावधानं संशोधितेऽप्यत्र ग्रन्थे मदीयाल्प-मतिदोषाद् दृष्टिदोषादक्षरयोजकमुद्रकादिदोषाद्वा यत्र क्वचिदुपलब्धा अशुद्धीरुपेक्षमाणा गुणैकपक्षपातिनो विपश्चिद्वर्य्या मात्सर्य्यमुत्सार्य्य स्वयमेवात्र नयनार्पणायासमङ्गीकृत्य वेदसुधासौहित्यं भजन्तः करिष्यन्त्येव मामकीनं परिश्रमं सफलमिति सुदृढमवधारयन् प्रसादयामि स्वतः प्रकाशं शाश्वतं श्रीवेदपुरुषमनेन व्यापारेणेति निवेदयति—

अधिकाशि
महाशिवरात्रिः १९९७
सोमवासरः

म० म० पण्डितप्रवरश्रीविद्याधरशर्मणामन्तेवासी
वेदाचार्यः श्रीबंशीधरमिश्रगौडः

# माध्यन्दिनीयशतपथब्राह्मणद्वितीयभाग·

## विषयसूची

—❀—

### सप्तमं काण्डम्

**प्रथमाध्यायस्य प्रथमब्राह्मणे**—गार्हपत्यचयनम्—तत्र गार्हपत्यचितिस्थाने पतितानां तृणपर्णादीनां पलाशशाखयापसारणम्, तत्स्थाने क्षारमृत्तिकानिपातनम्, सिकतानिवापः, एकविंशत्या परिश्रिद्भिः परिश्रयणम्, एकविंशत्येष्टकाभिश्चयनम्, तत्रोख्याग्नेः स्थापनादि च ।

**द्वितीयब्राह्मणे**—प्रजापतिशरीरविश्लेषप्रतिपादनादि । गार्हपत्यस्य त्रिचितित्वमेकचितित्वं वा, चितिधिष्ण्याद्यर्थवादश्च ।

**द्वितीयाध्यायस्य प्रथमब्राह्मणे**—आख्यायिकया प्रयोजनप्रतिपादनपुरःसरं नैर्ऋत्यां तिसृणां नैर्ऋतीष्टकानामुपधानम्, शिक्यादीनां प्रक्षेपः, शालाद्वार्योपस्थानञ्चेति ।

**द्वितीयब्राह्मणे**—औदुम्बरे सीरेऽनडुहां योजनम्, क्षेत्रकर्षणम्, अनडुहां सीराद्विमोचनम्, तेषां दानञ्चेति ।

**तृतीयब्राह्मणे**—कुशस्तम्बोपधानम्, अग्निहोमादिकम्, कुशस्तम्बोपरि पञ्चगृहीताज्यहोमश्च ।

**चतुर्थब्राह्मणे**—कर्षणक्रमेण सीतासूदकप्रक्षेपः, सर्वौषधवपनश्च ।

**तृतीयाध्यायस्य प्रथमब्राह्मणे**—साग्निचित्ये क्रतौ सोमक्रयणकालविधानम्, आतिथ्येष्टिः, आहवनीयपरिश्रितोऽभिमन्त्रणम्, तत्र पुष्करपर्णोपधानम्, लोगेष्टकोपधानम्, उत्तरवेदिनिर्माणम्, इष्टकाप्रोक्षणञ्च ।

**द्वितीयब्राह्मणे**—आनडुहे चर्मणि प्रथमचितीष्टकानामुपधानादि, इष्टकाप्रोक्षणम्, अग्निक्षेत्राश्वरोहणादि च ।

**चतुर्थाध्यायस्य प्रथमब्राह्मणे**—अग्निग्रहणम्, सत्यसामगानम्, कुशस्तम्बपुष्करपर्णोपधानम्, रुक्मसुवर्णपुरुषोपधानम्, सर्पनामभिरुपस्थानम्, पञ्चगृहीताज्यहोमः; दक्षिणोत्तरतः स्रुचोरुपधानञ्च ।

द्वितीयब्राह्मणे—स्वयमातृण्णादूर्वेष्टकाद्वियजूरेतःसिग्विश्वज्योतिर्ऋतव्याषाढेष्टकोपधानम् ।

पञ्चमाध्यायस्य प्रथमब्राह्मणे—कूर्मोपधानम्, तस्य दधिमधुघृतैरभ्यञ्जनम्, कूर्मस्य कम्पनम्, उलूखलमुसलोपधानम्, उखोपधानम्, तत्राज्येन होमश्च ।

द्वितीयब्राह्मणे—उखायां पशुशीर्षाणामुपधानम्, पशुशीर्षेषु सुवर्णशकलप्रक्षेपः, पशुशीर्षाणां स्थापनक्रमः, चित्याग्नेरुपस्थानम्, अपस्येष्टकानामुपधानञ्च ।

सप्तमं काण्डं समाप्तम् ।

## अष्टमं काण्डम्

प्रथमाध्यायस्य प्रथमद्वितीयब्राह्मणयोः—प्राणभृत्संज्ञकेष्टकोपधानम्, तासां संख्या च ।

तृतीयब्राह्मणे—प्राणभृच्छब्दनिर्वचनम्, तत्स्तुतिश्च ।

चतुर्थब्राह्मणे—प्राणभृदिष्टकानिधानस्थानादिनिरूपणम् ।

द्वितीयाध्यायस्य प्रथमब्राह्मणे—द्वितीयायां चितावश्विनीलोकम्पृणा-ऋतव्येष्टकोपधानम्, पुरीषावापश्च ।

द्वितीयब्राह्मणे—द्वितीयस्यां चितौ वैश्वदेवीष्टकोपधानम् ।

तृतीयचतुर्थब्राह्मणयोः—द्वितीयस्यां चितौ प्राणभृदपस्या-वयस्या-लोकम्पृणोपधानम् ।

तृतीयाध्यायस्य प्रथमब्राह्मणे—तृतीयस्याश्चितेश्चयनम्—तत्र स्वयमातृण्णादिश्येष्टकोपधानम् ।

द्वितीयब्राह्मणे—तृतीयस्यां चितौ विश्वज्योतिर्ऋतव्याप्राणभृदिष्टकोपधानम् ।

तृतीयब्राह्मणे—तृतीयस्यां चितौ छन्दस्येष्टकोपधानादि ।

चतुर्थब्राह्मणे—बालखिल्या-लोकम्पृणोपधानम्, पुरीषावापश्च ।

चतुर्थाध्यायस्य प्रथमब्राह्मणे—चतुर्थचितेश्चयनम्—तत्र जङ्घामान्यादिस्तोमेष्टकोपधानम् ।

द्वितीयब्राह्मणे—चतुर्थ्यां चितौ स्पृतर्तव्येष्टकोपधानम् ।

तृतीयब्राह्मणे—सृष्टीष्टकोपधानम्, लोकम्पृणोधानञ्च ।

चतुर्थब्राह्मणे—स्तोमचित्यर्थवादः ।

पञ्चमाध्यायस्य प्रथमब्राह्मणे—पञ्चम्याश्चितेश्चयनम्—तत्रासपत्नेष्टकोपधानम् ।

द्वितीयब्राह्मणे—पञ्चम्यां चितौ छन्दस्येष्टकोपधानम्, तदर्थवादश्च ।

तृतीयचतुर्थब्राह्मणयोः—पञ्चम्यां चितौ स्तोमेष्टकोपधानम्, तदुपधानस्थान निरूपणम्, पुरीषावापश्च ।

षष्ठाध्यायस्य प्रथमब्राह्मणे—नाकसत्पञ्चचूडेष्टकोपधानम् ।

द्वितीयब्राह्मणे—छन्दस्येष्टकोपधानादिकम् ।

तृतीयब्राह्मणे—गार्हपत्यचयनम्, तत्प्रशंसा च ।

सप्तमाध्यायस्य प्रथमब्राह्मणे—ऋतव्या विश्वज्योतिः स्वयमातृण्णाविकर्ण्यर्थवादः ।

द्वितीयब्राह्मणे—लोकम्पृणेष्टकोपधानम्, इष्टकापरिमाणश्च ।

तृतीयब्राह्मणे—इष्टकासु पुरीषनिवापः, स्वयमातृण्णा-विकर्ण्युपधानञ्च ।

चतुर्थब्राह्मणे—पञ्चम्याश्चितेः सुवर्णशकलसहस्रेण प्रोक्षणम्, पुरीषेणाच्छादनञ्च ।

अष्टमं काण्डं समाप्तम् ।

## नवमं काण्डम्

प्रथमाध्यायस्य प्रथमब्राह्मणे—शतरुद्रियहोमः निरूपणम्, तत्र होमफलम्, हवनीयद्रव्यम्, होमाधिकरणीभूतं साधनम्, होमाधारभूतं स्थानञ्च ।

द्वितीयब्राह्मणे—चित्याग्नेः परिषेकः, मण्डूकादियुक्तवेणुनाग्निक्षेत्रे विकर्षणादिकञ्च ।

द्वितीयाध्यायस्य प्रथमब्राह्मणे—औपवसथ्यदिवसकर्तव्यतानिरूपणम्, यजमानस्य वाग्विसर्जनम्, अध्वर्योराज्यग्रहणम्, चित्यारोहणम्, तत्र होमादिविधिः, प्रवर्ग्योत्सादनं च ।

द्वितीयब्राह्मणे—प्रवर्ग्योत्सादनानन्तरं सञ्चिते इष्टकासमूहे स्थापनायाऽग्निं प्रणेतुं तावच्छालाद्वार्ये पञ्चगृहीताज्यहोमः, षोडशगृहीताज्यहोमः, औदुम्बरसमिदाधानञ्च ।

तृतीयब्राह्मणे—अग्निप्रणयनम्, प्रतिप्रस्थातृकर्तृकोऽध्वर्य्वादीनां प्रैषः । अप्रतिरथजपादि च ।

**तृतीयाध्यायस्य प्रथमब्राह्मणे**—वैश्वानरपुरोडाशहोमः, मारुतपुरोडाशहोमः, तदधिश्रयणासादने, समिदाधानम्, पूर्णाहुतिहोमश्च ।

**द्वितीयब्राह्मणे**—वसोर्धाराहोमः, तत्प्रशंसा, ग्रहहोमश्च ।

**तृतीयब्राह्मणे**—यज्ञक्रतुहोमः, अयुग्मस्तोमहोमः, युग्मस्तोमहोमः, वयोहोमः, नामग्रहहोमः, कल्पहोमः, वसोर्धाराहोमस्याऽर्थवादश्च ।

**चतुर्थब्राह्मणे**—वाजप्रसवीयहोमः, पार्थहोमः, यजमानाभिषेकश्च ।

**चतुर्थाध्यायस्य प्रथमब्राह्मणे**—राष्ट्रभृद्धोमः, तदर्थवादः, रथशिरसि पञ्चगृहीताज्यहोमश्च ।

**द्वितीयब्राह्मणे**—वातहोमादिः, रथस्याऽश्वानां दानञ्च ।

**तृतीयब्राह्मणे**—धिष्ण्यचयनविधिः ।

**चतुर्थब्राह्मणे**—अग्नियोजनाख्यं कर्म, अग्निविमोचनञ्च ।

**पञ्चमाध्यायस्य प्रथमब्राह्मणे**—पयोव्रतादिमीमांसा ।

**द्वितीयब्राह्मणे**—चित्युपस्थानम् ।

नवमं काण्डं समाप्तम् ।

---

## दशमं काण्डम्

**प्रथमाध्यायस्य प्रथमब्राह्मणे**—चित्याग्नेः संवत्सररूपत्वम्, तस्य प्राजापत्यात्मना स्तुतिः, स्तोत्रशस्त्रस्तुतिश्च ।

**द्वितीयब्राह्मणे**—चितिसम्पत्तयः—पूर्वं महाव्रतयज्ञे सहप्रयुक्तानि अग्निचयनमहाव्रतसाममहदुक्थशस्त्राणि त्रीण्यपि पक्ष्याकाराणि अधिदेवं पृथिव्यन्तरिक्षद्युलोकात्मकानि, अध्यात्मं मनःप्राणवाग्रूपाणि इति, ज्योतिष्टोमयज्ञ एवैतेषां त्रयाणां सम्पादनप्रकारकथनञ्च ।

**तृतीयब्राह्मणे**—प्रजापतेर्मर्त्यामृतादिकृत्स्नशरीरसम्पादकत्वेन स्तुतिः ।

**चतुर्थब्राह्मणे**—प्रजापतेर्मरणधर्मकस्थूलशरीरगतमज्जादिरूपत्वेन हिरण्यरूपत्वेन देवतानामन्नरूपत्वेन च स्तुतिः, पक्षिभक्षणवर्जनं व्रतञ्च ।

**पञ्चमब्राह्मणे**—अग्निचयनकर्मणोऽग्न्याधानाग्न्याधेयहविरग्निहोत्रदर्शपौर्णमासेष्टिपशुचातुर्मास्यसोमाध्वरराजसूयादिसर्वयज्ञात्मकत्वप्रतिपादनम्, यज्ञवीर्याणां मीमांसा च ।

**द्वितीयाध्यायस्य प्रथमब्राह्मणे**—चित्याग्नेः पक्षिरूपत्वप्रतिपादनम्, तत्पक्षपुच्छयोः परिमाणकथनञ्च ।

**द्वितीयब्राह्मणे**—चित्याग्नेः सप्तपुरुषपरिमाणत्वनिरूपणम्, पक्षपुच्छयोश्चाऽरत्निवितस्तिपरिमाणत्वप्रतिपादनम्।

**तृतीयब्राह्मणे**—प्राकृतस्य सप्तविधाग्नेर्वैकृतेष्वन्त्यस्यैकशतविधाग्नेश्च वेदिमानम्, तत्रेतिकर्तव्यता च।

**चतुर्थब्राह्मणे**—एकशतविधस्याऽग्नेः सर्वकामरूपत्वेन आदित्यात्मना स्तुतिः, तस्य सप्तविधप्राकृताग्निसंख्यया सम्पत्तिप्रकारः, सप्तविधस्य चैकशतविधसंख्यया सम्पत्तिश्च।

**पञ्चमब्राह्मणे**—चित्याग्नेः कालप्रतिपादनम्, चितिपुरीषमीमांसा च।

**षष्ठब्राह्मणे**—प्रजापतेः प्रकारान्तरेणैकशतसंख्याकत्वम्, सप्तविधाग्निना सम्पत्तिः, अधिदैवाधियज्ञाध्यात्मत्रयविषये संवत्सरचित्याग्निपुरुषाणां पञ्चविधत्वम्, चयनस्यामृतत्वप्राप्तिःफलञ्च।

**तृतीयाध्यायस्य प्रथमब्राह्मणे**—चित्याग्नेः चक्षुरादिसप्तावयवानां छन्दोमयत्वम्, गायत्र्यादिसप्तच्छन्दसां वीर्यरूपत्वेन स्तुतिश्च।

**द्वितीयब्राह्मणे**—वेदवादिप्रश्नोत्तराभ्यां शिरोग्रीवादीनां छन्दोमयत्वनिरूपणम्।

**तृतीयब्राह्मणे**—धीरमहाशालनाम्नोर्महर्ष्योः प्रश्नप्रतिवचनाभ्यामग्नेः सर्वदेवतासमष्टिरूपप्राणवाय्वात्मकत्वप्रतिपादनम्।

**चतुर्थब्राह्मणे**—बहुविधैः प्रश्नप्रतिवचनैः पुरुषस्याऽर्करूपतया स्तुतिः।

**पञ्चमब्राह्मणे**—यजुषो विधायकब्राह्मणयोर्निर्वचनम्—तत्राधिदैवाध्यात्मभेदेनार्थप्रतिपादनम्, मन्त्रब्राह्मणप्रसङ्गादुपनिषदः स्तुतिः, तत्स्वरूपनिर्वचनादि, यजुषामुपांश्वनुष्ठानप्रतिपादनञ्च।

**चतुर्थाध्यायस्य प्रथमब्राह्मणे**—आहवनीयाग्निरूपप्रजापतेश्चित्याग्निमन्नत्वेन परिकल्प्य तयोर्भोक्तृभोग्ययोरग्निचित्ययोर्द्वन्द्वस्यार्क्यमहाव्रतोक्थनामभिर्ऋग्यजुःसामवेदत्रयपरिभाषासिद्धैर्व्यवहार्यत्वेन स्तुतिः, रुक्मपुरुषयोरिष्टकापुरीषचित्योश्चित्याहवनीययोश्चेन्द्राग्न्यात्मना स्तुतिः, प्रजापतिरूपाहवनीयस्य तत्र हूयमानमहाव्रतीयग्रहरसस्य यद् द्वन्द्वं सम्पद्यते तस्यार्क्यव्रतोक्थनामभिर्व्यपदेश्यत्वम्, कलाभिः सप्तदशात्मकस्य चित्याग्निरूपस्य प्रजापतेः सोमयागोऽन्नं तयोरधिदैवमादित्यचन्द्रात्मना, अध्यात्मं प्राणान्नात्मना च स्तुतिः, त्रिष्वपि स्थानेष्वर्क्यादिनामत्रयप्रतिपाद्यत्वञ्च।

**द्वितीयब्राह्मणे**—अग्नेरिष्टकानां च संवत्सरतदवयवाहोरात्रमुहूर्तात्मकत्वप्रतिपादनम्, मन्त्ररूपत्वप्रतिपादनञ्च।

**तृतीयब्राह्मणे**—संवत्सररूपप्रजापतेर्मृत्य्वन्तकरूपत्वम्, तद्रूपोपासनस्य फलम्, अग्निचयनस्यामृतलक्षणं फलम्, परिश्रिद्यजुष्मतीलोकम्पृणेष्टकानां संख्या च ।

**चतुर्थब्राह्मणे**—संवत्सररूपाग्नेः, तदवयवानां च सहस्ररूपत्वेनोपासनम्; तत्फलञ्च ।

**पञ्चमब्राह्मणे**—व्यष्टिरूपाग्निविषयोपासना, वाग्न्यादित्यसंवत्सराणामग्नित्वप्रतिपादनञ्च ।

**पञ्चमाध्यायस्य प्रथमब्राह्मणे**—त्रयीमयादित्येऽग्न्युपासना ।

**द्वितीयब्राह्मणे**—सूर्यमण्डलार्चिःपुरुषत्रयस्याधिदैवाधियज्ञाध्यात्मपरत्वेनार्थप्रतिपादनम्, तत्राधिदैवमयमर्थः—चयनगतबृहदुक्थमहाव्रताग्नित्रयं क्रमेण मण्डलार्चिःपुरुषरूपत्वेनोपासनीयमिति, अधियज्ञमयमर्थः—चयनगतरुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलादित्रयम्, एवं दक्षिणाग्निगतशुक्लकृष्णवर्णतदन्तर्वर्तिपुरुषाणां मण्डलादित्रयरूपत्वेनोपसनमिति । लोचने हि शुक्लरूपं कृष्णरूपं चास्ति तदन्तर्वर्ती पुरुषश्च दृश्यते, एतत्प्रसङ्गेन सव्यलोचनगतपुरुषस्य मिथुनत्वसम्पादनम्, अथ पुरुषस्य मृत्युत्वमुपजीव्यम्, मृत्युगतैकत्वबहुत्वान्तिकदूरत्वमीमांसा, तस्यैव पुरुषस्य बहुधोपासनम्, तत्फलञ्च ।

**तृतीयब्राह्मणे**—सकलपुरुषवर्तिमनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निवृत्तिसम्पाद्यचित्याग्निविषयोपासनानिरूपणम् ।

**चतुर्थब्राह्मणे**—भूम्यादिलोकत्रयादित्यनक्षत्रच्छन्दःसंवत्सरात्मनां चित्याग्निरूपत्वेनोपासना, 'विद्यया तदारोहन्ति' ( क० १६ ) इत्यादिना केवलकर्मनिन्दापुरःसरं विद्याप्रशंसा च ।

**पञ्चमब्राह्मणे**—चित्याग्नेः सर्वदिगभिमुखत्वनिरूपणम्, पृथक् शिरसो निरूहणाभावश्च ।

**षष्ठाध्यायस्य प्रथमब्राह्मणे**—वैश्वानरविद्यानिरूपणम् ।

**द्वितीयब्राह्मणे**—पुरुषस्याग्निविधत्वार्कविधत्वोक्थविधत्वनिरूपणम् ।

**तृतीयब्राह्मणे**—शाण्डिल्यविद्याप्रतिपादनम् ।

**चतुर्थब्राह्मणे**—अश्वावयवेषु विराडवयवोपासना ।

**पञ्चमब्राह्मणे**—'नैवेह किञ्चनाग्र आसीत्, इत्यादिना उपास्यहिरण्यगर्भस्वरूपप्रतिपादनम्, 'अथ वंशः' इत्यग्निरहस्यविद्याप्रवर्तकर्षिप्रवाहप्रतिपादनम् ।

दशमं काण्डं समाप्तम् ।

## एकादशं काण्डम्

**तृतीयब्राह्मणे**—मित्रविन्देष्टिः—तत्राधिकारिविशेषप्रदर्शनम्, तत्रादौ श्रिय उत्पत्तिः, उत्पन्नायाश्च तस्या देवैरभिधानम्।

**चतुर्थब्राह्मणे**—दाहविपतनादिदोषदुष्टस्यापि हविषः समृद्धिः।

**पञ्चमाध्यायस्य प्रथमब्राह्मणे**—दर्शपूर्णमासविकृतिभूतचातुर्मास्यादीनां प्रशंसा, तत्राग्निमन्थनसद्भावात्तत्साधनभूतयोररण्योरश्वत्थविकृतित्वसाधनम्।

**द्वितीयब्राह्मणे**—चातुर्मास्ययाजिन आत्मयाजित्वं देवयाजित्वं वेति द्वैविध्यं दर्शयितुं तत्रत्यैर्यागैः शरीरावयवकल्पनमाख्यायिकया।

**तृतीयब्राह्मणे**—प्रश्नप्रतिवचनाभ्यामग्निहोत्रस्य सर्वदेवतातृप्तिकरत्वप्रतिपादनम्।

**चतुर्थब्राह्मणे**—'तं होपनिन्ये' इत्यनेन पूर्वब्राह्मणे उपनयनस्य प्रस्तुतत्वात्तद्धर्मनिरूपणम्।

**पञ्चमब्राह्मणे**—आख्यायिकापूर्वकं शतातिरात्राख्यसत्रविधानम्।

**षष्ठब्राह्मणे**—यावज्जीवमनुष्ठेयानां पञ्चमहायज्ञानां निरूपणम्, तेषां च महासत्रत्वविधानम्।

**सप्तमब्राह्मणे**—ब्रह्मयज्ञस्वाध्याये पुरुषाणामादरातिशयं जनयितुं तस्य प्रशंसा।

**अष्टमब्राह्मणे**—आख्यायिकया व्याहृत्युत्पत्तिकथनम्।

**नवमब्राह्मणे**—अंशवदाभ्याख्ययोः सोमग्रहयोर्विंधित्सया तयोरात्मवागादिरूपतया समुन्नित्यानुष्ठानम्।

**षष्ठाध्यायस्य प्रथमब्राह्मणे**—आख्यायिकया समिदाधानादीनां वनस्पत्यादिरूपफलसाधनताकथनम्।

**द्वितीयब्राह्मणे**—आख्यायिकयाऽग्निहोत्राहुतिप्राशस्त्यप्रतिपादनम्।

**तृतीयब्राह्मणे**—आख्यायिकयाऽग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्त्वतः प्राणशब्दाभिधेयपरमात्मरूपताप्रतिपादनम्।

**सप्तमाध्यायस्य प्रथमब्राह्मणे**—पशुबन्धप्रशंसा, दर्शपूर्णमासवन्नित्यं प्रतिसंवत्सरमेष्टव्यपशुयागविधानम्।

**द्वितीयब्राह्मणे**—पशुबन्धस्येष्टिविधत्वं सोमविधत्वं चेति द्वैविध्यप्रदर्शनम्, षड्ढोतृहोमविधानञ्च।

**तृतीयब्राह्मणे**—बहुसारस्य यूपस्य पशुविरोधित्वनिरूपणम्, अल्पसारस्य पशुसमृद्धिकरणत्वप्रतिपादनञ्च।

**चतुर्थब्राह्मणे**— यूपपरिमाणम्, आज्यभागयोरवश्यकर्तव्यता, पश्ववयवपाक-विषयको विधिविशेषः, वपावदानस्य पञ्चावत्तत्वप्रकारश्च ।

**अष्टमाध्यायस्य प्रथमब्राह्मणे**— अग्निहोत्रे कर्मणि महद् इत्युपस्थानदार्ढ्याय कर्तव्यनिमित्तत्वविधानमाख्यायिकया ।

**द्वितीयब्राह्मणे**— आहवनीयात्प्राक् प्रकृते औत्तरवेदिकेऽग्नौ पशुयागः कर्तव्य इति विधातुमग्नेराहितादिभेदेन चतुर्विधत्वप्रदर्शनम् ।

**तृतीयब्राह्मणे**— पशोः प्रजापतिः सूर्य इन्द्राग्नीति देवतात्रयप्रतिपादनम् ।

**चतुर्थब्राह्मणे**— आख्यायिकापूर्वकं पशुप्रायश्चित्ततया स्पृत्याख्यहोमविधानम् ।

एकादशं काण्डं समाप्तम् ।

## द्वादशं काण्डम्

**प्रथमाध्यायस्य प्रथमब्राह्मणे**— द्वादशाहे सोपपत्तिकदीक्षाक्रमनिरूपणम् ।

**द्वितीयब्राह्मणे**— द्वादशाहस्याह्नां क्लृप्तिः ।

**तृतीयब्राह्मणे**— द्वादशाहाह्नां क्लृप्त्यर्थवादः ।

**चतुर्थब्राह्मणे**— द्वादशाहस्य संवत्सरात्मना स्तुतिः ।

**द्वितीयाध्यायस्य प्रथमद्वितीयब्राह्मणयोः**— संवत्सरसत्रस्याहःक्लृप्तिः ।

**तृतीयब्राह्मणे**— दशरात्रनिरूपणम् ।

**चतुर्थब्राह्मणे**— संवत्सरस्याभिप्लवात्मना स्तुतिः ।

**तृतीयाध्यायस्य प्रथमब्राह्मणे**— संवत्सरस्याभिप्लवात्मना स्तुतिः ।

**द्वितीयब्राह्मणे**— संवत्सरसत्रस्याहःक्लृप्तिः ।

**तृतीयब्राह्मणे**— संवत्सरादिदीक्षापक्षः ।

**चतुर्थब्राह्मणे**— ज्योतिष्टोमे उद्गात्राद्यन्वारम्भः ।

**पञ्चमब्राह्मणे**— सोमादीनां नित्यत्वम् ।

**चतुर्थाध्यायस्य प्रथमब्राह्मणे**— अग्निहोत्रप्रायश्चित्तनिरूपणम्, तत्र दोह्यमानाया अग्निहोत्र्या गोरुपवेशने शब्दकरणे च प्रायश्चित्तम् ।

**द्वितीयब्राह्मणे**— अग्निहोत्र्या लोहितादिदुहने प्रायश्चित्तम् ।

**तृतीयब्राह्मणे**— गार्हपत्याद्यनुगमने प्रायश्चित्तम् ।

**चतुर्थब्राह्मणे**— अग्निहोत्रे अन्यन्तरसंसर्गादौ प्रायश्चित्तम् ।

पञ्चमाध्यायस्य प्रथमब्राह्मणे—मृताग्निहोत्रेतिकर्तव्यता ।

द्वितीयब्राह्मणे—मृताग्निहोत्रौर्ध्वदेहिककृत्यम् ।

षष्ठाध्यायस्य प्रथमब्राह्मणे—ज्योतिष्टोमप्रायश्चितम् ।

सप्तमाध्यायस्य प्रथमब्राह्मण—सौत्रामणीहविस्तत्राख्यायिका ।

द्वितीयब्राह्मणे—सौत्रामण्यामधिकारनिरूपणम्, सुराद्रव्याणां क्रयः, पशुपुरोडाशादिविधानञ्च ।

तृतीयब्राह्मणे—सुरानिर्माणप्रकारः, सुरापावनप्रकारः, पयोग्रहग्रहणम्, सुराग्रहग्रहणञ्च ।

अष्टमाध्यायस्य प्रथमब्राह्मणे—पयोग्रहाणां सुराग्रहाणां च होमो भक्षणं च विकल्पेन ।

द्वितीयब्राह्मणे—सौत्रामणीप्रशंसा ।

तृतीयब्राह्मणे—आसन्दीनिधानम्, सामगानम्, यजमानाभिषेकश्च ।

नवमाध्यायस्य प्रथमब्राह्मणे—सौत्रामणीशेषः ।

द्वितीयब्राह्मणे—अवभृथेष्टिः । आदित्यश्चरुनिर्वापश्च ।

तृतीयब्राह्मणे—सौत्रामण्यर्थवादः ।

द्वादशं काडं समाप्तम् ।

---

## त्रयोदशं काण्डम्

प्रथमाध्यायस्य प्रथमब्राह्मणे—ब्रह्मौदनपचनम्, तद्दानम्, तत्प्राशनञ्च । अश्वमेधस्योत्पत्तिः, तत्फलञ्च ।

द्वितीयब्राह्मणे—अश्वरशनादानम्, तस्याः परिमाणम्, अश्वस्य बन्धनप्रोक्षणादि च ।

तृतीयब्राह्मणे—सहस्रमाहुतयः ।

चतुर्थब्राह्मणे—सावित्रीष्टीनां विधानम् ।

पञ्चमब्राह्मणे—सोमे गाथागानम् ।

षष्ठब्राह्मणे—अश्वकर्णे जपः, धृतिहोमश्च ।

सप्तमाष्टमब्राह्मणयोः—औद्ग्रभणहोमः ।

नवमब्राह्मणे—अध्वर्युकर्तृकजपः ।

**द्वितीयाध्यायस्य प्रथमब्राह्मणे**—आज्यसक्तुधानालाजहोमः, सर्वरात्रश्च ।

**द्वितीयब्राह्मणे**—पर्यङ्ग्यपशुनिरूपणम् ।

**तृतीयब्राह्मणे**—उद्गातृगानप्रशंसा ।

**चतुर्थब्राह्मणे**—ग्राम्यपश्वालम्भः, आरण्यपशूनामुत्सर्गश्च ।

**पञ्चमब्राह्मणे**—पश्वेकादशिनी ।

**षष्ठब्राह्मणे**—आश्वमेधिकस्याश्वस्य नियोजनाञ्जनमणिबन्धनादि ।

**सप्तमब्राह्मणे**—अश्वस्य प्रोक्षणादि ।

**अष्टमब्राह्मणे**—मृतस्याश्वस्य परिक्रमणादि ।

**नवमब्राह्मणे**—अध्वर्य्वादीनां कुमारीभिः सह संवादः ।

**दशमब्राह्मणे**—अश्वशरीरे सूचीभिर्वितोदः ।

**एकादशब्राह्मणे**—महिमानौ ग्रहौ परिपशव्याहुती च ।

**तृतीयाध्यायस्य प्रथमब्राह्मणे**—अश्वमेधप्रशंसा, अश्वस्यावदानस्थाननिरूपणञ्च ।

**द्वितीयब्राह्मणे**—वपाप्रचारः ।

**तृतीयब्राह्मणे**—यूपैकविंशतिः ।

**चतुर्थब्राह्मणे**—अश्वस्य लोहितश्रपणादि ।

**पञ्चमब्राह्मणे**—अश्वमेधेनापमृत्युनिरासः ।

**षष्ठब्राह्मणे**—अश्वस्तोमीयाख्यहोमः ।

**सप्तमब्राह्मणे**—अश्वमेधस्य यौगिकानां द्वादशनाम्नां प्रदर्शनम् ।

**अष्टमब्राह्मणे**—अश्वे रोगादिनाभिभूते प्रायश्चित्तम् ।

**चतुर्थाध्यायस्य प्रथमब्राह्मणे**—अश्वमेधारम्भकालः, तत्रत्येतिकर्तव्यता, ब्रह्मौदनपाकः, निष्कविमोकः, चतसृणां यजमानपत्नीनामागमनम्, यजमानस्य वावातायां ऊर्वोरन्तराले शयनादिकम्, आग्नेयीष्टिः, पौष्णीष्टिश्च ।

**द्वितीयब्राह्मणे**—सावित्र्य इष्टयः, तत्रत्येतिकर्तव्यता, पारिप्लवशंसनम्, गाथागानञ्च ।

**तृतीयब्राह्मणे**—अध्वर्य्वादीनां सौवर्णेषु कूर्चेषूपवेशनम्, पारिप्लवस्य प्रतिगरः, यजमानस्य स्तुतिश्च ।

**चतुर्थब्राह्मणे**—यूपकाष्ठनिरूपणम्, संवत्सरादिपक्षेण दीक्षाद्यनुष्ठानक्रमश्च ।

**पञ्चमाध्यायस्य प्रथमब्राह्मणे**—सवनीयाः पशवः, चातुर्मास्यपशवश्च ।

**द्वितीयब्राह्मणे—**संवादः, ऋत्विजां प्रश्नप्रतिवचनानि च ।

**तृतीयब्राह्मणे**—वपाहोमः, एकविंशतिः सवनीयाः पशवश्च ।

**चतुर्थब्राह्मणे**—प्रत्यृतु षण्णां षण्णां पशूनामालम्भः ।

**षष्ठाध्यायस्य प्रथमब्राह्मणे** – पुरुषमेधयागफलम्, तत्रत्या अह्नां संस्था च ।

**द्वितीयब्राह्मणे** पुरुषमेधार्थनिर्वचनम्, ब्राह्मणादीनामष्टाचत्वारिंशत्संख्यकानामग्निष्ठ यूपे नियोजनादि, नियुक्तानां तेषां पुरुषसूक्तेन ब्रह्मद्वारा स्तुतिः, ब्राह्मणादीनामुत्सर्गः, पुरुषमेधान्ते वानप्रस्थाश्रमस्वीकृतेर्वैकल्पिकत्वनिरूपणञ्च ।

**सप्तमाध्यायस्य प्रथमब्राह्मणे—**सर्वमेधः—तत्रादौ तस्योत्पत्तिः, तत्रत्याहःसंस्था च ।

**अष्टमाध्यायस्य प्रथमब्राह्मणे**—पितृमेधः— तत्रादौ श्मशानशब्दार्थः, तस्यारम्भकालः, भूमिजोषणादि च ।

**द्वितीयब्राह्मणे**—तस्य परिश्रिद्भिः परिश्रयणम्, पलाशशाखया व्युदूहनम्, वलीवर्दनियोजनम्, चतुःसीताकर्षणम्, वलीवर्दविमोकश्च ।

**तृतीयब्राह्मणे—**तत्र सर्वौषधीनां वपनम् ।

**चतुर्थब्राह्मणे**—शङ्कुनिखननम्, अपामार्गमार्जनञ्च ।

त्रयोदशं काण्डं समाप्तम् ।

## चतुर्दशं काण्डम्

**प्रथमाध्यायस्य प्रथमब्राह्मणे**—घर्मोपक्रमः–तत्राख्यायिका, रात्रित्रयं यावद्व्रताचरणञ्च ।

**द्वितीयब्राह्मणे** –प्रवर्ग्यः—महावीरसम्पादनार्थं सम्भाराः, तन्निर्माणप्रकारः, तेषां गर्ते सादनम्, धूपनम्, श्रपणञ्च ।

**तृतीयचतुर्थब्राह्मणयोः—**महावीरसंस्काराः । पात्रासादनम्, महावीरप्रोक्षणम्, स्थूणानिखननम्, सम्राडासन्दीस्थापनम्, महावीराञ्जनम्, अङ्गारैस्तदाच्छादनम्, धवित्रैराधवनम्, उपस्थानञ्च ।

**द्वितीयाध्यायस्य प्रथमब्राह्मणे**—रौहिणहोमः, रज्ज्वादानम्, गोराह्वानम्, वत्सोत्सर्गः, गोदोहनम्, विप्रुषामभिमन्त्रणम्, महावीरेषु अजापयस आसेकश्च ।

**द्वितीयब्राह्मणे**—प्रवर्ग्यानुष्ठानम्, वातनामजपः, महावीरे घृतासेकः, शकलैराज्यहोमः, रौहिणहोमादि च ।

**तृतीयाध्यायस्य प्रथमब्राह्मणे**—प्रवर्ग्योत्सादनाख्यं कर्म ।

**द्वितीयब्राह्मणे**—घर्मभेदे प्रायश्चित्तम् प्रवर्ग्यप्रशंसा च ।

**चतुर्थाध्यायस्य प्रथमब्राह्मणे**—कोऽसौ पाप्मा मृत्युः, कुतो वा तस्योद्भवः, केन वा तस्यातिक्रमणम्, कथं चेत्यादिनिरूपणमाख्यायिकया ।

**द्वितीयब्राह्मणे**—ज्ञानकर्मणोः स्तुत्यर्थं तत्फलभूतस्य प्रजापतेर्जगत्सर्जनस्थितिसंहारेषु स्वातन्त्र्यविभूतिवर्णनेन फलोत्कर्षवर्णनम् ।

**तृतीयब्राह्मणे**—पाङ्क्तज्ञानकर्मभ्यां केवलज्ञानेन वा अद्यमानत्वेन सृष्टस्यान्नभूतस्य जगत उपासनार्थं विभागेन सप्तधानिरूपणम् ।

**चतुर्थब्राह्मणे**—उक्तस्यैव प्रतिपत्तिसौकर्यार्थं नाम-रूप-कर्मात्मत्वेनोपसंहारः ।

**पञ्चमाध्यायस्य प्रथमब्राह्मणे**—अविद्याविषयमेवात्मत्वेनोपगतवन्तं गार्ग्यं तद्विपरीतात्मदर्शिनमजातशत्रुं सिद्धान्तवादिनं चोपस्थाप्य आख्यायिकाप्रदर्शनम् ।

**द्वितीयब्राह्मणे**—प्राणोपनिषदो व्याख्यानम् ।

**तृतीयब्राह्मणे**—ब्रह्मण उपाधिभूतयोर्मूर्तामूर्तयोः कार्यकरणाध्यात्माधिदैवतयोः विभागप्रदर्शनम् ।

**चतुर्थब्राह्मणे**—प्रस्तुताया ब्रह्मविद्याया अङ्गत्वेन सन्यासविधानार्थं याज्ञवल्क्यमैत्रेयीसंवादरूपाऽऽख्यायिका ।

**पञ्चमब्राह्मणे**—उक्तस्याध्यायद्वयस्यार्थोपसंहारः, आचार्यपरम्पराक्रमरूपवंशकथनञ्च ।

**षष्ठाध्यायस्य प्रथमब्राह्मणे**—तत्त्वज्ञाने आगमोपपत्त्योरावश्यकत्वप्रतिपादनम् तत्र ब्रह्मविद्यास्तुत्यर्थाऽऽख्यायिका ।

**द्वितीयब्राह्मणे**—बन्धनं विना ततो विश्लेषायोगान्मुमुक्षोः सप्रयोजकबन्धज्ञानार्थत्वेन ग्रहातिग्रहलक्षणाद्बन्धनान्मृत्योरतिमुक्तिकथनमाख्यायिकया ।

**तृतीयब्राह्मणे**—कर्मफलानां संसारत्वप्रदर्शनायैव भुज्युयाज्ञवल्क्यसंवादः ।

**चतुर्थब्राह्मणे**—ससंन्यासात्मज्ञानविषयकथनं कहोडयाज्ञवल्क्यसंवादेन ।

**पञ्चमब्राह्मणे**—आत्मविषये, उषस्तयाज्ञवल्क्यसंवादः ।

**षष्ठब्राह्मणे**—अनात्मभूतानां सर्वेषां पदार्थानां कथनम् ।

**सप्तमब्राह्मणे**—ब्रह्मलोकानामन्तरतमं सूत्रं दर्शयितुमुद्दालकयाज्ञवल्क्यसंवादः ।

**अष्टमब्राह्मणे**—अशनायादिविनिर्मुक्तस्य निरुपाधिकस्य साक्षादपरोक्षात्सर्वान्तस्य ब्रह्मणो वर्णनम् । तत्र गार्गीयाज्ञवल्क्यसंवादः ।

**नवमब्राह्मणे**—ब्रह्मणो नियन्तव्यदेवताभेदसंकोचविकासद्वारेणाधिगन्तव्यस्य साक्षादपरोक्षत्वस्य निरूपणम् । तत्र शाकल्ययाज्ञवल्क्यसंवादः ।

**दशमब्राह्मणे**—उक्तस्यैव ब्रह्मणः प्राणाद्यधिष्ठात्रीषु वाय्वादिदेवतासु ब्रह्मदृष्टिद्वारा निरूपणम् ।

**एकादशब्राह्मणे**—पूर्वोक्तैः साधनैर्ज्ञेयस्य ब्रह्मणो जगदादिद्वारा ज्ञानम् ।

**सप्तमाध्यायस्य प्रथमब्राह्मणे**—प्रस्तुतस्य ब्रह्मणो देहादिव्यतिरिक्तशुद्धस्वयम्प्रकाशानतिशयानन्दस्वभावलक्षणस्य प्रदर्शनम् ।

**द्वितीयब्राह्मणे**—उक्तस्यात्मनोऽङ्गेभ्यः संप्रमोक्षणस्य विस्तरेणोपपादनम् ।

**तृतीयब्राह्मणे**—आत्मज्ञाने आगमेनाधिगतस्यामृतत्वसाधनत्वस्य तर्केणापि प्रतिपादनम्, याज्ञवल्क्यकाण्डस्याचार्यपरम्परोपदेशश्च ।

**अष्टमाध्यायस्य प्रथमब्राह्मणे**—( सर्वोपनिषदर्थस्य ब्रह्मण उत्तरसम्बन्धार्थमनुवादः ) सर्वोपास्तिसाधनमोंकार इति कथनम् ।

**द्वितीयब्राह्मणे**—दमदानदयानां सकलब्रह्मोपासनाङ्गत्वेन प्रतिपादनम् ।

**तृतीयब्राह्मणे**—कृतोपासनस्य योगिनोऽन्तकाले प्रार्थना ।

**चतुर्थब्राह्मणे**—हृदयस्य ब्रह्मत्वेनोपसनम् ।

**पञ्चमब्राह्मणे**—हृदयाख्यस्य ब्रह्मणः सत्यत्वेनोपासनम् ।

**षष्ठब्राह्मणे**—सत्यस्य ब्रह्मणः प्रथमजत्वप्रतिपादनम् ।

**अष्टमाध्यायस्य सप्तमब्राह्मणे**—विद्युद्ब्रह्मेत्युपासनविधानम् ।

**अष्टमब्राह्मणे**—मन उपाधिविशिष्टस्य ब्रह्मण उपास्तिनिरूपणम् ।

**नवमब्राह्मणे**—तस्यैव ब्रह्मणो वाङ्मयधेनुसम्बन्धेनोपासनम् ।

**दशमब्राह्मणे**—वैश्वानराग्न्युपाधिकस्य ब्रह्मण उपासनम् ।

**एकादशब्राह्मणे**—व्याधितस्तप्यमानस्य तापे तप इति दृष्टिः ।

**द्वादशब्राह्मणे**—एतत्प्रकरणस्थानां सर्वेषामुपासनानां गतिकथनम्, अश्रुतफलोपासनानां ब्रह्मलोकफलकथनञ्च ।

**त्रयोदशब्राह्मणे**—वि रमिति गुणद्वयविशिष्टान्नप्राणोपाधिकब्रह्मोपासनं विशिष्टफलकम् ।

**चतुर्दशब्राह्मणे**—उक्तस्य ब्रह्मण उक्थादिगुणपूगविशिष्टत्वेनोपासनम्, प्राणस्य पालकगुणत्वेनोपासनञ्च ।

**पञ्चदशब्राह्मणे**—सर्वोपाध्युपसंहारिगायत्र्युपाधिकब्रह्मोपासनम्, गायत्र्युपस्थानञ्च ।

**नवमाध्यायस्य प्रथमब्राह्मणे**—विहितस्य केवलस्य कर्मणस्तत्सहितस्य च ज्ञानस्य निषिद्धयोश्च तयोः क्रमेण दक्षिणोदगधोमार्गकथनम् ।

**द्वितीयब्राह्मणे**—ज्येष्ठत्वश्रेष्ठत्वादिगुणविशिष्टप्राणोपासनम् ।

**तृतीयब्राह्मणे**—श्रीमन्थाख्यं कर्म—तत्र समयः, अधिकारी, आज्यहोमः, संस्रवस्य मन्थाख्यौदुम्बरपात्रे त्यागः, हस्तेन मन्थाभिमर्शनम्, मन्थस्थद्रव्यस्य हस्ते ग्रहणम्, तस्य प्राशनम्, आचमनम्, हस्तप्राक्षलनम्, शयनम्, प्रातरादित्योपस्थानञ्च ।

**चतुर्थब्राह्मणे**—विशिष्टपुत्रार्थिनः पुत्रमन्थाख्यं कर्म-तत्रादौ पुत्रोत्पत्तिहेतुनो रेतसः स्तुतिः, । प्रमादाद्रेतःपाते प्रायश्चित्तम्, ऋतुकालाभिगमनविधानम्, दम्पत्योः परस्परं वशीकरणोपायः, गर्भाधानेतिकर्तव्यता, जातकर्म, आयुष्यकर्म, सकलस्यापि वेदस्याध्यापकपरम्परानिरूपणञ्चेति ।

चतुर्दशं काण्डं समाप्तम् ।

---



अथ शुक्लयजुर्वेदीयमाध्यन्दिनशाखीयं

# शतपथब्राह्मणम्

## हास्तिघटं *नाम सप्तमं काण्डम् ।



अस्मिन् काण्डे प्रतिपाद्या विषयाः — गार्हपत्यचयनम्, निर्ऋतिचयनम्, अग्निक्षेत्रसंस्कारः, दर्भस्तम्बोपधानादि, सोमक्रयः, पुष्करपर्णोपधानम्, रुक्मोपधानम्, स्वयमातृण्णोपधानाद्यपस्यासादनान्तम् ।



[ गार्हपत्यचितिस्थाने पतितानां तृणपर्णादीनामपसारणादि ]

॥ ॐ ॥ गार्हपत्यं चेष्यन्न्पलाशशाखया † व्युदूहति । अवस्यति हैतद्यद् गार्हपत्यं चिनोति य उ वै के चाग्निचितोऽस्यामेव तेऽवसितास्तद्यद्व्युदूहत्यवसितानेव तद्व्युदूहति नेदवसितानध्यवस्यानीति ॥ १ ॥ 'अपेत वीत वि च सर्प्पतात' इति । अप चैवेत वि चेत व्यु च

* एतस्य सप्तमकाण्डस्याभिधानं 'हस्तिघटम्' इति । क्वचित्पुस्तके 'हस्तिषट्' इत्यपि दृश्यते, तल्लेखकप्रमादजमेवेति ध्येयम् ।

† गार्हपत्यचितेः स्थाने मध्यादारभ्य प्रतिदिशं प्रादक्षिण्येन पलाशशाखया पतितं तृणपर्णादिनिरसनं व्युदूहनमित्युच्यते । (का० श्रौ० सू० १७. १. ३ ।)

(१) शु० य० सं० अ० १२ क० ४५ ।

सर्प्पतात ऽइत्त्येतद्य ऽउदरसर्प्पिणस्तानेतदाह 'ये ऽत्र स्त्थ[1] पुराणा ये च नूतना' ऽइति येऽत्र स्त्थ सनातना ये चाधुनातना ऽइत्त्येतत् ॥२॥ 'अदाद्यमोऽवसानं पृथिव्व्या'[2] ऽइति । यमो ह वा ऽअस्या ऽअवसानस्येष्टे स ऽएवास्म्मा ऽअस्यामवसानं ददाति ॥ ३ ॥ 'अक्रन्निमं पितरो लोकमस्म्मा'[3] ऽइति । क्षत्रं वै यमो विशः पितरो यस्म्मा ऽउ वै क्षत्रियो विशा संविदानोऽस्यामवसानं ददाति तत्सुदत्तं तथो हास्मै क्षत्रं स्यमो विशा पितृभिः संविदानोऽस्यामवसानं ददाति ॥ ४ ॥ पलाशशाखया व्व्युदूहति । ब्रह्म वै पलाशो ब्रह्मणैव तदवसिताद्व्युदूहति मन्त्रेण ब्रह्म वै मन्त्रो ब्रह्मणैव तदवसिताद्व्युदूहति तामुदीचीमुदस्यति ॥ ५ ॥ * अथोषान्निवपति । अयं वै लोको गार्हपत्त्यः पशव ऽऊषा ऽअस्मिँस्तल्लोके पशून्दधाति तस्म्मादिमेऽस्मिँल्लोके पशवः ॥ ६ ॥ यद्वेवोषान्निवपति † । प्रजापतिः प्रजा ऽअसृजत ता नानोल्बा ऽअसृजत ता न समजानत सोऽकामयत सञ्जानीरन्निति ताः समानोल्बा ऽअकरोत्तासामूषानुल्बमकरोत्ताः समजानत तस्म्मादप्प्येतर्हि समानोल्बाः समेव जानते देवैः समानोल्बोऽसानीत्यु वै यजते यो यजते तद्यदूषान्निवपति देवैरेव तत्समानोल्बो भवति ॥ ७ ॥ 'संज्ञानमसी'[4]ति । समजानत ह्येतेन 'कामधरण[5]-

(१) शु० य० सं० अ० १२ क० ४५। (२) शु० य० सं० अ० १२ क० ४५। (३) शु० य० सं० अ० १२ क० ४५।

* अत्र शतम् ४०० ।

† का० श्रौ० सू० १७. १. ४ ।

(४) शु० य० सं० अ० १२ क० ४६। (५) शु० य० सं० अ० १२ क० ४६।

मि'ति पशवो वा ऽऊषाः पशवः कामधरणं 'मयि ते कामधरणं भूयादि'ति मयि ते पशवो भूयासुरित्येतत्तैः सर्वं गार्हपत्यं प्रच्छादयति योनिर्वै गार्हपत्या चितिरुल्बमूषाः सर्वां तद्योनिमुल्बेन प्रच्छादयति ॥ ८ ॥ अथ सिकता ‡ निवपति । अग्नेरेतद्वैश्वानरस्य भस्म यत्सिकता अग्निमु वा ऽएतं वैश्वानरं चेष्यन्भवति न वा ऽअग्निः स्वं भस्माभिदहत्यनतिदाहाय ॥ ९ ॥ यद्वेव सिकता निवपति । अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकता ऽअग्निमु वा ऽएतं वैश्वानरं चेष्यन्भवति न वा ऽअरेतस्कात्किञ्चन विक्रियतेऽस्माद्रेतसोऽधि विक्रियाता ऽइति ॥ १० ॥ 'अग्नेर्भस्मास्यग्नेः पुरीषमसी'ति । यातयाम वा ऽअग्नेर्भस्मायातयाम्न्यः सिकता ऽअयातयाममेवैनदेतत्करोति ताभिः सर्वं गार्हपत्यं प्रच्छादयति योनिर्वै गार्हपत्या चिती रेतः सिकताः सर्वस्यां तद्योनौ रेतो दधाति ॥ ११ ॥ अथैनं परिश्रिद्भिः परिश्रयति । योनिर्वै परिश्रित ऽइदमेवैतद्रेतः सिक्तं योन्या परिगृह्णाति तस्माद्योन्या रेतः सिक्तं परिगृह्यते ॥ १२ ॥ यद्वेवैनं * परिश्रिद्भिः परिश्रयति । अयं वै लोको गार्हपत्य ऽआपः परिश्रित ऽइमं तं लोकमद्भिः परितनोति समुद्रेण हैनं तत्परितनोति सर्वतस्तस्मादिमं लोकः सर्वतः समुद्रः पर्य्येति दक्षि-

(१) शु० य० सं० अ० १२ क० ४६ ।

‡ का० श्रौ० सू० १७. १. ६ ।

(२) शु० य० सं० अ० १२ क० ४६ ।

* का० श्रौ० सू० १७. १. ७ ।

णावृत्तस्मादिमं लोकं दक्षिणावृत्समुद्रः पर्य्येति खातेन तस्मादिमं लोकं खातेन समुद्रः पर्य्येति ॥ १३ ॥ 'चितं[1] स्थे'ति । चिनोति ह्येनाः 'परिचितं[2] स्थे'ति परि ह्येनाश्चिनो'त्यूर्द्ध्वचि[3]तः श्रयद्ध्वमि'त्यूर्द्ध्वा ऽउपदधदाह तस्मादूर्द्ध्व ऽएव समुद्रो विजतेऽथ यत्तिरश्चीरुपदध्यात्सकृद्धैवेदः सर्व्वः समुद्रो निर्म्मृज्यान्न ·सादयत्यसन्ना ह्यापो न सूददोहसाधिवदति ॥ १४ ॥ अस्थीनि वै परिश्रितः । प्राणः सूददोहा न वा ऽअस्थिषु प्प्राणोऽस्त्येकेन यजुषा * बह्वीरिष्टका ऽउपदधात्येकः ह्येतद्रूपं यदापोऽथ यद् बह्व्यः परिश्रितो भवन्ति बह्व्यो ह्यापः ॥ १५ ॥ तद्वै योनिः परिश्रितः । उल्बमूषा रेतः सिकता बाह्याः परिश्रितो भवन्त्यन्तर ऽऊषा बाह्या हि योनिरन्तरमुल्बं बाह्य ऽऊषा भवन्त्यन्तराः सिकता बाह्यः ह्युल्बमन्तरः रेत ऽएतेभ्यो वै जायमानो जायते तेभ्य ऽएवैनमेतज्जनयति ॥ १६ ॥ अथैनमतश्चिनोति । इदमेवैतद्रेतः सिक्तं विकरोति तस्माद्योनौ रेतः सिक्तं विक्रियते ॥ १७ ॥ स चतस्रः प्प्राचीरुपदधाति । द्वे पश्चात्तिरश्च्यौ द्वे पुरस्तात्तद्याश्चतस्रः प्प्राचीरुपदधाति · स ऽआत्मा तद्यत्ताश्चतस्रो भवन्ति चतुर्विधो ह्ययमात्माथ ये पश्चात्ते सक्थ्यौ ये पुरस्तात्तौ बाहू यत्र वा ऽआत्मा तदेव शिरः ॥ १८ ॥ तं वा-

( १ ) शु० य० सं० अ० १२ क० ४६ । ( २ ) शु० य० सं० अ० १२ क० ४६ । ( ३ ) शु० य० सं० अ० १२ क० ४६ ।

* आप० श्रौ० सू० १६. १३. १० ।

ऽएतम् । अत्र पक्षपुच्छवन्तं विकरोति यादृग्वै योनौ रेतो विक्रियते तादृग्जायते तद्यदेतमत्र पक्षपुच्छवन्तं विकरोति तस्माद्देषोऽमुत्र पक्षपुच्छवाञ्जायते ॥ १९ ॥ तं वै पक्षपुच्छवन्तमेव सन्तम् । न पक्षपुच्छवन्तमिव पश्यन्ति तस्माद्योनौ गर्भं न यथारूपं पश्यन्त्यथैनममुत्र पक्षपुच्छवन्तं पश्यन्ति तस्माज्जातं गर्भं यथारूपं पश्यन्ति ॥ २० ॥ स * चतस्रः पूर्वा ऽउपदधाति । आत्मा ह्येवाऽग्रे सम्भवतः सम्भवति दक्षिणत ऽउदङ्ङासीन ऽउत्तराद्ध्या प्रथमामुपदधाति तथो हास्यैषोऽभ्यात्ममेवाग्निश्चितो भवति ॥ २१ ॥ '[1]अयꣳ सो ऽअग्निः । यस्मिन्त्सोममिन्द्रः सुतं दध' ऽइत्ययं वै लोको गार्हपत्यऽआपः सोमः सुतोऽस्मिँस्तल्लोकेऽप ऽइन्द्रोऽधत्त '[2]जठरे वावशान' ऽइति मध्यं वै जठरꣳ '[3]सहस्रियं वाजमत्यं न सप्तिमि'त्यापो वै सहस्रियो वाजः '[4]ससवान्त्सन्त्स्तूयसे जातवेद' ऽइति चितः संश्चीयसे जातवेद ऽइत्येतत् ॥ २२ ॥ '[5]अग्ने यत्ते दिवि वर्च्च' ऽइति । आदित्यो वाऽअस्य दिवि वर्च्चः पृथिव्यामित्ययमग्निः '[6]पृथिव्यां यदोषधीष्वप्स्वा यजत्रे'ति य ऽएवौषधिषु चाप्सु चाग्निस्तमेतदाह '[7]येनान्तरिक्षमुर्वाततन्थे'ति वायुः स '[8]त्वेषः स भानुरर्णवो नृचक्षा' ऽइति महान्त्स भानुरर्णवो

* का० श्रौ० सू० १७. १. ८ ।

( १ ) शु० य० सं० अ० १२. क० ४७ । ( २ ) शु० य० सं० अ० १२ क० ४७ । ( ३ ) शु० य० सं० अ० १२ क० ४७ । ( ४ ) शु० य० सं० अ० १२ क० ४७ ।

( ५ ) शु० य० सं० अ० १२ क० ४८ । ( ६ ) शु० य० सं० अ० १२ क० ४८ । ( ७ ) शु० य० सं० अ० १२ क० ४८ । ( ८ ) शु० य० सं० अ० १२ क० ४८ ।

नृचक्षा ऽइत्येतत् ॥ २३ ॥ 'अग्ने[1] दिवो ऽअर्णमच्छा जिगा-सी'ति । आपो वा ऽअस्य दिवोऽर्णस्ता ऽएष धूमेनाच्छै-'त्यच्छा[2] देवाँ२॥ ऽऊचिषे धिष्ण्या ये' ऽइति प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय ऽइष्णन्ति 'या[3] रोचने परस्ता-त्सूर्यस्य याश्चावस्तादुपतिष्ठन्त ऽआप' ऽइति रोचनो ह नामैष लोको यत्रैष ऽएतत्तपति तद्याश्चैतं परेणापो याश्चावरेण ता ऽएतदाह ॥ २४ ॥ 'पुरीष्यासो[4] ऽअग्नय' ऽइति । पशव्यासोऽग्नय ऽइत्येत'त्प्रावणेभिः[5] सजो-षस' ऽइति प्रायणरूपं प्रायणꣳ ह्येतदग्नेर्यद्गार्हपत्यो 'जुषन्तां[6] यज्ञमद्रुहोऽनमीवा ऽइषो महीरि'ति जुषन्तां यज्ञमद्रुहोऽनशनाया ऽइषोमहीरित्येतत् ॥ २५ ॥ नानो-पदधाति । ये नाना कामा ऽआत्मँस्ताँस्तद्दधाति सकृत्सा-दयत्येकं तदात्मानं करोति सूददोहसाधिवदति · प्राणो वै सूददोहाः प्राणेनैवैनमेतत्सन्तनोति सन्दधाति ॥ २६ ॥ अथ जघनेन परीत्य । * उत्तरतो दक्षिणासीनोऽपरयो-र्दक्षिणामग्र ऽउपदधा'तीडामग्ने[7] पुरुदꣳसꣳ सनिं गोरि'ति पशवो वा ऽइडा पशूनामेवास्मा ऽएतामाशिषमाशास्ते 'शश्वत्तमꣳ[8] हवमानाय साधे'ति यजमानो वै हवमानः

(१) शु० य० सं० अ० १२ क० ४९। (२) शु० य० सं० अ० १२ क० ४९।
(३) शु० य० सं० अ० १२ क० ४९।
(४) शु० य० सं० अ० १२ क० ५०। (५) शु० य० सं० अ० १२ क० ५०।
(६) शु० य० सं० अ० १२ क० ५०।
* का० श्रौ० सू० १७. १. ११।
(७) शु० य० सं० अ० १२ क० ५१। (८) शु० य० सं० अ० १२ क० ५१।

'स्याग्नेः सूनुस्तनयो विजावे'ति प्रजा वै सूनु'[२]रग्ने सा ते सुमतिर्भूत्वस्मे' ऽइत्याशिषमाशास्ते ॥ २७ ॥ अथोत्तराम् । 'अयं ते [३]योनिर्ऋत्वियो यतो जातो ऽअरोचथा' ऽइत्ययं ते योनिर्ऋतव्यः सनातनो यतो जातोऽदीप्यथा ऽइत्येत'त्तं जानन्नग्न[४] ऽआरोहाथा नो वर्द्धया रयिमि'ति यथैव यजुस्तथा बन्धुः ॥ २८ ॥ सक्थ्याव-स्यैते । ते नानोपदधाति नाना सादयति नाना सूददोह-साधिवदति नाना हीमे सक्थ्यौ द्वे भवतो द्वे हीमे सक्थ्यौ पश्चादुपदधाति पश्चाद्धीमे सक्थ्यावग्राभ्याᳬं सᳬस्पृष्टे भवत ऽएवᳬं हीमे सक्थ्यावग्राभ्याᳬं सᳬस्पृष्टे ॥ २९ ॥ अथ तेनैव पुनः परीत्य । * दक्षिणत ऽउद-ङ्ङासीनः पूर्वयोरुत्तरामग्र ऽउपदधाति 'चिदसि त[५]या देवतयाङ्गिरस्वद्ध्रुवा सीदे'त्यथ दक्षिणां 'परिचिदसि त[६]या देवतयाङ्गिरस्वद्ध्रुवा सीदे'ति ॥ ३० ॥ बाहू ऽअस्यैते । ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू द्वे भवतो द्वौ हीमौ बाहू पूर्वार्द्धे-ऽउपदधाति पुरस्ताद्धीमौ बाहू ऽअग्राभ्याᳬं सᳬस्पृष्टे भवत ऽएवᳬं हीमौ बाहू ऽअग्राभ्याᳬं सᳬस्पृष्टौ स वा-ऽइतीमा ऽउपदधातीतीमे ऽइतीमे तद्दक्षिणावृत्तद्धि देवत्रा ॥ ३१ ॥ अष्टाविष्टका † ऽउपदधाति । अष्टाक्षरा गायत्री

( १ ) शु० य० सं० अ० १२ क० ५१ । ( २ ) शु० य० सं० अ० १२ क० ५२ । ( ३ ) शु० य० सं० अ० १२ क० ५२ । ( ४ ) शु० य० सं० अ० १२ क० ५० ।

* का० श्रौ० सू० १७. १. १२ ।

( ५ ) शु० य० सं० अ० १२ क० ५३ । ( ६ ) शु० य० सं० अ० १२ क० ५३ ।

† का० श्रौ० सू० १७. १. १६ ।

गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चि-
नोति पञ्चकृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चर्त्तवः संव-
त्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैन-
मेतच्चिनोत्यष्टाविष्टकाः पञ्चकृत्वः सादयति तत्त्रयोदश
त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि
यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ३२ ॥ अथ
* लोकम्पृणामुपदधाति । तस्या ऽउपरि बन्धुस्तिस्रः पूर्वास्त्रि-
वृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति
दशोत्तरास्तासामुपरि बन्धुर्द्वे वाग्रेऽथ दशाथैकामेवꣳ हि
चितिं चिन्वन्ति तास्त्रयोदश सम्पद्यन्ते तस्योक्तो बन्धुः
॥ ३३ ॥ ता ऽउभय्य ऽएकविꣳशतिः सम्पद्यन्ते । द्वादश
मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएक-
विꣳशोऽमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति ॥ ३४ ॥
एकविꣳशतिर्वेव परिश्रितः । द्वादश मासाः पञ्चर्त्तवस्त्रय-
ऽइमे लोका ऽअयमग्निरमुतोऽध्येकविꣳश ऽइमं तदग्नि-
ममुष्मिन्नादित्ये प्रतिष्ठापयति तद्यदेता ऽएवमुपदधा-
त्येतावेवैतदन्योऽन्यस्मिन्प्रतिष्ठापयति तावेतावन्योऽ-
न्यस्मिन्प्रतिष्ठितौ तौ वा ऽएतावत्र द्वावेकविꣳशौ
सम्पादयत्यत्र ह्येवेमौ तदोभौ भवत ऽआहवनीयश्च
गार्हपत्यश्च ॥ ३५ ॥ अथ † पुरीषं निवपति । तस्योपरि
बन्धुस्तच्चात्वालवेलाया ऽआहरत्यग्निरेष यच्चात्वालस्तथो

* का० श्रौ० सू० १७. १. १७ ।
† का० श्रौ० सू० १७. १. १८ ।

हास्यैतदाग्नेयमेव भवति सा समम्बिला स्यात्तस्योक्तो बन्धुः ॥ ३६ ॥ व्याममात्री भवति। व्याममात्रो वै पुरुषः पुरुषः प्रजापतिः प्रजापतिरग्निरात्मसम्मितां तद्योनिं करोति परिमण्डला भवति परिमण्डला हि योनिरथो ऽअयं वै लोको गार्हपत्यः परिमण्डल ऽउ वा ऽअयं लोकः ॥ ३७ ॥ अथैनौ * सन्निवपति। संज्ञामेवाभ्यामेतत्करोति 'समितꣳ सङ्कल्पेथाꣳ, सं वां मनाꣳसि सं व्रताऽग्ने त्वं पुरीष्यो, भवतं नः समनसावि'ति शमयत्येवैनावेतदुहिꣳसायै यथा नान्योऽन्यꣳ हिꣳस्याताम् ॥ ३८ ॥ चतुर्भिः सन्निवपति। तद्ये चतुष्पादाः पशवस्तैरेवाभ्यामेतत्सज्ञां करोत्यथो ऽअन्नं वै पशवोऽन्नेनैवाभ्यामेतत्संज्ञां करोति ॥ ३९ ॥ तां न रिक्तामवेक्षेत नेद्रिक्तामवेक्षा ऽइति यद्रिक्तामवेक्षेत ग्रसेत हैनम् ॥ ४० ॥ अथास्याꣳ सिकता-ऽआवपति। अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकता ऽअग्नि-मेवास्यामेतद्वैश्वानरꣳ रेतो भूतꣳ सिञ्चति सा † समम्बिला स्यात्तस्योक्तो बन्धुः ॥ ४१ ॥ अथैनां विमुञ्चति। अप्र-दाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यत ऽएतद्वा-ऽएतद्युक्ता रेतोऽभार्षीदेतमग्निं तमत्राजीजनदथापरं धत्ते योषा वा ऽउखा तस्माद्यदा योषा पूर्वꣳ रेतः प्रजन-यत्यथापरं धत्ते ॥ ४२ ॥ 'मातेव[2] पुत्रं पृथिवी पुरीष्यमि'ति।

* का० श्रौ० सू० १७. १. १९।
(१) शु० य० सं० अ० १२ क० ५७–६०।
† का० श्रौ० सू० १७. १. २१।
(२) शु० य० सं० अ० १२ क० ६१।

मातेव पुत्रं पृथिवी पशव्यमित्येतदग्निं 'स्वे योनावभा रुखे'त्यग्निं स्वे योनावभार्षीदुखेत्येत'त्तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्म्मा विमुञ्चत्वि'त्यृतवो वै विश्वे देवास्तदेनां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्म्मा विमुञ्चति तामुत्तरतोऽग्नेर्निदधात्यरत्निमात्रे तस्योक्तो बन्धुः ॥ ४३ ॥ अथास्यां पय ऽआनयति । एतद्वाऽएतद्रेतो धत्तेऽथ पयो धत्ते योषा वा ऽउखा तस्माद्यदा योषा रेतो धत्तेऽथ पयो धत्तेऽधराः सिकता भवन्त्युत्तरं पयोऽधरः हि रेत ऽउत्तरं पयस्तन्मध्य ऽआनयति यथा तत्प्रतिपुरुषशीर्षमुपदध्यात् ॥ ४४ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ प्रजापतिशरीरविश्लेषप्रतिपादनादि ]

प्रजापतिः प्रजा ऽअसृजत । स प्रजाः सृष्ट्वा सर्वमाजिमित्वा व्यस्रꣳसत तस्माद्विस्रस्तात्प्राणो मध्यतऽउदक्रामदुथास्माद्वीर्य्यमुदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत तस्मात्पन्नादन्नमस्रवद्यच्चक्षुरध्यशेत तस्मादस्यान्नमस्रवन्नो हेह तर्हि का चन प्रतिष्ठास ॥ १ ॥ ते देवा ऽअब्रुवन् । न वा ऽइतोऽन्न्या प्रतिष्ठास्तीममेव पितरं प्रजापतिꣳ संस्करवाम सैव नः प्रतिष्ठा भविष्यतीति ॥ २ ॥ तेऽग्नि-

(१) शु० य० सं० अ० १२ क० ६१। (२) शु० य० सं० अ० १२ क० ६१।
एतद्ब्राह्मणस्था विषया अन्यत्राप्युपलभ्यन्ते यथा— कठ० सं० १६; २; कपि० २५. २; मै० सं० ११. ७. ११; तै० सं० ४. २. ४।

मब्रुवन् । न वा ऽइतोऽन्न्या प्प्रतिष्ठास्ति त्त्रयीमं पितरं प्रजापतिꣳ संस्करवाम सैव नः प्प्रतिष्ठा भविष्यतीति किं मे ततो भविष्यतीति ॥ ३ ॥ तेऽब्रुवन् । अन्नं वा ऽअयं प्रजापतिस्त्वन्मुखा ऽएतदन्नमदाम त्त्वन्मुखानां न ऽएषो ऽन्नमसदिति तथेति तस्माद्देवा ऽअग्निमुखा ऽअन्नमदन्ति यस्यै हि कस्यै च देवतायै जुह्वत्यग्नावेव जुह्वत्यग्निमुखा हि तद्देवा ऽअन्नमकुर्वत ॥ ४ ॥ स योऽस्मात्प्राणो मध्यत ऽउदक्रामत् । अयमेव स वायुर्य्योऽयं पवतेऽथ यदस्माद्वीर्य्य-मुदक्रामदसौ स ऽआदित्योऽथ यदस्मादन्नमस्रवद्यदेव संव-त्सरेऽन्नं तत्तत् ॥ ५ ॥ तं देवा ऽअग्नौ प्प्रावृञ्जन् । तद्य ऽएनं प्रवृक्तमग्निरारोहद्य ऽएवास्मात्स प्राणो मध्यत ऽउदक्रामत्स ऽएवैनꣳ स ऽआपद्यत तमस्मिन्नदधुरथ यदस्माद्वीर्य्य-मुदक्रामत्तदस्मिन्नदधुरथ यदस्मादन्नमस्रवत्तदस्मिन्नद-धुस्तꣳ सर्वं कृत्स्नꣳ संस्कृत्योर्द्ध्वमुदश्रयँस्तद्यं तमुदश्रयन्निमे स लोकाः ॥ ६ ॥ तस्यायमेव लोकः प्प्रतिष्ठा । अथ योऽस्मिँल्लोकेऽग्निः सोऽस्यावाङ् प्राणोथास्यान्तरिक्षमा-त्माथ योऽन्तरिक्षे वायुर्य्य ऽएवायमात्मन्न्प्राणः सोऽस्य स द्यौरेवास्य शिरः सूर्य्याचन्द्रमसौ चक्षुषी यच्चक्षुरक्ष्यशेत स चन्द्रमास्तस्मात्स मीलिततरोऽन्नꣳ हि तस्मादु-स्रवत् ॥ ७ ॥ तदेषा वै सा प्प्रतिष्ठा । यां तद्देवाः समस्कुर्वन्त्सैवेयमद्यापि प्रतिष्ठा सो ऽएवाप्प्यतोऽधि भविता ॥ ८ ॥ स यः स प्रजापतिर्व्यस्रꣳसत । अयमेव स योऽयमग्निश्चीयते तद्यदेषोखा रिक्ता शेते पुरा प्प्रव-

र्जनाद्यथैव तत्प्रजापतिरुत्क्रान्ते प्प्राण ऽउत्क्रान्ते व्वीर्य्ये स्रुतेऽन्ने रिक्तोऽशयदेतदस्य तद्रूपम् ॥ ९ ॥ तामग्नौ प्प्रवृणक्ति । यथैवैनमदो देवाः प्प्रावृञ्जँस्तद्य ऽएनां प्रवृक्तामग्निरारोहति य ऽएवास्म्मात्स प्राणो मद्ध्यत ऽउदक्रामत्स ऽएवैनः स ऽआपद्यते तमस्स्मिन्दधात्यथ यद्रुक्मं प्रतिमुच्च्य बिभर्त्ति यदेवाऽस्म्माद्वीर्य्यमुदक्रामत्तदस्स्मिन्दधात्यथ याः समिध ऽआदधाति यदेवास्म्मादन्नमस्रवत्तदस्मिन्दधाति ॥ १० ॥ [ अर्धप्रपाठकः ५४ ॥ ]॰ता वै सायं प्रातरादधाति । अहश्च हि तद्रात्रेश्च्चान्नमस्रवत्तान्न्येतानि सर्वस्मिन्नेव संवत्सरे स्युः संवत्सरो हि स प्रजापतिर्य्यस्म्मात्तान्न्युदक्रामँस्तदस्मिन्नेतत्सर्वस्मिन्नेव सर्वं दधाति यस्म्मिन्न्हास्यै * तदतो न कुर्य्यान्न हास्य तस्म्मिन्नेतद्दद्ध्यान्नासंवत्सरभृतस्येक्षकेण च न भवितव्यमिति ह स्माह व्वामकक्षायणो नेदिमं पितरं प्रजापतिं व्विच्छिद्यमानं पश्श्यानीति तः संवत्सरे सर्वं कृत्स्नः संस्कृत्योर्द्ध्वमुच्छ्रयति यथैवैनमदो देवा ऽउदश्रयन् ॥ ११ ॥ तस्य गार्हपत्य ऽएवायं लोकः । अथ यो गार्हपत्येऽग्निर्य्य ऽएवायमस्मिँल्लोकेऽग्निः सोऽस्य सोऽथ यदन्तराहवनीयं च गार्हपत्यं च तदन्तरिक्षमथ य ऽआग्नीध्रीयेऽग्निर्य्य ऽएवायमन्तरिक्षे व्वायुः सोऽस्य स ऽआहवनीय ऽएव द्यौरथ य ऽआहवनीयेऽग्निस्तौ सूर्य्याचन्द्रमसौ सोऽस्यैष ऽआत्मैव ॥ १२ ॥ तस्य शिर ऽएवाहव-

* 'तदतौ' इति पाठः 'क' पुस्तके ।

नीयः । अथ य आहवनीयेऽग्निरर्य्य ऽएवायꣳ शीर्षꣳप्राणः सोऽस्य स तद्यत्स पक्षपुच्छवान्भवति पक्षपुच्छवान्ह्ययꣳ शीर्षन्प्राणश्चक्षुः शिरो दक्षिणꣳ श्रोत्रं दक्षिणः पक्ष ऽउत्तरꣳ श्रोत्रमुत्तरः पक्षः प्राणो मध्यमात्मा वाक्पुच्छं प्रतिष्ठा तद्यत्प्राणा वाचान्नं जग्ध्वा प्रतितिष्ठन्ति तस्मा* त्प्राणानां वाक्पुच्छं प्रतिष्ठा ॥ १३ ॥ अथ यदन्तराहवनीयं च गार्हपत्यं च । स ऽआत्माथ य ऽआग्नीध्रीयेऽग्निरर्य्य ऽएवायमन्तरात्मन्प्राणः सोऽस्य स प्रतिष्ठैवास्य गार्हपत्योऽथ यो गार्हपत्येऽग्निः सोऽस्यावाङ् प्राणः ॥ १४ ॥ तꣳ हैके त्रिचितं चिन्वन्ति । त्रयो वा ऽइमेऽवाञ्चः प्राणा ऽइति न तथा कुर्य्यादिति ते रेचयन्त्येकविꣳशसम्पदमथो ऽअनुष्टुप्सम्पदमथो बृहतीसम्पदं ये तथा कुर्वन्त्येकꣳ ह्येवैतद्रूपं रुयोनिरेव प्रजातिरेव यदेतेऽवाञ्चः प्राणा यद्धि मूत्रं करोति यत्पुरीषं प्रैव तज्जायते ॥ १५ ॥ अथातः सम्पदेव । एकविꣳशतिरिष्टका नव यजूꣳषि तत्त्रिꣳशत्सादनं च सूददोहाश्च तद् द्वात्रिꣳशद् द्वात्रिꣳशदक्षराऽनुष्टुप्सैषाऽनुष्टुप् ॥ १६ ॥ एकविꣳशतिर्वैव परिश्रितः । यजुर्द्वाविꣳशं व्युदूहनस्य यजुरूषाश्च यजुश्च सिकताश्च यजुश्च पुरीषं च यजुश्चच. चतुर्भिः संनिवपति विमुञ्चति पञ्चमेन ततस्त्रिभिरियं द्वात्रिꣳशदक्षरानुष्टुप्सैषानुष्टुप् ॥ १७ ॥ अथैते द्वे यजुषी । सो ऽअनुष्टुबेव वाग्वाऽअनुष्टुस्तद्यदिदं द्वयं वाचो रूपं दैवं च मानुषं चोच्चैश्चच

* 'प्राणानाम्' इति पाठो न दृश्यते 'ख-ग' पुस्तकयोः ।

शनैश्च तदेते द्वे ॥ १८ ॥ ता वा ऽएतास्तिस्रोऽनुष्टुभः । चित ऽएष गार्हपत्यस्तद्यदेता ऽअत्र तिस्रोऽनुष्टुभः सम्पादयन्त्यत्र ह्येवेमे तदा सर्वे लोका भवन्ति ततोऽन्यतरां द्वात्रिंशदक्षरामनुष्टुभमाहवनीयꣳ हरन्ति स ऽआहवनीयः सा द्यौस्तच्छिरोऽथेहान्यतरा परिशिष्यते स गार्हपत्यः सा प्रतिष्ठा स ऽउ ऽअयं लोकः ॥ १९ ॥ अथ ये ऽएते द्वे यजुषी । एतत्तद्यदन्तराहवनीयं च गार्हपत्यं च तदन्तरिक्षꣳ स ऽआत्मा तद्यत्ते द्वे भवतस्तस्मादेतत्तनीयो यदन्तराहवनीयं च गार्हपत्यं च तस्मादेषां लोकानामन्तरिक्षलोकस्तनिष्ठः ॥ २० ॥ सैषा त्रेधाविहिता वागनुष्टुप् । तामेषोऽग्निः प्राणो भूत्वानुसञ्चरति य ऽआहवनीयेऽग्निः स प्राणः सोऽसावादित्योऽथ य ऽआग्नीध्रीयेऽग्निः स व्यानः स ऽउ ऽअयं वायुर्योऽयं पवतेऽथ यो गार्हपत्येऽग्निः स ऽउदानः स ऽउ ऽअयं योऽयमस्मिँल्लोकेऽग्निरेवं विद्ध वाव सर्वां वाचꣳ सर्वं प्राणꣳ सर्वमात्मानꣳ संस्कुरुते ॥ २१ ॥ सैषा बृहत्येव । ये वै द्वे द्वात्रिꣳशतौ द्वात्रिꣳशदेव तदथैते द्वे यजुषी तच्चतुस्त्रिꣳशदग्निरेव पञ्चत्रिꣳशो नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्याꣳ स ऽउद्व्यक्षरस्तत्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा बृहतीं बृहतीं वा ऽएष सञ्चितोऽभिसम्पद्यते यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतामत्र बृहतीं करोति तस्मादेष सञ्चितो बृहतीमभिसम्पद्यते ॥ २२ ॥ तदाहुः । यदयं लोको गार्हपत्योऽन्तरिक्षं

धिष्ण्या द्यौराहवनीयोऽन्तरिक्षलोक ऽउ ऽअस्म्माल्लोका-द्दनन्तर्हितोऽथ कस्म्माद् गार्हपत्यं चित्त्वाहवनीयं चिनो-त्यथ धिष्ण्यानिति सह हैवेमावग्ग्रे लोकावासतुस्तयो-र्व्वियतोरुर्ध्वोऽन्तरेणाकाश ऽआसीत्तदन्तरिक्षमभवदीक्षᳬ हैत-न्नाम ततᳬ पुरान्तरा वा ऽइदमीक्षमभूदिति तस्म्मा-दन्तरिक्षं तद्यद् गार्हपत्यं चित्त्वाहवनीयं चिनोत्येतौ ह्यग्ग्रे लोकावसृज्ज्येतामथ प्रत्येत्य धिष्ण्यान्निवपति कर्म्मण-ऽएवानन्तरयायाथो ऽअन्तयोर्व्वाव संस्क्रियमाणयोर्म्मध्यᳬ संस्क्रियते ॥ २३ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

[ नैर्ऋतीष्टकाहरणादि ]

अथातो * नैर्ऋतीर्हरन्ति । एतद्वै देवा गार्हपत्यं चित्त्वा समारोहन्नयं वै लोको गार्हपत्य ऽइमंमेव तँ लोकᳬ संस्कृत्य समारोहँस्ते तम ऽएवानतिदृश्श्यमपश्श्यन् ॥ १ ॥ तेऽब्रुवन् । उप तज्जानीत यथेदं तमᳬ पाप्प्मान-मपहनामहा ऽइति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छ-तेति वाव तदब्रुवँस्तदिच्छत यथेदं तमᳬ पाप्प्मानमपहना-महा ऽइति ॥ २ ॥ ते चेतयमानाᳬ । एता ऽइष्टका ऽअप-श्श्यन्नैर्ऋतीस्ता ऽउपादधत ताभिस्तत्तमᳬ पाप्प्मानमपाघ्नत

* का० औ० सू० १७. १. २३ ।

पाप्मा वै निर्ऋतिस्तद्यदेताभिः पाप्मानं निर्ऋतिमपाघ्नंस्तस्मादेता नैर्ऋत्यः ॥ ३ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदं नु तत्तमः स पाप्मा देवैरेवापहतो यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्यथो य ऽएव पाप्मा या निर्ऋतिस्तमेताभिरपहते तद्यदेताभिः पाप्मानं निर्ऋतिमपहते तस्मादेता नैर्ऋत्यः ॥ ४ ॥ यद्वेवैता नैर्ऋतीर्हरन्ति । प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वंस्तमुखायां योनौ रेतो भूतमसिञ्चन्योनिर्वा ऽउखा तस्मा ऽएताꣳ संवत्सरे प्प्रतिष्ठाꣳ समस्कुर्वन्निममेव लोकमयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्राजनयँस्तस्य यः पाप्मा यः श्लेष्मा यदुल्बं यज्जरायु तदस्यैताभिरपाघ्नँस्तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपाघ्नँस्तस्मादेता नैर्ऋत्यः ॥ ५ ॥ तथैवैतद्यजमानः । आत्मानमुखायां योनौ रेतो भूतꣳ सिञ्चति योनिर्वा ऽउखा तस्माऽ एताꣳ संवत्सरे प्प्रतिष्ठाꣳ संस्करोतीममेव लोकमयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्रजनयति तस्य यः पाप्मा यः श्लेष्मा यदुल्बं यज्जरायुतदस्यैताभिरपहन्ति तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपहन्ति तस्मादेता नैर्ऋत्यः ॥ ६ ॥ पादमात्र्यो भवन्ति । अधस्प्पदमेव तत्पाप्मानं निर्ऋतिं कुरुतेऽलक्षणा भवन्ति यद्वै नास्ति तदलक्षणमसन्तमेव तत्पाप्मानं निर्ऋतिं कुरुते तुषपक्का भवन्ति नैर्ऋता वै तुषा नैर्ऋतैरेव तन्नैर्ऋतं कर्म्म करोति कृष्णा भवन्ति कृष्णꣳ हि तत्तम ऽआसीदथो कृष्णा वै निर्ऋतिः ॥ ७ ॥ ताभिरेतां दिशं यन्ति । एषा वै नैर्ऋती दिङ् नैर्ऋत्यामेव तद्दिशि

निर्ऋतिं दधाति स यत्र स्वकृतं वेरिणᳬं श्वभ्रप्प्रदरो वा स्यात्तदेना ऽउपदध्याद्यत्र वा ऽअस्या ऽअवदीर्य्यते यत्र वास्या ऽओषधयो न जायन्ते निर्ऋतिर्हास्यै तद्गृह्णाति नैर्ऋत ऽएव तद्भूमेर्न्निर्ऋतिं दधाति ताः पराचीर्ल्लोकभाजः कृत्वोपदधाति ॥८॥ 'असुन्वन्तमयजमानमिच्छे'[1]ति । यो वै न सुनोति न यजते तं निर्ऋतिर्ऋच्छति 'स्तेनस्येत्त्यामन्न्विहि[2] तस्करस्ये'ति स्तेनस्य चेत्त्यामन्न्विहि तस्करस्य चेत्त्येतदुथो यथा स्तेनस्तस्करः प्प्रलायमेत्त्येवं प्रलायमिही'[3]त्यन्न्यमस्म-दिच्छ सा त' ऽइत्त्येत्त्यनित्थं विद्वाᳬसमिच्छेत्त्येत 'न्नमो[4] देवि निर्ऋते तुभ्यमस्त्वि'ति नमस्कारेणैवैनामपहते ॥ ९ ॥ 'नमः[5] सु ते निर्ऋते तिग्मतेज' ऽइति । तिग्मतेजा वै निर्ऋतिस्तस्या ऽएतन्नमस्करो'त्ययस्मयं[6] विचृता बन्धमेत-मि'त्ययस्मयेन ह वै तं बन्धेन निर्ऋतिर्बध्नाति यं बध्नाति 'यमेन[7] त्वं यम्म्या संविदाने'त्यग्निर्वै यम ऽइयं यम्म्याभ्याᳬ हीदᳬ सर्वं यतमाभ्यां त्वᳬ संविदाने-त्येत'दुत्तमे[8] नाके ऽअधि रोहयैनमि'ति स्वर्ग्गो वै लोको नाकः स्वर्ग्गे लोके यजमानमधिरोहयेत्त्येतत् ॥ १० ॥ 'यस्यास्ते[9] घोर ऽआसञ्जुहोमी'ति । घोरा वै निर्ऋति-स्तस्या ऽएतदासञ्जुहोति यत्तद्देवत्यं कर्म्म करो'त्येषां

(१) शु० य० सं० अ० १२ क० ६२। (२) शु० य० सं० अ० १२ क० ६२। (३) शु० य० सं० अ० १२ क० ६२। (४) शु० य० सं० अ० १२ क० ६२। (५) शु० य० सं० अ० १२ क० ६३। (६) शु० य० सं० अ० १२ क० ६३। (७) शु० य० सं० अ० १२ क० ६३। (८) शु० य० सं० अ० १२ क० ६३। (९) शु० य० सं० अ० १२ क० ६४।

बन्धानामवसर्ज्जनाये'ति यैर्बन्धैर्बद्धो भवति 'यां त्वा जनो भूमिरिति प्प्रमन्दत'[2] ऽइतीयं वै भूमिरस्यां वै स भवति यो भवति 'निर्ऋतिं त्वाहं परिवेद विश्श्वत'[3] ऽइति निर्ऋतिरिति त्वाहं परिवेद सर्व्वत ऽइत्त्येतदियं वै निर्ऋतिरियं वै तं निरर्प्पयति यो निर्ऋच्छति तद्यथा वै ब्रूयादसावामुष्यायणोऽसि वेद त्वा मा मा हिꣳसीरित्त्येवमेतदाह नतराꣳ हि विदित ऽआमन्त्रितो हिनस्ति ॥ ११ ॥ नोपस्पृशति । पाप्प्मा वै निर्ऋतिर्न्नेत्पाप्प्मना सꣳस्पृशाऽइति न सादयति प्प्रतिष्ठा वै सादनं नेत्पाप्प्मानं प्रतिष्ठापयानीति न सूददोहसाधिवदति प्प्राणो वै सूददोहा नेत्पाप्प्मानं प्राणेन सन्तनवानि सन्दधानीति ॥ १२ ॥ ता हैके परस्तादर्व्वाचीरुपदधति । पाप्प्मा वै निर्ऋतिर्न्नेत्पाप्प्मानं निर्ऋतिमन्न्ववायामेति न तथा कुर्य्यात्पराचीरेवोपदद्ध्यात्पराञ्चमेव तत्पाप्प्मानं निर्ऋतिमपहते ॥ १३ ॥ तिस्र ऽइष्टका ऽउपदधाति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैव तत्पाप्प्मानं निर्ऋतिमपहते ॥ १४ ॥ अथासन्दीꣳ * शिक्यꣳ । रुक्मपाशमिण्ड्वं तत्परार्द्धे न्न्यस्यति नैर्ऋतो वै पाशो निर्ऋतिपाशादेव तत्प्रमुच्च्यते 'यं ते देवी निर्ऋतिरा बबन्ध पाशं ग्रीवास्वविचृत्यमि'[4]त्यनेवं विदुषा हाविचृत्त्य'स्तं ते विष्याम्म्यायुषो न मद्ध्या-

( १ ) शु० य० सं० अ० १२ क० ६४ । ( २ ) शु० य० सं० अ० १२ क० ६४ ।
( ३ ) शु० य० सं० अ० १२ क० ६४ ।

* का० श्रौ० सू० १७. २. ३ ।

( ४ ) शु० य० सं० अ० १२ क० ६५ । ( ५ ) शु० य० सं० अ० १२ क० ६५ ।

दि'त्यग्निर्वा ऽआयुस्तस्यैतन्मद्ध्यं स्यच्चितो गार्हपत्यो भवत्यचित ऽआहवनीयस्तस्माद्यदि युवाग्निं चिनुते यदि स्थविर ऽआयुषो न मद्ध्यादित्येवा'हाथैतं पितुर्मद्धि प्प्रसूत' ऽइत्यन्नं वै पितुरथैतदन्नमद्धि प्प्रमुक्त ऽइत्येतत्त्रिष्टुब्भिर्वज्रो वै त्रिष्टुब्वज्रेणैव तत्पाप्मानं निर्ऋतिमपहते ॥ १५ ॥ तिस्र . ऽइष्टका भवन्ति । आसन्दी शिक्यꣳ रुक्मपाश ऽइण्ड्वे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्पाप्मानं निर्ऋतिमपहते ॥ १६ ॥ अथान्तरेणोदचमसं * निनयति । व्वज्रो वा ऽआपो व्वज्रेणैव तत्पाप्मानं निर्ऋतिमन्तर्द्धत्ते- 'नमो भूत्यै येदं चकारे'त्युपोत्तिष्ठन्ति भूत्यै वा ऽएतदग्रे देवाः कर्म्माकुर्वत तस्या ऽएतन्नमोऽकुर्वन्भूत्या ऽउ-ऽएवायमेतत्कर्म्म कुरुते तस्या ऽएतन्नमस्करोत्यप्प्रतीक्षमायन्त्यप्प्रतीक्षमेव तत्पाप्मानं निर्ऋतिं जहति ॥ १७ ॥ प्रत्येत्याग्निमुपतिष्ठते । एतद्वा ऽएतदयथायथं करोति यदग्नौ सामिचित ऽएतां दिशमेति तस्म्मा ऽएवैतन्निह्नुतेऽहिꣳसायै ॥ १८ ॥ † यद्वेवोपतिष्ठते । अयं वै लोको गार्हपत्यः प्प्रतिष्ठा वै गार्हपत्य ऽइयमु वै प्प्रतिष्ठाथैतदुपथमिवैति यदेतां दिशमेति तद्यदुपतिष्ठत ऽइमामेवैतत्प्रतिष्ठामभिप्प्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति

( १ ) शु० य० सं० अ० १२ क० ६५ ।

* का० श्रौ० सू० १७. २. ४ ।

( २ ) शु० य० सं० अ० १२ क० ६५ ।

† का० श्रौ० सू० १७. २. ५ ।

॥ १९ ॥ 'निवेशनः संगमनो वसूनामि'ति । निवेशनो ह्ययं लोकः संगमनो वसूनां 'विश्वा रूपाभिचष्टे शचीभिरिति' सर्वाणि रूपाण्यभिचष्टे शचीभि रित्येत'द्देव ऽइव सविता सत्यधर्म्मेन्द्रो न तस्थौ समरे पथीनामि'ति यथैव यजुस्तथा बन्धुः ॥ २० ॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ प्रायणेष्टिः ]

( तत्र प्रायणीयहविषः प्रचारः, सीरोपादानभूतवृक्षविशेषविधानादिकञ्च )

अथ प्रायणीयं निर्वपति । तस्य हविष्कृता वाचं विसृजते वाचं विसृज्य स्तम्बयजुर्हरति स्तम्बयजुर्हृत्वा पूर्वेण परिग्रहेण परिगृह्य लिखित्वाह हर त्रिरिति हरति त्रिराग्नीध्रः ॥ १ ॥ प्रत्येत्य प्रायणीयेन प्रचरति । प्रायणीयेन प्रचर्य सीरं युनक्त्येतद्वा ऽएनं देवाः संस्करिष्यन्तः पुरस्तादन्नेन समार्द्धयँस्तथैवैनमयमेतत्संस्करिष्यन्पुरस्तादन्नेन समर्द्धयति सीरं भवति सेरः हैतद्यत्सीरमिरामेवास्मिन्नेतद्दधाति ॥ २ ॥ औदुम्बरं भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति मौञ्जं परिसीर्यं त्रिवृत्तस्योक्तो बन्धुः ॥ ३ ॥ * सोऽग्ने-

(१) शु० य० सं० अ० १२ क० ६६ । (२) शु० य० सं० अ० १२ क० ६६ । (३) शु० य० सं० अ० १२ क० ६६ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा का० श० ९. १. १; कठ० सं० १६. १२; कपि० सं० २५. ३; मै० सं ११. ७. १२; तै० सं० ४. २. ५ ।

* का० श्रौ० सू० १७. २. १० ।

दक्षिणार्ठ श्रोणिम् । जघनेन तिष्ठन्नुत्तरस्याछसस्य पुरस्ताद्युज्यमानमभिमन्त्रयते 'सीरा[1] युञ्जन्ति कवयो युगा वितन्वते पृथगि'ति ये विद्वाछसस्ते कवयस्ते सीरं च युञ्जन्ति युगानि च वितन्वते पृथ'ग्धीरा[2] देवेषु सुम्नये'ति यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वाना इत्येतत् ॥ ४ ॥ 'युनक्त[3] सीरा वियुगा तनुध्वमि'ति । युञ्जन्ति हि सीरं वियुगानि तन्वन्ति 'कृते[4] योनौ वपतेह बीजमि'ति बीजाय वा एषा योनिष्क्रियते यत्सीता यथा ह वा अयोनौ रेतः सिञ्चेदेवं तद्यदकृष्टे वपति 'गिरा[5] च श्रुष्टिः सभरा असन्न' इति वाग्वै गीरन्नर्ठ श्रुष्टि'र्नेदीय[6] इत्सृण्यः पक्वमेयादि'ति यदा वा अन्नं पच्यतेऽथ तत्सृण्योपचरन्ति द्वाभ्यां युनक्ति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ५ ॥ स दक्षिणमेवाग्रे युनक्ति । अथ सव्यमेवं देवत्रेतरथा मानुषे षड्गवं भवति द्वादशगवं वा चतुर्विंछशतिगवं वा संवत्सरमेवाभिसम्पदम् ॥६॥ अथैनं विकृषति । अन्नं वै कृषिरेतद्वा अस्मिन्देवाः संस्करिष्यन्तः पुरस्तादन्नमदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादन्नं दधाति ॥ ७ ॥ स वा आत्मानमेव * विकृषति । न पक्षपुच्छान्यात्मँस्तदन्नं दधाति यदु वा आत्मन्नन्नं धीयते तदात्मानमवति तत्पक्षपुच्छान्यथ यत्पक्षपुच्छेषु

(१) शु० सं० अ० १२ क० ६७ । (२) शु० सं० अ० १२ क० ६७ । (३) शु० सं० अ० १२ क० ६८ । (४) शु० सं० अ० १२ क० ६८ । (५) शु० सं० अ० १२ क० ६८ । (६) शु० सं० अ० १२ क० ६८ ।

* का० श्रौ० सू० १७. २. ११ ।

नैव तदात्मानमवति न पक्षपुच्छानि ॥ ८ ॥ स दक्षिणार्द्धेनाग्नेः। अन्तरेण परिश्रितः प्राचीं प्रथमाᳩ सीतां कृषति 'शुनᳩ सु फाला विकृषन्तु भूमिᳩ शुनं कीनाशाऽअभियन्तु वाहैरि'ति शुनᳩ शुनमिति यद्वै समृद्धं तच्छुनᳩ समर्द्धयत्येवैनामेतत् ॥ ९ ॥ अथ जघनार्द्धेनोदीचीम्। 'घृतेन सीता मधुना समज्यतामि'ति यथैव यजुस्तथा बन्धु'र्विश्वैर्देवैरनुमता मरुद्भिरि'ति विश्वे च वै देवा मरुतश्च वर्षस्येशत 'ऽऊर्जस्वती पयसा पिन्वमाने'ति रसो वै पय ऽऊर्ज्जस्वती रसेनान्नेन पिन्वमानेत्येत'दस्मान्त्सीते पयसाभ्याववृत्स्वे'त्यस्मान्त्सीते रसेनाभ्याववृत्स्वेत्येतत् ॥ १० ॥ अथोत्तरार्द्धेन प्राचीम्। लाङ्गलं पवीरवदि'ति लाङ्गलᳩ रयिमदित्येत'त्सुशेवᳩ सोमपित्सरि'त्यन्नं वै सोमस्त'दुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणमि'त्येतद्धि सर्वᳩ सीतोद्वपति ॥ ११ ॥ अथ पूर्वार्द्धेन * दक्षिणाम्। 'कामं कामदुघे धुक्ष्व मित्राय वरुणाय च। इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्यऽओषधीभ्य' ऽइति सर्वदेवत्या वै कृषिरेताभ्यो देवताभ्यः सर्वान्कामान्धुक्ष्वेत्येतदित्यग्रे कृषत्यथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥ १२ ॥ चतस्रः सीता

( १ ) शु० य० सं० अ० १२ क० ७०। ( २ ) शु० य० सं० अ० १२ क० ७०। ( ३ ) शु० य० सं० अ० १२ क० ७०। ( ४ ) शु० य० सं० अ० १२ क० ७०। ( ५ ) शु० य० सं० अ० १२ क० ७१। ( ६ ) शु० य० सं० अ० १२ क० ७१। ( ७ ) शु० य० सं० अ० १२ क० ७१। ( ८ ) शु० य० सं० अ० १२ क० ७२। ( ९ ) शु० य० सं० अ० १२ क० ६९।

* 'दक्षिणा' इति पाठः 'क' पुस्तके।

यजुषा कृषति । तद्यच्चतसृषु दिक्ष्वन्नं तदस्मिन्नेतद्दधाति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥ १३ ॥ अथात्मानं विकृषति । तद्यदेव संवत्सरेऽन्नं तदस्मिन्नेतद्दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीꣳ सर्वं वा ऽअनिरुक्तꣳ सर्वेणैवास्मिन्नेतदन्नं दधातीत्यग्रे कृषत्यथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥ १४ ॥ तिस्रस्तिस्रः सीताः कृषति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १५ ॥ द्वादश सीतास्तूष्णीं कृषति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥ ता ऽउभय्यः षोडश सम्पद्यन्ते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितमेवास्मिन्नेतदन्नं दधाति यदु वा ऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १७ ॥ यद्वेवैनं विकृषति । एतद्वा ऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तात्प्राणानदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तात्प्राणान्दधाति लेखा भवन्ति लेखासु हीमे प्राणाः ॥ १८ ॥ * चतस्रः सीता यजुषा कृषति । तद्य ऽइमे शीर्षंश्चत्वारो निरुक्ताः प्राणास्तानस्मिन्नेतद्दधाति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमे शीर्षन्प्राणाः ॥ १९ ॥ यद्वेवात्मानं विकृषति । य ऽएवेमेऽन्तरात्मन्प्राणास्तानस्मिन्नेतद्दधाति तूष्णीं को हि तद्वेद यावन्त ऽइमेऽन्तरात्मन्प्राणाः

* अत्र शतम् ४१०० ।

॥ २० * अथैनान्विमुञ्चति । आप्त्वा तं कामं ऽयस्मै कामायैनान्न्युङ्क्ते 'विमुच्यध्वमघ्न्या' ऽइत्यघ्न्या हैते देवत्रा 'देवयाना' ऽइति दैवꣳ ह्येभिः कर्म्म करो'त्यगन्म तमसस्पारमस्ये'त्यशनाया वै तमोऽगन्मास्या ऽअशनायायै पारमित्त्ये'तज्ज्योतिराप्पामेति ज्योतिर्ह्याप्नोति यो देवान्यो यज्ञमथैनानुदीचः प्राचः प्रसृजति तस्योक्तो बन्धुस्ता-नध्वर्यवे ददाति स हि तैः करोति ताँस्तु दक्षिणानां कालेऽनुदिशेत् ॥ २१ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १०८ ॥



[ आत्ममध्ये कुशगुच्छोपधानादि ]

अथ † दर्भस्तम्बमुपदधाति । एतद्वै देवा ऽओष-धीरुपादधत तथैवैतद्यजमान ऽओषधीरुपधत्ते ॥ १ ॥ यद्वेव दर्भस्तम्बमुपदधाति । जायत ऽएष ऽएतद्यच्चीयते स-ऽएष सर्वस्मा ऽअन्नाय जायत ऽउभयम्वेतदन्नं ऽयद्दर्भा-ऽआपश्च ह्येता ऽओषधयश्च या वै वृत्राद्बीभत्समाना-

* का० श्रौ० सू० १७. २. १९ ।

( १ ) शु० य० सं० अ० १२ क० ७३ । ( २ ) शु० य० सं० अ० १२ क० ७३ । ( ३ ) शु० य० सं० अ० १२ क० ७३ । ( ४ ) शु० य० सं० अ० १२ क० ७३ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० श० ९१. २; कठ० १६. १३; कपि० २५. ४; मै० सं० ११. ७. १३; तै० सं० ४. २. ६ ।

† **कुशस्तम्बमुपदधाति मध्ये तूष्णीम्** ( का० श्रौ० सू० १७. ३. १ ) ।

ऽआपो धन्व दृभन्त्य ऽउदुायँस्ते दर्भा ऽअभवन्न्यदृभन्त्य-ऽउदुायँस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्या ऽआपो व्वृत्राभिप्प्रक्षरिता यद्दर्भा यदु दर्भास्तेनौषधय ऽउभये-नैवैनमेतदन्नेन प्प्रीणाति ॥ २ ॥ सीतासमरे । व्वाग्वै सीता समरः प्प्राणा वै सीतास्तासामयः समयो व्वाचि वै प्राणेभ्योऽन्नं धीयते मध्यतो मध्यत ऽएवास्मिन्नेत-दन्नं दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीᳶ सर्वं व्वा-ऽअनिरुक्तः सर्वेणैवास्मिन्नेतदन्नं दधाति ॥ ३ ॥ अथैन-मभिजुहोति । जायत ऽएष ऽएतद्यच्चीयते स ऽएष सर्वस्मा ऽअन्नाय जायते सर्वस्यो ऽअस्यैष रसो यदाज्यमपां च ह्येष ऽओषधीनां च रसोऽस्यैवैनमेतत्सर्वस्य रसेन प्प्रीणाति यावानु वै रसस्तावानात्मानेनैवैनमेतत्सर्वेण प्प्रीणाति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संव्व-त्सरः संव्वत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतै-वैनमेतदन्नेन प्प्रीणाति ॥ ४ ॥ यद्वेवैनमभिजुहोति । एतद्वै यत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निः समस्कुर्वंस्तदस्मिन्नेतं पुर-स्ताद्भागमकुर्वत तस्मात्पुरस्ताद्भागास्तद्यदभिजुहोति य-ऽएवास्मिँस्ते प्प्राणा ऽऋषयः पुरस्ताद्भागमकुर्वत तानेवै-तत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ५॥ यद्वेवै-नमभिजुहोति । एतद्वै यान्येतस्मिन्नग्नौ रूपाण्युपधास्य-न्भवति यान्स्तोमान्यानि पृष्ठानि यानि च्छन्दाᳶसि तेभ्य ऽएतं पुरस्ताद्भागं करोति तान्येवैतत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ६ ॥ यद्वेवैनमभिजुहोति ।

एतद्वै देवा ऽबिभयुर्द्दीर्घँ वा ऽइदं कर्म्म यद्वै न ऽइममिह रक्षाᳬंसि नाष्ट्रा न हन्युरिति त ऽएतामेतस्य कर्म्मणः पुरस्तात्सᳬंस्थामपश्यँस्तमत्रैव सर्व्वᳬं समस्थापयन्नत्राचिन्वँस्तथैवैनमयमेतदत्रैव सर्व्वᳬं सᳬंस्थापयत्यत्र चिनोति ॥ ७ ॥ 'सजूरब्द' ऽइति चितिः । 'अयवोभिरि'ति पुरीषᳬं 'सजूरुषा' ऽइति चिति'ररुणीभिरि'ति पुरीषᳬं 'सजोषसावश्विने'ति चितिर्दᳬं'सोभिरि'ति पुरीषᳬं 'सजूः सूर' ऽइति चिति'रेतशेने'ति पुरीषᳬं 'सजूर्वैश्वानर' ऽइति चिति'रिडये'ति पुरीषं 'घृतेने'ति चितिः 'स्वे'ति पुरीषᳬं 'हेति' चितिः ॥ ८ ॥ त्रयोदशैता व्याहृतयो भवन्ति । त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्य्यावत्यस्यमात्रा तावन्तमेवैनमेतच्चिनोत्याज्येन जुहोत्यग्निरेष यदाज्यमग्निमेवैतच्चिनोति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यूर्द्ध्वामुद्गृह्णञ्जुहोत्यूर्द्ध्वं तदग्निं चितिभिश्चिनोति ॥ ९ ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

(१) शु० य० सं० अ० १२ क० ७४ । (२) शु० य० सं० अ० १२ क० ७४ । (३) शु० य० सं० अ० १२ क० ७४ । (४) शु० य० सं० अ० १२ क० ७४ । (५) शु० य० सं० अ० १२ क० ७४ । (६) शु० य० सं० अ० १२ क० ७४ । (७) शु० य० सं० अ० १२ क० ७४ । (८) शु० य० सं० अ० १२ क० ७४ । (९) शु० य० सं० अ० १२ क० ७४ । (१०) शु० य० सं० अ० १२ क० ७४ । (११) शु० य० सं० अ० १२ क० ७४ । (१२) शु० य० सं० अ० १२ क० ७४ । (१३) शु० य० सं० अ० १२ क० ७४ ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा–का० श० ९. १. ३ ।

[ कर्षणक्रमेण सीतासूदकप्रक्षेपः ]

अथोदचमसान्निनयति *। एतद्वै देवा ऽअब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्ते चेतयमाना वृष्टिमेव चितिमपश्यँस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १ ॥ उदचमसा भवन्ति। आपो वै वृष्टिर्वृष्टिमेवास्मिन्नेतद्दधात्यौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्यो वृष्टिं दधाति ॥ २ ॥ त्रींस्त्रीनुदचमसान्निनयति। त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ३ ॥ द्वादशोदचमसान्कृष्टे निनयति। द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ४ ॥ स वै कृष्टे निनयति। तस्मात्कृष्टाय वर्षति स यत्कृष्ट ऽएव निनयेन्नाकृष्टे कृष्टायैव वर्षेन्नाकृष्टायाथ यदकृष्ट ऽएव निनयेन्न कृष्टेऽकृष्टायैव वर्षेन्न कृष्टाय कृष्टे चाकृष्टे च निनयति तस्मात्कृष्टाय चाकृष्टाय च वर्षति ॥ ५ ॥ त्रीनकृष्टे † चाकृष्टे च निनयति। त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ६ ॥ यद्वेवोदचमसान्निनयति। एतद्वा ऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादपो दधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादपो दधाति ॥ ७ ॥ त्रींस्त्रीनुदचमसान्निनयति। त्रिवृ-

* का० श्रौ० सू० १७. ३. ३।

† का० श्रौ० सू० १७. ३. ४, ५।

दग्निरुर्ष्वावानग्निरुर्ष्वावत्त्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥ ८ ॥ द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निरुर्ष्वावानग्निरुर्ष्वावत्त्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥९॥ स वै कृष्टे निनयति । प्राणेषु तदपो दधाति स यत्कृष्ट ऽएव निनयेन्नाकृष्टे प्प्राणेष्वेवापः स्युर्नेतरस्मिन्नात्मन्नथ यदकृष्ट ऽएव निनयेन्न कृष्ट ऽआत्मन्नेवापः स्युर्न प्राणेषु कृष्टे चाकृष्टे च निनयति तस्मादिमा ऽउभयत्रापः प्प्राणेषु चात्मँश्च ॥ १० ॥ त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निरुर्ष्वावानग्निरुर्ष्वावत्त्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥ ११ ॥ पञ्चदशोदचमसान्निनयति । पञ्चदशो वै वज्र ऽएतेनैवास्यैतत्पञ्चदशेन वज्रेण सर्वं पाप्मानमपहन्ति ॥१२॥ अथ * सर्वौषधं वपति । एतद्वै देवा ऽअब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्ते चेतयमाना ऽअन्नमेव चितिमपश्यँस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥१३॥ सर्वौषधं भवति । † सर्वमेतदन्नं यत्सर्वौषधः सर्वमेवास्मिन्नेतदन्नं दधाति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्योऽन्नं दधात्यनुष्टुब्भिर्वपति वाग्वा ऽअनुष्टुब्वाचो वा ऽअन्नमद्यते ॥ १४ ॥ तिसृभिस्तिसृभिर्ऋग्भिर्वपति । त्रिवृदग्निरुर्ष्वावा-

* का० श्रौ० सू० १७. ३. ६ ।

† 'सर्व्वमेव तदन्नम्' इति 'ख-ग' पुस्तकयोः ।

नग्निरुर्वावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१५॥ द्वादशभिर्ऋग्भिः कृष्टे वपति । द्वादशमासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥ स वै कृष्टे वपति । तस्मात्कृष्टेऽन्नं पच्यते * स यत्कृष्ट ऽएव वपेन्नाकृष्टे कृष्ट ऽएवान्नं पच्येत नाकृष्टेऽथ यदकृष्ट ऽएव वपेन्न कृष्टेऽकृष्टऽएवान्नं पच्येत न कृष्टे कृष्टे चाकृष्टे च वपति तस्मात्कृष्टे चाकृष्टे चान्नं पच्यते ॥ १७ ॥ तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १८ ॥ यद्वेव सर्वौषधं वपति । एतद्वा ऽएनं देवाः सँस्करिष्यन्तः पुरस्तात्सर्वेण भेषजेनाभिषज्यँस्तथैवैनमयमेतत्संकरिष्यन्पुरस्तात्सर्वेण भेषजेन भिषज्यति ॥ १९ ॥ सर्वौषधं भवति । सर्वमेतद्भेषजं यत्सर्वौषधꣳ सर्वेणैवैनमेतद्भेषजेन भिषज्यति ॥ २० ॥ तिसृभिस्तिसृभिर्ऋग्भिर्वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥ २१ ॥ द्वादशभिर्ऋग्भिः कृष्टे † वपति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥ २२ ॥ स वै कृष्टे वपति । प्राणाँस्तद्भिषज्यति स यत्कृष्ट ऽएव वपेन्नाकृष्टे प्राणानेव भिषज्येन्नेतरमात्मानमथ यदकृष्ट ऽएव वपेन्न कृष्ट ऽआत्मानमेव

* 'यत्कृष्टे' इति 'ख-ग' पुस्तकयोः ।

† का० श्रौ० सू० १७. ३. ८ ।

भिषज्येन्न प्राणान्कृष्टे चाकृष्टे च वपति प्राणाँश्च तदा-त्मानं च भिषज्यति ॥ २३ ॥ तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन-मेतद्भिषज्यति ॥ २४ ॥ पञ्चदशोदचमसान्निनयति । पञ्चदशभिर्ऋग्भिर्वपति तत्त्रिंशत्त्रिंशदक्षरा विराड्वि-राडु कृत्स्नमन्नं सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति ॥२५॥ 'या ऽओषधीः[1] पूर्वा जाताः । देवेभ्यस्त्रियुगं पुरे'त्यृतवो वै देवास्तेभ्य ऽएतास्त्रिः पुरा जायन्ते वसन्ता प्रावृषि शरदि 'मनै नु[2] बभ्रूणामहमि'ति सोमो वै बभ्रुः सौम्या-ऽओषधय ऽऔषधः पुरुषः शतं धामानी'ति यदिदं शतायुः शतार्घः शतवीर्य ऽएतानि हास्य तानि 'शतं धामानि[3] सप्त चे'ति य ऽएवेमे सप्त शीर्षन्प्राणास्ताने-तदाह ॥ २६ ॥ 'शतं[4] वो ऽअम्ब धामानि । सहस्रमुत वो रुह ऽइति यदिदं शतधा च सहस्रधा च विरूढा 'ऽअधा[5] शतक्रत्वो यूयमिमं मे ऽअगदं कृते'ति यमिमं भिषज्यामीत्येतत् ॥ २७ ॥ ता ऽएता ऽएकव्याख्यानाः । एतमेवाभि यथैतमेव भिषज्येदेतं पारयेत्ता ऽअनुष्टुभो भवन्ति वाग्वा ऽअनुष्टुब्वागु सर्वं भेषजं सर्वेणैवैन-मेतद्भेषजेन भिषज्यति ॥ २८ ॥ अथातो निरुक्तानिरुक्ता-नामेव । यजुषा द्वावनड्वाहौ युनक्ति तूष्णीमितरान्यजुषा चतस्रः सीताः कृषति तूष्णीमितरास्तूष्णीं दर्भस्तम्ब-

(१) शु० य० सं० अ० १२ क० ७५। (२) शु० य० सं० अ० १२ क० ७५।
(३) शु० य० सं० अ० १२ क० ७५। (४) शु० य० सं० अ० १२ क० ७६।
(५) शु० य० सं० अ० १२ क० ७६।

•मुपदधाति यजुषाभिजुहोति तूष्णीमुदचमसान्निनयति यजुषा वपति ॥ २९ ॥ प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिर्न्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तं परिमितꣳ रूपं तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितꣳ रूपं तदस्य तेन संस्करोति स ह वा ऽएतꣳ सर्वं कृत्स्नं प्रजापतिं संस्करोति य ऽएवं विद्वानेतदेवं करोति बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि पशुरेष यदग्निस्तस्मात्पशोर्बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि ॥ ३० ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

[ सोमक्रयादि ]

चितो गार्हपत्यो भवति । अचित ऽआहवनीयोऽथ राजानं क्रीणात्ययं वै लोको गार्हपत्यो द्यौराहवनीयोऽथ योऽयं वायुः पवत ऽएष सोम ऽएतं तदिमौ लोकावन्तरेण दधाति तस्मादेष ऽइमौ लोकावन्तरेण पवते ॥ १ ॥

यद्वेव चिते गार्हपत्ये । अचित ऽआहवनीयेऽथ राजानं क्रीणात्यात्मा वा ऽअग्निः प्राणः सोम ऽआत्मँस्तत्प्राणं मध्यतो दधाति तस्मादयमात्मन्प्राणो मध्यतः ॥ २ ॥

एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ९. १. ४; कठ० सं० १६. १३; कपि० सं० २५. ४; मै० सं० ११. ७. १३; तै० सं० ४. २. ६ ।

यद्वेव चिते गार्हपत्ये। अचित ऽआहवनीयेऽथ राजानं क्रीणात्यात्मा वा ऽअग्नी रसः सोम ऽआत्मानं तद्रसेनानुषजति तस्मादयमान्तमेवात्मा रसेनानुषक्तः ॥ ३ ॥ राजानं क्रीत्वा पर्य्युह्य। अथास्मा ऽआतिथ्यꣳ हविर्न्निर्वपति तस्य * हविष्कृता वाचं विसृजतेऽथ वा ऽएतद्व्यतिषजत्यध्वरकर्म्म चाग्निकर्म्म च कर्म्मणः समानतायै समानमिदं कर्म्मासदिति ॥ ४ ॥ यद्वेव व्यतिषजति। आत्मा वा ऽअग्निः प्राणोऽध्वर ऽआत्मँस्तत्प्राणं मध्यतो दधाति तस्मादयमात्मन्प्राणो मध्यतः ॥ ५ ॥ यद्वेव व्यतिषजति। आत्मा वा ऽअग्नी रसोऽध्वर ऽआत्मानं तद्रसेनानुषजति तस्मादयमान्तमेवात्मा रसेनानुषक्तोऽथाहवनीयस्यार्द्धमेति ॥ ६ ॥ तद्धैके। उभयत्रैव † पलाशशाखया व्युदूहन्त्युभयत्र वै चिनोतीति न तथा कुर्य्यादवस्यति वात्र गार्हपत्येनोर्द्ध्व ऽएवाहवनीयेनं रोहति तस्मात्तथा न कुर्य्यात् ॥ ७ ॥ अथ गार्हपत्य ऽएवोषान्निवपति। नाहवनीयेऽयं वै लोको गार्हपत्यः पशव ऽऊषा ऽअस्मिँस्तल्लोके पशून्दधाति तस्मादिमेऽस्मिँल्लोके पशवः ॥ ८ ॥ अथाहवनीय ऽएव पुष्करपर्णमुपदधाति। न गार्हपत्य ऽआपो वै पुष्करपर्णं द्यौराहवनीयो दिवि तदपो दधात्युभयत्र सिकता निवपति रेतो वै सिकता ऽउभयत्र वै विक्रियते तस्माद्रेतसोऽधि विक्रियाता ऽइति ॥ ९ ॥ ता नाना मन्त्राभ्यां निवपति। मनुष्यलोको वै गार्हपत्यो

* शु० य० सं० १. १५. ३।
† का० श्रौ० सू० १७. १. ३।

देवलोक ऽआहवनीयो नानो वा ऽएतद्यद्दैवं च मानुषं च द्राघीयसा मन्त्रेणाहवनीये निवपति ह्रसीयसा गार्हपत्ये द्राघीयो हि देवायुषꣳ ह्रसीयो मनुष्यायुषꣳ स पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति रेतो वै सिकता ऽअस्माद्रेतसोऽधीमा विक्रियान्ता ऽइति ॥ १० ॥ तदाहुः । यद्योनिः परिश्रितो रेतः सिकता ऽअथ पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति कथमस्यैतद्रेतोऽपरासिक्तं परिगृहीतं भवतीत्युल्बं वा ऽऊषास्तद्यदूषान्पूर्वान्निवपत्येतेनो हास्यैतदुल्बेन रेतोऽपरासिक्तं परिगृहीतं भवत्यथाहवनीये परिश्रितोऽभिमन्त्रयते तस्योक्तो बन्धुरथ सिकता निवपति रेतो वै सिकता ऽएतयो ऽअस्यैतद्योन्या रेतोऽपरासिक्तं परिगृहीतं भवति ॥ ११ ॥ अथाहवनीय * ऽएवाप्यानवतीभ्यामभिमृशति । न गार्हपत्येऽयं वै लोको गार्हपत्यः स्वर्गो लोक ऽआहवनीयोऽद्धो वा ऽअयमस्मिँल्लोके जातो यजमानः स्वर्ग ऽएव लोके प्रजिजनयिषितव्यस्तद्यदाहवनीय ऽएवाप्यानवतीभ्यामभिमृशति न गार्हपत्ये स्वर्ग ऽएवैनं तल्लोके प्रजनयति ॥ १२ ॥ अथ लोगेष्टका ऽउपदधाति । इमे वै लोका ऽएषोऽग्निर्दिशो लोगेष्टका ऽएषु तल्लोकेषु दिशो दधाति तस्मादिमा ऽएषु लोकेषु दिशः ॥ १३ ॥ बाह्येनाग्निमाहरति । आप्ता वा ऽअस्य ता दिशो या ऽएषु लोकेष्वथ या ऽइमाँल्लोकान्परेण दिशस्ता ऽअस्मि-

* का० श्रौ० सू० १७, ३. ९ ।

न्नेतद्दधाति ॥१४॥ [ अर्धप्रपाठकः ५३॥ ] बर्हिर्वेदेरियं वै वेदिः । आप्ता वा ऽअस्य ता दिशो या ऽअस्यामथ या ऽइमां परेण दिशस्ता ऽअस्मिंमन्नेतद्दधाति ॥ १५ ॥ यद्वेव * लोगेष्टका- ऽउपदधाति । प्रजापतेर्विस्त्रस्तस्य सर्वा दिशो रसोऽनु व्व्य- क्षरत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेताभिर्लोगेष्टका- भिस्तꣳ रसमदधुस्तथैवास्मिमन्नयमेतद्दधाति ॥ १६ ॥ बा- ह्येनाग्निमाहरति । आप्तो वा ऽअस्य स रसो य ऽएषु लोकेष्वथ य ऽइमाँल्लोकान्पराङ्सोऽत्यक्षरत्तमस्मिन्नेत- द्दधाति ॥ १७ ॥ बर्हिर्वेदेरियं वै वेदिः । आप्तो वा ऽअस्य स रसो योऽस्यामथ य ऽइमां पराङ्सोऽत्यक्षरत्तमस्मि- न्नेतद्दधाति ॥ १८ ॥ स्फ्येनाहरति । वज्रो वै स्फ्यो वीर्यं वै वज्रो वित्तिरियं वीर्येण वै वित्तिं विन्दते ॥ १९ ॥ स पुरस्तादाहरति । 'मा [1]मा हिꣳसीज्जनिता यः पृथि- व्व्या' ऽइति प्रजापतिर्वै पृथिव्व्यै जनिता मा मा हिꣳ- सीत्प्रजापतिरित्येत'[2]द्यो वा दिवꣳ सत्यधर्म्मा व्व्यानडि'ति यो वा दिवꣳ सत्यधर्म्मा सृजतेत्येतद्य'[3]श्चापश्चन्द्राः प्प्रथमो जजाने'ति मनुष्या वा ऽआपश्चन्द्रा यो मनुष्या- न्प्रथमोऽसृजतेत्येत'[4]त्कस्मै देवाय हविषा विधेमे'ति प्रजापतिर्वै कस्तस्मै हविषा विधेमेत्येतत्तामाहृत्यान्तरेण परिश्रित ऽआत्मन्नुपदधाति स यः प्प्राच्यां दिशि रसोऽ- त्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्प्राचीमेवास्मिन्नेतद्दिशं दधा-

* का० श्रौ० सू० १७. ३. ११,१२ ।

( १ ) शु० य० सं० अ० १२ क० १०२ । ( २ ) शु० य० सं० अ० १२ क० १०२ । ( ३ ) शु० य० सं० अ० १२ क० १०२ । ( ४ ) शु० य० सं० अ० १२ क० १०२ ।

ति ॥ २० ॥ अथ दक्षिणतः । 'अभ्यावर्त्तस्व पृथिवि[1] यज्ञेन पयसा सहे'ति यथैव यजुस्तथा बन्धु'र्वपां ते ऽअग्निरिषितो ऽअरोहदि'ति[2] यद्वै किञ्चास्याᳬ सास्यै वपा तामग्निरिषित ऽउपादीप्तो रोहति तामाहृत्यान्तरेण पक्षसन्धिमात्मन्नुपदधाति स यो दक्षिणायां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो दक्षिणामेवास्मिन्नेतद्दिशं दधाति ॥ २१ ॥ अथ पश्चात् । 'अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियमि'तीयं[3] वा ऽअग्निरस्यै तदाह 'तद्देवेभ्यो[4] भरामसी'ति तदस्मै दैवाय कर्म्मणे हराम ऽइत्येतत्तामाहृत्यान्तरेण पुच्छसन्धिमात्मन्नुपदधाति स यः प्रतीच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्रतीचीमेवास्मिन्नेतद्दिशं दधाति स न सम्प्रति पश्चादाहरेन्नेद्यज्ञपथाद्रसमाहराणीतीत ऽइवाहरति ॥ २२ ॥ अथोत्तरतः । 'इषमूर्ज्जमहमित ऽआदमि'[5]तीषमूर्ज्जमहमित ऽआदद ऽइत्येत'दृतस्य[6] योनिमि'ति सत्यं वा ऽऋतᳬ सत्यस्य योनिमित्येत'न्महिषस्य[7] धारामि'त्यग्निर्वै महिषः स हीदं जातो महान्त्सर्वमैक्षणा'दा[8] मा गोषु विशत्वा तनूष्वि'त्यात्मा वै तनूरा मा गोषु चात्मनि च विशत्वित्येत'ज्जहामि[9] सेदिमनिराममीवामि'ति सिकताः प्रध्वᳬसयति तथैव

(१) शु० य० सं० अ० १२ क० १०३ । (२) शु० य० सं० अ० १२ क० १०३ । (३) शु० य० सं० अ० १२ क० १०४ । (४) शु० य० सं० अ० १२ क० १०४ । (५) शु० य० सं० अ० १२ क० १०५ । (६) शु० य० सं० अ० १२ क० १०५ । (७) शु० य० सं० अ० १२ क० १०५ । (८) शु० य० सं० अ० १२ क० १०५ । (९) शु० य० सं० अ० १२ क० १०५ ।

सेदिरुर्व्वानिरा ग्रामीवा तामेतस्यां दिशि दधाति तस्म्मा-देतस्यां दिशि प्प्रजा ऽअशनायुकास्तामाहृत्त्यान्तरेण पक्षसन्धिमात्त्मन्नुपदधाति स य ऽउदीच्च्यां दिशि रसो-ऽत्त्यक्षरत्तमस्म्मिन्नेतद्दधात्त्यथो ऽउदीचीमेवास्म्मिन्नेतद्दिशं दधाति ॥ २३ ॥ ता ऽएता दिशः । ताः सर्व्वत ऽउप-दधाति सर्व्वतस्तद्दिशो दधाति तस्म्मात्त्सर्व्वतो दिशः सर्व्वतः समीचीः सर्व्वतस्तत्त्समीचीर्द्दिशो दधाति तस्म्मा-त्त्सर्व्वतः समीच्च्यो दिशस्ता नानोपदधाति नाना साद-यति नाना सूददोहसाधिवदति नाना हि दिशस्तिष्ठ-न्नुपदधाति तिष्ठन्तीव हि दिशोऽथो तिष्ठन्न्वै व्वीर्य्य-वत्तरः ॥ २४ ॥ ता ऽएता यजुष्मत्त्य ऽइष्टकाः । ता-ऽआत्त्मन्नेवोपदधाति न पक्षपुच्छेष्वात्त्मन्न्ह्येव यजुष्मत्त्य-ऽइष्टका ऽउपधीयन्ते न पक्षपुच्छेषु ॥ २५ ॥ तदाहुः । कथमस्यैताः पक्काः श्रृता ऽउपहिता भवन्तीति रसो वा-ऽएताः स्वयꣳ श्रृत ऽउ वै रसोऽथो यद्वै किञ्चैतमग्निं व्वैश्वानरमुप निगच्छति तत ऽएव तत्त्पक्कꣳ श्रृतमुपहितं भवति ॥ २६ ॥ * अथोत्तरवेदिं निवपति । इयं वै व्वेदि-र्द्यौरुत्तरवेदिर्द्दिशो लोगेष्टकास्तद्यदन्तरेण व्वेदिं चोत्तर-वेदिं च लोगेष्टका ऽउपदधातीमौ तल्लोकावन्तरेण दिशो दधाति तस्म्मादिमौ लोकावन्तरेण दिशस्तां य्युगमात्त्रीं व्वा सर्व्वतः करोति चत्त्वारिꣳशत्त्पदां व्वा यतरथा काम-येताथ सिकता निवपति तस्योक्तो बन्धुः ॥ २७ ॥ ता-

* का० श्रौ० सू० १७. ३. १४ ।

ऽउत्तरवेदौ * निवपति । योनिर्वा ऽउत्तरवेदिर्योनौ तद्रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति ताभिः सर्वमात्मानं प्रच्छादयति सर्वस्मिँस्तदात्मन्रेतो दधाति तस्मात्सर्वस्मादेवात्मनो रेतः सम्भवति ॥ २८ ॥

'अग्ने तव श्रवो वय' ऽइति । धूमो वा ऽअस्य श्रवो वयः स ह्येनममुष्मिँल्लोके श्रावयति 'महि भ्राजन्ते ऽअर्चयो विभावसवि'ति महतो भ्राजन्तेऽर्चयः प्रभूवसवित्येतद् 'बृहद्भानो शवसा वाजमुक्थ्यमि'ति बलं वै शवो बृहद्भानो बलेनान्नमुक्थ्यमित्येतद्दधासि 'दाशुषे कव' ऽइति यजमानो वै दाश्वान्दधासि यजमानाय कव ऽइत्येतत् ॥ २९ ॥

'पावकवर्चाः शुक्रवर्चा' ऽइति । पावकवर्चा ह्येष शुक्रवर्चा 'ऽअनूनवर्चा ऽउदियर्षि भानुने'त्यनूनवर्चा ऽउद्दीप्यसे भानुनेत्येत'त्पुत्रो मातरा विचरन्नुपावसी'ति पुत्रो ह्येष मातरा विचरन्नुपावति 'पृणक्षि रोदसी ऽउभे' ऽइतीमे वै द्यावापृथिवी रोदसी ते ऽएष ऽउभे पृणक्ति धूमेनामूं वृष्ट्येमाम् ॥ ३० ॥ 'ऊर्जो नपाज्जातवेदः सुशस्तिभिरि'ति । ऊर्जो नपाज्जातवेदः सुष्टुतिभिरित्येत'न्मन्दस्व धीतिभिर्हित' ऽइति दीप्यस्व धीतिभिर्हित ऽइत्येत'त्त्वे ऽइषः सन्दधुर्भूरि-

* का॰ श्रौ॰ सू॰ १७. ३. १५ ।

(१) शु॰ य॰ सं॰ अ॰ १२ क॰ १०६ । (२) शु॰ य॰ सं॰ अ॰ १२ क॰ १०६ । (३) शु॰ य॰ सं॰ अ॰ १२ क॰ १०६ । (४) शु॰ य॰ सं॰ अ॰ १२ क॰ १०६ । (५) शु॰ य॰ सं॰ अ॰ १२ क॰ १०७ । (६) शु॰ य॰ सं॰ अ॰ १२ क॰ १०७ । (७) शु॰ य॰ सं॰ अ॰ १२ क॰ १०७ । (८) शु॰ य॰ सं॰ अ॰ १२ क॰ १०७ । (९) शु॰ य॰ सं॰ अ॰ १२ क॰ १०८ । (१०) शु॰ य॰ सं॰ अ॰ १२ क॰ १०८ । (११) शु॰ य॰ सं॰ अ॰ १२ क॰ १०८ ।

वर्प्पस' ऽइति त्त्वे ऽइषः सन्दधुर्बहुवर्प्पस ऽइत्त्येत'च्चित्रोतयो[1] वामजाता' ऽइति यथैव यजुस्तथा बन्धुः ॥३१॥ 'इरज्ज्यन्नग्ने[2] प्प्रथयस्व जन्तुभिरि'ति । मनुष्या वै जन्तवो दीप्प्यमानोऽग्ने प्प्रथस्व मनुष्यैरित्त्येत'दस्म्मे रायो[3] ऽअमर्त्त्ये'त्त्यस्म्मे रयिं दधदमर्त्त्येत्त्येत'त्स दर्शतस्य वपुषो विराजसी'ति दर्शतस्य ह्येष वपुषो विराजति 'पृणक्षि[4] सानसिं क्रतुमि'ति पृणक्षि सनातनं क्रतुमित्त्येतत् ॥ ३२ ॥ 'इष्क्कर्त्तारमद्ध्वरस्य[6] प्प्रचेतसमि'ति । अद्ध्वरो वै यज्ञः प्प्रकल्पयितारं यज्ञस्य प्प्रचेतसमित्त्येत'त्क्षयन्तः राधसो मह' ऽइति क्षयन्तः राधसि महतीत्त्येत'द्रातिं वामस्य सुभगां महीमिषमि'ति रातिं वामस्य सुभगां महतीमिषमित्त्येत'द्दधासि[9] सानसिः रयिमि'ति दधासि सनातनः रयिमित्त्येतत् ॥ ३३ ॥ 'ऋतावानमि'ति[10] । सत्यावानमित्त्येत'न्महिषमि'[11]त्यग्निर्वै महिषो 'विश्वदर्शतमि'[12]ति विश्वदर्शतो ह्येषो'ऽग्निः सुम्म्नाय[13] दधिरे पुरो जना' ऽइति यज्ञो वै सुम्म्नं यज्ञाय वा ऽएतं पुरो दधते 'श्रुत्कर्ण्णः[14] सप्प्रथस्तमं त्वा गिरा दैव्व्यं मानुषा युगे'त्त्याश्रृण्वन्तः सप्प्रथस्तमं त्वा गिरा देवं मनुष्या हवामह ऽइत्त्येतत् ॥ ३४ ॥ स ऽएषोऽग्निरेव

---

(१) शु० य० सं० अ १२ क० १०८ । (२) शु० य० सं० अ० १२ क० १०८
(३) शु० य० सं० अ० १२ क० १०९ । (४) शु० य० सं० अ० १२ क० १०९
(५) शु० य० सं० अ० १२ क० १०९ । (६) शु० य० सं० अ० १२ क० १०९
(७) शु० य० सं० अ० १२ क० ११० । (८) शु० य० सं० अ० १२ क० ११०
(९) शु० य० सं० अ० १२ क० ११० । (१०) शु० य० सं० अ० १२ क० ११०
(११) शु० य० सं० अ० १२ क० १११ । (१२) शु० य० सं० अ० १२ क० १११
(१३) शु० य० सं० अ० १२ क० १११ । (१४) शु० य० सं० अ० १२ क० १११ ।

वैश्वानरः । एतत्षडृचमारम्भायैवेमाः * सिकता न्युप्य-न्तेऽग्निमेवास्मिन्नेतद्वैश्वानरꣳ रेतो भूतꣳ सिञ्चति षड्चेन षडृतवः संवत्सरः संवत्सरो वैश्वानरः ॥ ३५ ॥ तदाहुः । यद्वेतः सिकता उच्यन्ते किमासाꣳ रेतो रूपमिति शुक्ला इति ब्रूयाच्छुक्लꣳ हि रेतोऽथो पृश्नय इति पृश्नीव हि रेतः ॥ ३६ ॥ तदाहुः । यदार्द्रꣳ रेतः शुष्काः सिकता निवपति कथमस्यैता आर्द्रा रेतोरूपं भवन्तीति रसो वै छन्दाꣳस्यार्द्र उ वै रसस्तद्यदेनाश्छन्दोभिर्न्नि-वपत्येवमु हास्यैता आर्द्रा रेतोरूपं भवन्ति ॥ ३७ ॥ तदाहुः । कथमस्यैता अहोरात्राभ्यामुपहिता भवन्तीति द्वे वा अहोरात्रे शुक्लं च कृष्णं च द्वे सिकते शुक्ला च कृष्णा चैवमु हास्यैता अहोरात्राभ्यामुपहिता भवन्ति ॥ ३८ ॥ तदाहुः । कथमस्यैता अहोरात्रैः सम्पन्ना अन्न्यूना अनतिरिक्ता उपहिता भवन्तीत्यनन्तानि वा अहोरात्राण्यनन्ताः सिकता एवमु हास्यैता अहो-रात्रैः सम्पन्ना अन्न्यूना अनतिरिक्ता उपहिता भव-न्त्यथ कस्मात्समुद्रियं छन्द इत्यनन्तो वै समुद्रोऽनन्ताः सिकतास्तस्मात्समुद्रियं छन्दः ॥३९॥ तदाहुः। कथमस्यैताः पृथङ् नाना यजुर्भिरुपहिता भवन्तीति मनो वै यजुस्तदिदं मनो यजुः सर्वाः सिकता अनुविभवत्येवमु हास्यैताः पृथङ् नाना यजुर्भिरुपहिता भवन्ति ॥ ४० ॥ तदाहुः ।

* का॰ श्रौ॰ सू॰ १७. ३. १५

कथमस्यैताः सर्व्वैश्छन्दोभिरुपहिता भवन्तीति यदेवैनाऽएतेन षडृचेन निवपति यावन्ति हि सप्तानां छन्दसामक्षराणि तावन्त्येतस्य षडृचस्याक्षराण्येवमु हास्यैताः सर्व्वैश्छन्दोभिरुपहिता भवन्ति ॥ ४१ ॥ यद्वेव सिकता निवपति । प्रजापतिरेषोऽग्निः सर्व्वमु ब्रह्म प्प्रजापतिस्तद्धैतद्ब्रह्मण ऽउत्सन्नं यत्सिकता ऽअथ यदनुत्सन्नमिदं तद्योऽयमग्निश्चीयते तद्यत्सिकता निवपति यदेव तद् ब्रह्मणऽउत्सन्नं तदस्मिन्नेतत्प्रतिदधाति ता ऽअसंख्याता ऽअपरिमिता निवपति को हि तद्वेद यावत्तद् ब्रह्मण ऽउत्सन्नꣳ स ह वा ऽएतꣳ सर्व्वं कृत्स्नं प्रजापतिꣳ संस्करोति यऽएवं विद्वान्त्सिकता निवपति ॥ ४२ ॥ तदाहुः । कैतासामसंख्यातानाꣳ संख्येति द्वे ऽइति ब्रूयाद् द्वे हि सिकते शुक्ला च कृष्णा चाथो सप्तविꣳशतिशतानीति ब्रूयादेतावन्ति हि संवत्सरस्याहोरात्राण्यथो द्वे द्वापञ्चाशे शते ऽइत्येतावन्ति ह्येतस्य षडृचस्याक्षराण्यथो पञ्चविꣳशतिरिति पञ्चविꣳशꣳ हि रेतः ॥ ४३ ॥ ता ऽएता यजुष्मत्यऽइष्टकाः । ता ऽआत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्ह्येव यजुष्मत्य ऽइष्टका ऽउपधीयन्ते न पक्षपुच्छेषु न सादयति नेद्रेतः प्प्रजातिꣳ स्थापयानीति ॥ ४४ ॥ अथैना * ऽआप्प्यानवतीभ्यामभिमृशति । इदमेवैतद्रेतः सिक्तमाप्प्याययति तस्माद्योनौ रेतः सिक्तमाप्प्यायते सौमीभ्यां प्राणो वै सोमः प्प्राणं तद्रेतसि दधाति

---

* का० श्रौ० सू० १७. ३. १६ ।

तस्माद्रेतः सिक्तं प्राणमभिसम्भवति पूयेद्ध यद्दते प्प्राणान्त्सम्भवेद्देषो हैवात्र सूददोहाः प्प्राणो वै सोमः प्प्राणः सूददोहाः ॥ ४५ ॥ 'आप्यायस्व समेतु ते। विश्वतः सोम ऽवृष्ण्यमि'ति रेतो वै ऽवृष्ण्यमाप्प्यायस्व समेतु ते सर्वतः सोम रेत ऽइत्त्येत'द्भवा व्वाजस्य सङ्गथ' ऽइत्यन्नं वै व्वाजो भवान्नस्य सङ्गथ ऽइत्त्येत'त्सं ते पयाᳬंसि समु यन्तु व्वाजा' ऽइति रसो वै पयोऽन्नं व्वाजाः सं ते रसाः समु यन्त्वन्नानीत्त्येत'त्सं ऽवृष्ण्या- न्यभिमातिषाह' ऽइति सहः रेताᳬंसि पाप्प्मसह ऽइत्त्ये- त'दाप्प्यायमानो ऽअमृताय सोमे'ति प्प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृता 'दिवि श्श्रवाᳬंस्युत्तमानि धिष्वे'ति चन्द्रमा वा ऽअस्य दिवि श्रव ऽउत्तमᳬ सह्येन- ममुष्मिँल्लोके श्श्रावयति द्वाभ्यामाप्प्याययति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ४६ ॥ अथातः सम्प- देव। चतस्रो लोगेष्टका ऽउपदधाति षड्चेन निवपति द्वाभ्यामाप्प्याययति तद् द्वादश द्वादश मासाः संव- त्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्त- द्भवति ॥ ४७ ॥ (A)

## तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



( १ ) शु० य० सं० अ० १२ क० ११२। ( २ ) शु० य० सं० अ० १२ क० ११२। ( ३ ) शु० य० सं० अ० १२ क० ११३। ( ४ ) शु० य० सं० अ० १२ क० ११३। ( ५ ) शु० य० सं० अ० १२ क० ११३। ( ६ ) शु० य० सं० अ० १२ क० ११३।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ९. २. १; कठ० सं० १६. १४; कपि० सं० २५. ५; मै० सं० ११. ७. १४; तै० सं० ४. २. ७।

[ आनडुहे चर्मणि प्रथमचितीष्टकानामुपधानादि ]

आप्प्यानवतीभ्यामभिमृश्य । प्रत्येत्यातिथ्येन * प्प्रचरत्यातिथ्येन प्प्रचर्य्य प्प्रवर्ग्योपसद्भ्यां प्रचरति प्प्रवर्ग्योपसद्भ्यां प्रचर्य्याथैतां चर्म्मणि चितिꣳ समवशमयन्ति तद्यच्चर्म्मणि चर्म्म वै रूपꣳ रूपाणामुपाप्त्यै लोमतो लोम वै रूपꣳ रूपाणामुपाप्त्यै रोहिते रोहिते ह सर्वाणि रूपाणि सर्वेषाꣳ रूपाणामुपाप्त्या ऽआनडुहेऽग्निरेष यदनड्वानग्निरूपाणामुपाप्त्यै प्प्राचीनग्ग्रीवे तद्धि देवत्रा ॥ १ ॥ तदग्रेण गार्हपत्यम् । अन्तर्वेद्युत्तरलोम प्प्राचीनग्ग्रीवमुपस्तृणाति तदेतां चितिꣳ समवशमयन्त्यथ प्प्रोक्षति तद्यत्प्रोक्षति शुद्धमेवैतन्मेध्यं करोत्याज्येन तद्धि शुद्धं मेध्यमथो ऽअनभ्यारोहाय न हि किञ्चनान्यद्धविराज्येन प्प्रोक्षन्ति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीꣳ सर्वं वा ऽअनिरुक्तꣳ सर्वेणैवैतच्छुद्धं मेध्यं करोत्यथो ऽअनभ्यारोहाय न हि किञ्चनान्यद्धविस्तूष्णीं प्रोक्षन्ति ॥ २ ॥ यद्वेव प्प्रोक्षति । हविर्वा ऽएतत्तदेतदभिघारयति यद्वै हविरभ्यक्तं यदभिघारितं तज्जुष्टं तन्मेध्यमाज्येनाज्येन हि हविरभिघारयन्ति तूष्णीं तूष्णीꣳ हि हविरभिघारयन्ति दर्भैस्ते हि शुद्धा मेध्या ऽअग्नेरग्रꣳ हि देवानाम् ॥ ३ ॥ तदाहुः । यत्प्रथमामेव चितिं प्रोक्षति कथमस्यैष सर्वोऽग्निः प्प्रोक्षितो भवति कथं चर्म्मणि प्प्रणीतः कथमश्वप्प्रणीत-

* प्रथमचितेः सिकताप्रच्छादनमारभ्य तस्या आलम्भनान्तं कर्मजातं निष्पाद्य आतिथ्याया अवशिष्टं यच्छूर्पाद्धविरुद्वपन-निष्पवनादि तत आरभ्य उपसदन्तं कर्म कृत्वा अन्तःपात्यस्य पुरस्ताद्वेदिमध्ये प्राग्ग्रीवस्योत्तरलोम्नश्चर्मणः स्तृतस्योपरि प्रथमचितेः सर्वा इष्टका निदध्यात् । ( का० श्रौ० सू० वृ० १७. ३. १७ ) ।

ऽइति यदेवात्र सर्वासां चितीनामिष्टकाः प्रोक्षत्येवमु हास्यैष सर्वोऽग्निः प्रोक्षितो भवत्येवं चर्म्मणि प्रणीत ऽएवमनडुत्प्रणीत ऽउद्यच्छन्त्येतां चितिम् ॥ ४ ॥ अथाहाग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति । एतद्वै देवानुपप्रैष्यत ऽएतं यज्ञं तथंस्यमानान्रक्षाथंसि नाष्ट्रा ऽअजिघाथंसन्न यक्ष्यद्ध्वे न यज्ञं तथंस्यद्ध्व ऽइति तेभ्य ऽएतानग्नीनेता ऽइष्टका वज्रान्क्षुरपवीन्कृत्वा प्राहरँस्तैरेनानस्तृण्वत तान्स्तृत्वाभयेऽनाष्ट्र ऽएतं यज्ञमतन्वत ॥ ५ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदं नु तानि रक्षाथंसि देवैरेवोपहतानि यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्यथो यदेव रक्षो यः पाप्मा तेभ्य ऽएतानग्नीनेता ऽइष्टका वज्रान्क्षुरपवीन्कृत्वा प्रहरति तैरेनान्त्स्तृणुते तान्त्स्तृत्वाभयेऽनाष्ट्र ऽएतं यज्ञं तनुते ॥ ६ ॥ तद्यदग्निभ्य ऽइति । बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्प्रह्रियमाणेभ्य ऽइति प्र हि हरति ॥ ७ ॥ तद्धैकेऽन्वाहुः । 'पुरीष्यासो ऽअग्नयः प्रावणेभिः सजोषस' ऽइति प्रायणरूपं न तथा कुर्य्यादाग्नेयीरेव गायत्रीः कामवतीरनुब्रूया'दा ते वत्सो मनो यमत्तुभ्यं ता ऽअङ्गिरस्तमाग्निः प्रियेषु धामस्वि'ति ॥ ८ ॥ आग्नेयीरन्वाह । अग्निरूपाणामुपाप्त्यै कामवतीः कामानामुपाप्त्यै गायत्रीर्गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतꣳ सिञ्चति तिस्रस्त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा

(१) ऋ० सं० ३. २१. ४; शु० य० सं० १२. ५०। (२) शु० य० सं० अ० १२ क० ११५–११७।

तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति ताः सप्त सम्पद्यन्ते सह त्रिरनूक्ताभ्याꣳ सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवत्युपाꣳश्वन्न्वाह रेतो वा ऽअत्र यज्ञ ऽउपाꣳशु वै रेतः सिच्यते पश्चादनुब्रुवन्नन्न्वेति छन्दोभिरेवैतद्यज्ञं पश्चादभिरक्षन्नेति ॥ ९ ॥ अथाश्वꣳ शुक्लं पुरस्तान्नयन्ति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति त ऽएतं वज्रमपश्यन्नमुमेवादित्यमसौ वा ऽआदित्य ऽएषोऽश्वस्त ऽएतेन वज्रेण पुरस्ताद्रक्षाꣳसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्रे स्वस्ति समाश्नुवत तथैवैतद्यजमान ऽएतेन वज्रेण पुरस्ताद्रक्षाꣳसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रे स्वस्ति समश्नुत ऽआगच्छन्त्यग्निं दक्षिणतः * पुच्छस्य चितिमुपनिदधत्युत्तरतोऽश्वमाक्रमयन्ति ॥ १० ॥ तमुत्तरार्द्धेनाग्नेः । अन्तरेण परिश्रितः प्प्राञ्चं नयन्ति तत्प्राच्च्यै दिशः पाप्मानमपहन्ति तं दक्षिणा तद्दक्षिणायै दिशः पाप्मानमपहन्ति तं प्रत्यञ्चं तत्प्रतीच्च्यै दिशः पाप्मानमपहन्ति तमुदञ्चं तदुदीच्च्यै दिशः पाप्मानमपहन्ति सर्वाभ्य ऽएवैतद्दिग्भ्यो रक्षाꣳसि नाष्ट्रा ऽअपहत्याथैनमुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुः ॥ ११ ॥ † तं प्रत्यञ्चं रुषन्तम् । एतां चितिमवघ्रापयत्यसौ वा ऽआदित्य ऽएषोऽश्व ऽइमा ऽउ सर्वाः प्प्रजा या ऽइमा ऽइष्टकास्तद्यदवघ्रापयत्यसावेव तदादित्य-

* का० श्रौ० सू० १७. ३. २२ ।
† अत्र शतम् ४२००; का० श्रौ० सू० १७. ३. २६ ।

ऽइमाः प्रजा ऽअभिजिघ्रति तस्मादु हैतत्सर्वोऽस्मीति मन्यते प्रजापतेर्वीर्य्येण तद्यत्प्रत्यञ्चं ग्ग्यन्तमवघ्रापयति प्रत्यङ् ह्येवैष यन्निमाः सर्वाः प्रजा ऽअभिजिघ्रति ॥ १२ ॥

यद्वेवावघ्रापयति । असौ वा ऽआदित्य ऽएषोऽश्व ऽइम ऽउ लोका ऽएताः स्वयमातृण्णास्तद्यदवघ्रापयत्यसावेव तदादित्य ऽइमाँल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रमुपरि तस्य बन्धुः ॥ १३ ॥ यद्वेवावघ्रापयति । अग्निर्देवेभ्य ऽउदक्रामत्सोऽपः प्राविशत्ते देवाः प्रजापतिमब्रुवँस्त्वमिममन्विच्छ स तुभ्यᳬ स्वाय पित्र ऽआविर्भविष्यतीति तमश्वः शुक्लो भूत्वान्वैच्छत्तमद्भ्य ऽउपोदास्तं पुष्करपर्णे विवेद तमभ्यवेक्षाञ्चक्रे स हैनमुदुवोष तस्मादश्वः शुक्ल ऽउदुष्टमुख ऽइवाथो ह दुरक्षो भावुकस्तमु वा ऽऋत्त्वेव हिᳬसित्त्वेव मेने तᳬ होवाच वरं ते ददामीति ॥ १४ ॥

स होवाच । यस्त्वानेन रूपेणान्विच्छाद्विन्दादेव त्वा स ऽइति स यो हैनमेतेन रूपेणान्विच्छति विन्दति हैनं वित्त्वा हैवैनं चिनुते ॥ १५ ॥ स शुक्लः स्यात् । तद्ध्येतस्य रूपं य ऽएष तपति यदि शुक्लं न विन्देदप्यशुक्लः स्यादश्वस्त्वेव स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादाग्नेयो वा ऽअनड्वानग्निरु सर्वेषां पाप्मनामपहन्ता ॥ १६ ॥ अथातोऽधिरोहणस्यैव । तᳬ हैके पुरस्तात्प्रत्यञ्चमधिरोहन्ति पश्चाद्वा प्राञ्चं न तथा कुर्य्यात्पशुरेष यदग्निर्य्यो वै पशुं पुरस्तात्प्रत्यञ्चमधिरोहति विषाणाभ्यां तᳬ हन्त्यथ यः पश्चात्प्राञ्चं

पद्भ्यां तमात्मनैवैनमारोहेद्यं ब्वा ऽआत्मना पशुमारो-हन्ति स पारयति स न हिनस्त्युत्तरतो यद्धि हि कश्च पशुमारोहन्त्युत्तरत ऽएवैनमारोहन्त्यारुह्याग्निमौत्तरवेदिकं कर्म्म कृत्वात्मन्नग्निं गृह्णीत ऽआत्मन्नग्निं गृहीत्वा सत्यं साम गायति पुष्करपर्णमुपदधाति तस्यातः ॥ १७ ॥ अथैतद्ध सायं भूतेऽश्वं परिणयन्ति । एतद्वै देवा ऽअबि-भयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तस्मा ऽएतं ब्वज्रमभिगोप्तारमकुर्वन्नमुमेवादित्यमसौ ब्वा-ऽआदित्य ऽएषोऽश्वस्तथैवास्मा ऽअयमेतं ब्वज्रमभि-गोप्तारं करोति ॥ १८ ॥ तं ब्वा ऽउपास्तमयमादित्यस्य * परिणयति । एष ब्वा ऽअस्य प्प्रत्यक्षं दिवा गोप्ता भवति रात्रिसाचयान्न्यु वै रक्षाꣳसि रात्र्या ऽएवास्मा ऽएतं ब्वज्रमभिगोप्तारं करोति सर्व्वतः परिणयति सर्व्वत-ऽएवास्मा ऽएतं ब्वज्रमभिगोप्तारं करोति त्रिष्कृत्वः परिणयति त्रिवृतमेवास्मा ऽएतं ब्वज्रमभिगोप्तारं करो-त्यथैनमुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुरथ स पुनर्व्विपल्ययते तस्योपरि बन्धुः ॥ १९ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०५ ॥



* का० श्रौ० सू० १७. ३. २५ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ९ २. २; कठ सं० १६. ११; कपि० २५. २; मै० सं० ११. ७. ११ तै० सं० ४. २. ४ ।

[ अग्निग्रहणम्, सत्यसामगानम्, पुष्करपर्णोपधानं च ]

आत्मन्नग्निं गृह्णीते चेष्यन् । आत्मनो वा ऽएतमधिजनयति यादृशाद्वै जायते तादृङ्ङेव भवति स यदात्मन्नगृहीत्वाग्निं चिनुयान्मनुष्यादेव मनुष्यं जनयेन्मर्त्यान्मर्त्यमनपहतपाप्मनोऽनपहतपाप्मानमथ यदात्मन्नग्निं गृहीत्वा चिनोति तदग्नेरेवाध्यग्निं जनयत्यमृतादमृतमपहतपाप्मनोऽपहतपाप्मानᳬ ॥ १ ॥ † स गृह्णाति । 'मयि गृह्णाम्यग्ने ऽअग्निमिति तदात्मन्नेवाग्रेऽग्निं गृह्णीते '[2]रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याये'ति तदु सर्वा ऽआशिष ऽआत्मन्गृह्णीते '[3]मामु देवताᳬ सचन्तामि'ति तदु सर्वान्देवानात्मन्गृह्णीते तद्यत्किंचात्मनोऽधि जनयिष्यन्भवति तत्सर्वमात्मन्गृह्णीते स वै तिष्ठन्नात्मन्नग्निं गृहीत्वानूपविश्य चिनोति पशुरेष यदग्निस्तस्मात्पशुस्तिष्ठन्गर्भं धित्वानूपविश्य विजायते ॥ २ ॥ अथ सत्यᳬ ‡ साम गायति । एतद्वै देवा ऽअब्रुवन्त्सत्यमस्य मुखं करवाम ते सत्यं भविष्यामᳬ सत्यं नोऽनुवर्त्स्यति सत्यो नᳬ स कामो भविष्यति यत्कामा ऽएतत्करिष्यामह ऽइति ॥ ३ ॥ त ऽएतत्सत्यᳬ साम पुरस्तादगायन् । तदस्य सत्यं मुखमकुर्वंस्ते सत्यमभवन्त्सत्यमेनाननुवर्त्तत सत्य ऽएषाᳬं स कामोऽभवद्यत्कामा ऽएतदकुर्वत ॥ ४ ॥

† का० श्रौ० सू० १७. ३. २७ ।

( १ ) शु० य० सं० अ० १३ क० १ । ( २ ) शु० य० सं० अ० १३ क० १ ।
( ३ ) शु० य० सं० अ० १३ क० १ ।

‡ का० श्रौ० सू० १७. ३. २८ ।

तथैवैतद्यजमानः । यत्सत्यꣳ साम पुरस्ताद्गायति तदस्य, सत्यं मुखं करोति स सत्यं भवति सत्यमेनमनुवर्त्तते सत्योऽस्य स कामो भवति यत्काम ऽएतत्कुरुते ॥ ५ ॥ तद्यत्तत्सत्यम् । आप ऽएव तदापो हि वै सत्यं तस्मा-द्येनापो यन्ति तत्सत्यस्य रूपमित्याहुरप ऽएव तदस्य सर्वस्याग्रमकुर्वंस्तस्माद्यदैवापो यन्त्यथेदꣳ सर्वं जायते यदिदं किञ्च ॥ ६ ॥ अथ * पुष्करपर्णमुपदधाति । योनिर्वै पुष्करपर्णं ꣳ योनिमेवैतदुपदधाति ॥ ७ ॥ यद्वेव पुष्करपर्ण-मुपदधाति । आपो वै पुष्करं तासामियं पर्णं ꣳ यथा ह वा-ऽइदं पुष्करपर्णमप्स्वध्याहितमेवमियमप्स्वध्याहिता सेयं ꣳ योनिरग्नेरियꣳ ह्यग्निरस्यै हि सर्वोऽग्निश्चीयत ऽइमामे-वैतदुपदधाति तामनन्तर्हिताꣳ सत्यादुपदधातीमां तत्सत्ये प्प्रतिष्ठापयति तस्मादियꣳ सत्ये प्प्रतिष्ठिता तस्माद्विय-मेव सत्यमियꣳ ह्येवैषां लोकानामद्धातमाम् ॥ ८ ॥ 'अपां[1] पृष्ठमसि योनिरग्ने'रिति । अपाꣳ हीयं पृष्ठं ꣳ योनिर्हीयमग्नेः 'समुद्रमभितः[2] पिन्वमामि'ति समुद्रो हीमामभितः पिन्वते 'वर्द्धमानो[3] महाँ२॥ ऽआ च पुष्कर' ऽइति वर्द्धमानो महीयस्व पुष्कर ऽइत्येत'द्दिवो मात्रया[4] वरिम्णा प्प्रथस्वे'त्यनुविमाष्टर्यसौ वा ऽआदित्य ऽएषो-ऽग्निर्नो हैतमन्यो दिवो वरिमा यन्तुमर्हति द्यौर्भूत्वैनं यच्छेत्येवैतदाह स्वराजोपदधाति स्वाराज्यꣳ ह्यपाꣳ

* पुष्करपर्णमुपदधाति स्तम्बे पूर्ववत् ( का० श्रौ० सू० १७. ४. १ )।

( १ ) शु० य० सं० अ० १३ क० २ । ( २ ) शु० य० सं० अ० १३ क० २ । ( ३ ) शु० य० सं० अ० १३ क० २ । ( ४ ) शु० य० सं० अ० १३ क० २ ।

सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ ९ ॥ अथ † रुक्ममुपदधाति । असौ वा ऽआदित्य ऽएष रुक्मम-ऽएष हीमाः सर्व्वाः प्प्रजा ऽअतिरोचते रोचो ह वै तः रुक्म ऽइत्याचक्षते परोक्षं परोक्षकामा हि देवा ऽअमुमे-वैतदादित्यमुपदधाति स हिरण्मयो भवति परिमण्डल-ऽएकविꣳशतिनिर्बाधस्तस्योक्तो बन्धुरधस्तान्निर्बाधमुप-दधाति रश्मयो वा ऽएतस्य निर्बाधा ऽअवस्तादु वा-ऽएतस्य रश्मयः ॥ १० ॥ तं पुष्करपर्ण्णं ऽउपदधाति । योनिर्व्वै पुष्करपर्ण्णं योनावेवैनमेतत्प्रतिष्ठापयति ॥ ११ ॥ यद्वेव पुष्करपर्ण्ण ऽउपदधाति । प्रतिष्ठा वै पुष्करपर्ण्णमियं व्वै पुष्करपर्ण्णमियमु वै प्प्रतिष्ठा यो वा ऽअस्यामप्प्रतिष्ठि-तोऽपि दूरे सन्नप्प्रतिष्ठित ऽएव स रश्मिभिर्व्वा ऽएषो-ऽस्यां प्रतिष्ठितोऽस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥ १२ ॥ यद्वेव पुष्करपर्ण्ण ऽउपदधाति । इन्द्रो व्वृत्रꣳ हत्वा नास्तृषीति मन्न्यमानोऽपः प्प्राविशत्ता ऽअब्रवीद्वि-भेमि वै पुरं मे कुरुतेति स योऽपाꣳ रस ऽआसीत्तमूर्द्ध्वꣳ-समुदौहꣳस्तामस्मै पुरमकुर्वꣳस्तद्यदस्मै पुरमकुर्वꣳस्तस्मा-त्पुष्करं पुष्करꣳ ह वै तत्पुष्करमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तद्यत्पुष्करपर्ण्णऽउपदधाति यमे-वास्मै तमापो रसꣳ समुदौहन्न्यामस्मै पुरमकु-र्वꣳस्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति ॥ १३ ॥ '<sup></sup>ब्रह्म जज्ञानं प्रथमं पुरस्तादि'ति । असौ वा ऽआदित्यो ब्रह्माहरहः

---

† का० श्रौ० सू० १७. ४. २ ।

( १ ) शु० य० सं० अ० १३ क० ३ ।

पुरस्ताज्जायते 'वि सीमतः सुरुचो वेन ऽआवरि'ति मध्यं वै सीमेमे लोकाः सुरुचोऽसावादित्यो वेनो यद्वै प्रजिजनिषमाणोऽवेनत्तस्माद्वेनस्तानेष सीमतो मध्यतो विवृण्वन्नुदेति 'स बुध्न्या ऽउपमा ऽअस्य विष्ठा' ऽइति दिशो वाऽअस्य बुध्न्या ऽउपमा विष्ठास्ता ह्येष ऽउपवितिष्ठते 'सतश्च योनिमसतश्च विवरि'तीमे वै लोकाः सतश्च योनिरसतश्च यच्च ह्यस्ति यच्च न तदेभ्य ऽएव लोकेभ्यो जायते त्रिष्टुभोपदधाति त्रैष्टुभो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥१४॥ अथ * पुरुषमुपदधाति । स प्रजापतिः सोऽग्निः स यजमानः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरग्निरमृतꣳ हिरण्यममृतमग्निः पुरुषो भवति पुरुषो हि प्प्रजापतिः ॥ १५ ॥ यद्वेव पुरुषमुपदधाति । प्रजापतेर्विस्रस्ताद्रम्म्या तनूर्म्मध्यत ऽउदक्रामत्तस्यामेनमुत्क्रान्तायां देवा ऽअजहुस्तं रयत्र देवाः समस्कुर्वंस्तदस्मिन्नेताꣳ रम्म्यां तनूं मध्यतोऽदधुस्तस्यामस्य देवा ऽअरमन्त तद्यदस्यैतस्याꣳ रम्म्यायां तन्वां देवा ऽअरमन्त तस्माद्धि रम्म्यꣳ हि रम्म्यꣳ ह वै तद्धिरण्यमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्मिन्नयमेताꣳ रम्म्यां तनूं मध्यतो दधाति तस्यामस्य देवा रमन्ते प्प्राणो वा ऽअस्य सा रम्म्या तनूः प्प्राणमेवास्मिन्नेतं मध्यतो दधाति ॥१६॥ तꣳ रुक्म ऽउपदधाति। असौ वा ऽआदित्य ऽएष रुक्मोऽथ

---

( १ ) शु० य० सं० अ० १३ क० ३ । ( २ ) शु० य० सं० अ० १३ क० ३ । ( ३ ) शु० य० सं० अ० १३ क० ३ ।

* का० श्रौ० सू० १७. ४. ३ ।

स ऽएष ऽएतस्मिन्मण्डले पुरुषः स ऽएष तमेवैतदुपदधाति ॥ १७ ॥ उत्तानमुपदधाति । एतद्ध देवा ऽअब्रुवन्यदि वा ऽइमावर्वाञ्चा ऽउपधास्यामः सर्वमेवेदं प्रधक्ष्यतो यद्यु पराञ्चौ पराञ्चावेव तप्स्यतो यद्यु सम्यञ्चावन्तरेवैतावेतज्ज्योतिर्भविष्यत्यथो ऽअन्योऽन्यछ हिछसिष्यतऽइति तेऽर्वाञ्चमन्यमुपादधुः पराञ्चमन्यछ स ऽएष रश्मिभिरर्वाङ् तपति रुक्मः प्राणैरेष ऽऊर्ध्वः पुरुषः प्राञ्चमुपदधाति प्राङ् ह्येषोऽग्निश्चीयते ॥ १८ ॥ 'हिरण्यगर्भः समवर्त्तताग्र' ऽइति । हिरण्यगर्भो ह्येष समवर्त्तताग्रे 'भूतस्य जातः पतिरेक ऽआसीदि'त्येष ह्यस्य सर्वस्य भूतस्य जातः पतिरेक ऽआसी'त्स दाधार पृथिवीं द्यामुतेमामि'त्येष वै दिवं च पृथिवीं च दाधार 'कस्मै देवाय हविषा विधेमे'ति प्रजापतिर्वै कस्तस्मै हविषा विधेमेत्येतत् ॥ १९ ॥ 'द्रप्सश्चस्कन्द पृथिवीमनु द्यामि'ति । असौ वा ऽआदित्यो द्रप्सः स दिवं च पृथिवीं च स्कन्दतीत्यमूमितीमा'मिमं च योनिमनु यश्च पूर्व' ऽइतीमं च लोकममुं चेत्येतदथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयतेति 'समानं योनिमनु सञ्चरन्तमि'ति समानछ ह्येष एतं योनिमनु सञ्चरति 'द्रप्सं जुहोम्यनु सप्त होत्रा' ऽइत्यसौ वा ऽआदित्यो द्रप्सो दिशः सप्त होत्रा ऽअमुं

(१) शु० य० सं० अ० १३ क० ४। (२) शु० य० सं० अ० १३ क० ४। (३) शु० य० सं० अ० १३ क० ४। (४) शु० य० सं० अ० १३ क० ४। (५) शु० य० सं० अ० १३ क० ५। (६) शु० य० सं० अ० १३ क० ५। (७) शु० य० सं० अ० १३ क० ५। (८) शु० य० सं० अ० १३ क० ५।

तदादित्यं दिक्षु प्प्रतिष्ठापयति ॥ २० ॥ द्वाभ्यामुपदधाति । द्विपाद्यजमानो यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुब्भ्यां त्रैष्टुब्भ्यो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २१ ॥ अथ * साम गायति । एतद्वै देवा ऽएतं पुरुषमुपधाय तमेतादृशमेवापश्यन्यथैतच्छुष्कं फलकम् ॥ २२ ॥ तेऽब्रुवन् । उप तज्जानीत यथास्मिन्पुरुषे वीर्य्यं दधामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथास्मिन्पुरुषे वीर्य्यं दधामेति ॥ २३ ॥ ते चेतयमानाः । एतत्सामापश्यँस्तदगायँस्तदस्मिन्वीर्य्यमदधुस्तथैवास्मिन्नयमेतद्दधाति पुरुषे गायति पुरुषे तद्वीर्य्यं दधाति चित्रे गायति सर्वाणि हि चित्राण्यग्निस्तमुपधाय न पुरस्तात्परीयान्नेन्मायमग्निर्हिनसदिति ॥ २४ ॥ अथ † सर्प्पनामैरुपतिष्ठते । इमे वै लोकाः सर्प्पास्ते हानेन सर्व्वेण सर्प्पन्ति यदिदं किञ्च सर्व्वेषामु हैष देवानामात्मा यदग्निस्ते देवा ऽएतमात्मानमुपधायाबिभयुर्य्यद्वै न ऽइमे लोका ऽअनेनात्मना न सर्प्पेयुरिति ॥ २५ ॥ त ऽएतानि सर्प्पनामान्यपश्यन् । तैरुपातिष्ठन्त तैरस्मा ऽइमाँल्लोकानस्थापयँस्तैरनमयन्यदनमयँस्तस्मात्सर्प्पनामानि तथैवैतद्यजमानो यत्सर्प्पनामैरुपतिष्ठत ऽइमानेवास्मा ऽएतल्लोकान्स्थापयतीमाँल्लोकान्नमयति तथो हास्यैत ऽएतेना-

* का० श्रौ० सू० १७. ४. ४ ।

† का० श्रौ० सू० १७. ४. ६ ।

ऽत्मना न सर्प्पन्ति ॥ २६ ॥ यद्वेव सर्प्पनामैरुपतिष्ठते । इमे वै लोकाः सर्प्पा यद्धि किञ्च सर्प्पत्येष्वेव तँल्लोकेषु सर्प्पति तद्यत्सर्प्पनामैरुपतिष्ठते यैवैषु लोकेषु नाष्ट्रा यो ऽव्यद्वरो या शिमिदा तदेवैतत्सर्वँ शमयति ॥ २७ ॥ 'नमोऽस्तु[1] सर्प्पेभ्यः । ये के च पृथिवीमनु । ये ऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नम' ऽइति य ऽएवैषु त्रिषु लोकेषु सर्प्पास्तेभ्य ऽएतन्नमस्करोति ॥ २८ ॥ 'या-ऽइषवो[2] यातुधानानामि'ति । यातुधानप्प्रेषिता हैके दशन्ति 'ये वा[3] वनस्प्पतीँ२ रनु । ये वावटेषु शेरते तेभ्यः सर्प्पेभ्यो नम' ऽइति ये चैव वनस्प्पतिषु सर्प्पा ये चावटेषु शेरते तेभ्य ऽएत्तन्नमस्करोति ॥ २९ ॥ 'ये वामी[4] रोचने दिवः । ये वा सूर्य्यस्य रश्मिषु । येषामप्प्सु सद-स्कृतं तेभ्यः सर्प्पेभ्यो नम' ऽइति यत्र-यत्रैते तदेवैभ्य ऽएतन्नमस्करोति नमो नम ऽइति यज्ञो वै नमो यज्ञेनैवैनानेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽइति यथा हैनं ब्रूयाद्यज्ञस्त ऽइति तादृक्तत् ॥ ३० ॥ त्रिभिरुपतिष्ठते । त्रय ऽइमे लोका ऽअथो त्रिवृद-ग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्म्मा ऽएतदि-माँल्लोकान्त्स्थापयत्यथो तावतैवैतदिदँ सर्वँ शम-यति तिष्ठन्नुपतिष्ठते तिष्ठन्तीव वा ऽइमे लोका ऽअथो तिष्ठन्न्वै वीर्य्यवत्तरः ॥ ३१ ॥ * अथैनमुपविश्याभिजुहोति

---

(१) शु० य० सं० अ० १३ क० ६ । (२) शु० य० सं० अ० १३ क० ७ । (३) शु० य० सं० अ० १३ क० ७ । (४) शु० य० सं० अ० १३ क० ९ ।

* का० श्रौ० सू० १७. ४. ७ ।

आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः सर्वतः परिसर्प्पꣳ सर्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेन प्प्रीणाति ॥ ३२ ॥ षड्वैवैनमभिजुहोति * । एतद्वै देवा ऽएतमात्मानमुपधाया-विभयुर्यद्वै न ऽइममिह रक्षांसि नाष्ट्रा न हन्न्युरिति त ऽएतान्न्राक्षोघ्नान्न्प्रतिसरानपश्य'न्कृणुष्व पाजः प्प्रसितिं न पृथ्वीमि'ति राक्षोघ्ना वै प्रतिसरास्त ऽएतैः प्प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षांसि नाष्ट्रा ऽअपहत्या-ऽभयेऽनाष्ट्र ऽएतमात्मानꣳ समस्कुर्वत तथैवैतद्यजमान-ऽएतैः प्प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षांसि नाष्ट्रा-ऽअपहत्याऽभयेऽनाष्ट्र ऽएतमात्मानꣳ संस्कुरुते ॥ ३३ ॥ आज्येन जुहोति । † वज्रो वा ऽआज्यं वज्रेणैवैतद्रक्षांसि नाष्ट्रा ऽअपहन्ति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैतद्रक्षांसि नाष्ट्रा ऽअपहन्त्याग्नेयीभिरग्निर्वै ज्योती रक्षोहाग्निनैवैतद्रक्षांसि नाष्ट्रा ऽअपहन्ति त्रिष्टुब्भिर्वज्रो वै त्रिष्टुब्वज्रेणैवैतद्रक्षांसि नाष्ट्रा ऽअपहन्ति सर्वतः परिसर्प्पꣳ सर्वाभ्य ऽएवैतद्दिग्भ्यो रक्षांसि नाष्ट्रा-ऽअपहन्ति ॥ ३४ ॥ पश्चादग्नेः प्प्राङासीनः । अथोत्तरतो दक्षिणाथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य दक्षिणत-ऽउदङ्ङासीनस्तद्दक्षिणावृत्तद्धि ‡ देवत्राथानुपरीत्य पश्चा-

* का० श्रौ० सू० १७. ४. ७ ।

( १ ) शु० य० सं० अ० १३ क० ९–१३; ऋ० सं० ४. ४. १ ।

† तैत्तिरीयकेऽपि घृतस्य वज्ररूपत्वम्प्रसिद्धम् ( तै० सं० ६. २. २. ७ ) ।

‡ का० श्रौ० सू० १७. ४. ८–१० ।

.त्प्राङासीनस्तथो हास्यैतत्प्रागेव कर्म्म कृतं भवति ॥ ३५ ॥ अथ * स्रुचा ऽउपदधाति। बाहू वै स्रुचौ बाहू ऽएवा-स्मिन्नेतत्प्रतिदधाति ते यत्स्रुचौ भवतः स्रुचौ हि बाहू-ऽइदमेव † कपुत्सलमयं दण्डो द्वे भवतो द्वौ हीमौ बाहू पाश्र्वत ऽउपदधाति पाश्र्वतो हीमौ बाहू ॥ ३६ ॥ कार्ष्म-र्य्यमयीं ‡ दक्षिणत ऽउपदधाति। एतद्वै देवा ऽअबि-भयुर्य्यद्वै नो यज्ञं दक्षिणतो रक्षांसि नाष्ट्रा न हन्युरिति त ऽएतं रक्षोहणं वनस्पतिमपश्यन्कार्ष्मर्य्यं त ऽएतेन वनस्पतिना दक्षिणतो रक्षांसि नाष्ट्रा ऽअपहत्याभये-ऽनाष्ट्र ऽएतं यज्ञमतन्वत तथैवैतद्यजमान ऽएतेन वनस्प-तिना दक्षिणतो रक्षांसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्र-ऽएतं यज्ञं तनुत ऽआज्येन पूर्णा भवति वज्रो वा ऽआज्यं वज्रेणैवैतद्दक्षिणतो रक्षांसि नाष्ट्रा ऽअपहन्ति ॥ ३७ ॥ अथौदुम्बरीमुत्तरत ऽउपदधाति $। ऊर्ग्वै रस ऽउदुम्बर-ऽऊर्ज्जमेवास्मिन्नेतद्रसं दधाति दध्ना पूर्णा भवति रसो वै दधि रसमेवास्मिन्नेतद्दधाति ॥ ३८ ॥ यद्वेव स्रुचा-ऽउपदधाति। प्रजापतेर्विस्रस्तस्याग्निस्तेज ऽआदाय दक्षि-णाकर्षत्सोऽत्रोदरमद्यत्कृष्ट्वोदुरमत्तस्मात्कार्ष्मर्य्योऽथास्येन्द्र-ऽओज ऽआदायोदङ्ङुदक्रामत्स ऽउदुम्बरोऽभवत् ॥ ३९ ॥ तावब्रवीत्। उप मेतं प्रति म ऽएतद्धत्तं य्येन मे युवमुद्-

* का० श्रौ० सू० १७. ४. ११।

† 'क पुच्छलम्' इति 'ख-ग' पुस्तकयोः।

‡ का० श्रौ० सू० १७. ४. १२।

$ का० श्रौ० सू० १७. ४. १३।

क्रमिष्टमिति ताभ्यां वै नौ सर्वमन्नं प्रयच्छेति तौ वै मा बाहू भूत्वा प्प्रपद्येथामिति तथेति ताभ्यां वै सर्वमन्नं प्रायच्छत्तावेनं बाहू भूत्वा प्प्रापद्येतां तस्माद्बाहुभ्यामेवान्नं क्रियते बाहुभ्यामद्यते बाहुभ्याᳬं हि स सर्वमन्नं प्रायच्छत् ॥ ४० ॥ स कार्ष्मर्य्यमयीं दक्षिणत उपदधाति । 'अग्नेष्ट्वा[1] तेजसा सादयामी'ति यदेवास्य तदग्निस्तेज ऽआदाय दक्षिणाकर्षत्तदस्मिन्नेतत्प्रतिदधा'त्यग्निर्म्मूर्द्धा दिवः[2] ककुदि'त्येष ऽउ सोऽग्निर्गायत्र्या गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति घृतेन पूर्णा भवत्याग्नेयं वै घृतᳬं स्वेनैवैनमेतद्भागेन स्वेन रसेन प्प्रीणाति ॥ ४१ ॥ अथौदुम्बरीमुत्तरत * ऽउपदधाति । 'इन्द्रस्य[3] त्वौजसा सादयामी'ति यदेवास्य तदिन्द्र ऽओज ऽआदायोदङ्ङुदक्रामत्तदस्मिन्नेतत्प्रतिदधाति 'भुवो[4] यज्ञस्य रजसश्च नेते'त्येष ऽउ स ऽइन्द्रः सा यदाग्नेय्यग्निकर्म्म ह्यथ यत्त्रिष्टुप्त्रैष्टुभो हीन्द्र ऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधातीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति दध्ना पूर्णा भवत्यैन्द्रं वै दधि स्वेनैवैनमेतद्भागेन स्वेन रसेन प्प्रीणाति ॥ ४२ ॥ तावस्यैताविन्द्राग्नी ऽएव बाहू । तावेनं तेजसा च वीर्य्येण च सह प्प्रपद्येते स सम्प्रत्युरः

( १ ) शु० य० सं० अ० १३ क० १३ । ( २ ) शु० य० सं० अ० १३ क० १४ ।
* का० श्रौ० सू० १७. ४. १३ ।
( ३ ) शु० य० सं० अ० १३ क० १४ । ( ४ ) शु० य० सं० अ० १३ क० १५

पुरुषमाकाश्य यत्राभ्याप्नोति तदालिख्यैने ऽउपदधात्येष हैतयोर्ल्लोकः ॥४३॥ [ अर्धप्रपाठकः ४३॥ ] ते हैके तिरश्च्या ऽउपदधति । तिर्य्यञ्चौ वा ऽइमौ बाहू ऽइति न तथा कुर्य्यात्प्राच्यावेवोपदध्यात्प्राङ् ह्येषोऽग्निश्चीयतेऽथो ऽएवं वै बाहू वीर्य्यवत्तरौ ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू ॥ ४४ ॥ तदाहुः । नैतस्य पुरुषस्य बाहू कुर्य्यादेतौ वा ऽअस्य बाहू ये ऽएते स्रुचौ नेदतिरेचयानीति स वै कुर्य्यादेवैतौ वा ऽअस्य बाहू ऽअन्वेते स्रुचावथो ऽएतौ पक्षावथो यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन्भवति यान्त्स्तोमान्यानि पृष्ठानि यानि च्छन्दाᳬंस्येतयोरेव सा संस्कृतिरेतयोर्व्वृद्धिस्तस्मादु कुर्य्यादेवैतस्य पुरुषस्य बाहू ॥ ४५ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्वयमातृण्णेष्टकोपधानादि ]

स्वयमातृण्णामुपदधाति । इयं वै स्वयमातृण्णेमामेवैतदुपदधाति तामनन्तर्हितां पुरुषादुपदधात्यन्नं वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वा ऽअन्नमस्याᳬं हि सर्व्वमन्नं. पच्यतेऽनन्तर्हितमेवास्मादेतदन्नं दधात्युत्तरामुत्तरमेवास्मादेतदन्नं दधाति ॥ १ ॥ यद्वेव स्वयमातृण्णामुप-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ९. ३. ३,४; कठ० सं० १६. १५,१६; कपि० २५. ६; मै० सं० ११. ७. १५; तै० सं० ४. २. ८ ।

दुधाति । प्राणो वै स्वयमातृण्णा प्प्राणो ह्येवैतत्स्वयमात्मन-ऽआतृन्ते प्प्राणमेवैतदुपदधाति तामनन्तर्हितां पुरुषादुप-दधाति प्प्राणो वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वै प्राणो यद्धि किञ्च प्राणीयं तत्सर्वं बिभर्त्यनन्तर्हितमे-वास्म्मादेतत्प्राणं दधात्युत्तरामुत्तरमेवास्म्मादेतत्प्राणं दधाति ॥ २ ॥ यद्वेव स्वयमातृण्णामुपदधाति । प्रजापतिं विस्त्रस्तं देवता ऽआदाय व्व्युदक्रामँस्तासु व्व्युत्क्रामन्तीषु प्प्रति-ष्ठामभिपद्योपाविशत् ॥ ३ ॥ स यः स प्रजापतिर्व्व्यस्त्रᳪ-सत । अयमेव स योऽयमग्निश्चीयतेऽथ या सा प्प्रतिष्ठैषा सा प्प्रथमा स्वयमातृण्णा तद्यदेतामत्रोपदधाति यदेवास्यैषात्मनस्तदस्म्मिन्नेतत्प्रतिदधाति तस्म्मादेतामत्रो-पदधाति ॥ ४ ॥ तां वै प्रजापतिनोपदधाति । प्रजापति-र्ह्येवैतत्स्वयमात्मनः प्प्रत्यधत्त '[१]ध्रुवासी'ति स्थिरासीत्ये-तदथो प्रतिष्ठितासीति '[२]धरुणे'ति प्प्रतिष्ठा वै धरुण-'[३]मास्तृता विश्श्वकर्म्मणे'ति प्प्रजापतिर्वै विश्श्वकर्म्मा तेनास्तृ-तासीत्त्येत'[४]न्मा त्वा समुद्र ऽउद्वधीन्मा सुपर्ण्ण' ऽइति रुक्क्मो वै समुद्रः पुरुषः सुपर्ण्णस्तौ त्वा मोद्वधिष्टामित्त्येत-'[५]दव्व्यथमाना पृथिवीं दृᳪहे'ति यथैव यजुस्तथा बन्धुः ॥ ५ ॥ '[६]प्रजापतिष्ट्वा सादयत्वि'ति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्श्य'[७]दपां पृष्ठे समुद्रस्येमन्नि'त्त्यपाᳪ हीयं पृष्ठᳪ

(१) शु० य० सं० अ० १३ क० १६। (२) शु० य० सं० अ० १३ क० १६। (३) शु० य० सं० अ० १३ क० १६। (४) शु० य० सं० अ० १३ क० १६। (५) शु० य० सं० अ० १३ क० १६। (६) शु० य० सं० अ० १३ क० १७। (७) शु० य० सं० अ० १३ क० १७।

समुद्रस्य * हीयमेम 'व्व्यचस्वतीं[1] प्रथस्वतीमि'ति व्व्यचस्वती च हीयं प्रथस्वती च 'प्रथस्व[2] पृथिव्व्यसी'ति प्प्रथस्व पृथिवी चासीत्त्येतत् ॥ ६ ॥ 'भूरसी'[3]ति । भूर्हीयं 'भूमिरसी'[4]ति भूमिर्हीय'मदितिरसी'[5]तीयं वा ऽअदितिरियꣳ हीदꣳ सर्वं ददते 'विश्श्वधाया'[6] ऽइत्त्यस्याꣳ हीदꣳ सर्वꣳ हितं 'विश्श्वस्य[7] भुवनस्य धर्त्री'ति सर्वस्य भुवनस्य धर्त्रीत्त्येत'त्पृथिवीं यच्छ[8] पृथिवीं दृꣳह पृथिवीं मा हिꣳसीरि'त्त्यात्मानं यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्त्येतत् ॥ ७ ॥ 'विश्श्वस्म्मै[9] प्प्राणायापानाय । व्व्यानायोदानाये'ति प्प्राणो वै स्वयमातृण्णा सर्वस्म्मा ऽउ वा ऽएतस्म्मै प्प्राणः 'प्प्रतिष्ठायै[10] चरित्राये'तीमे वै लोकाः स्वयमातृण्णा ऽइम ऽउ लोकाः प्प्रतिष्ठा चरित्र'मग्निष्ट्वाभिपात्वि'[11]त्त्यग्निष्ट्वाभिगोपायत्वित्त्येत'न्मह्या[12] स्वस्त्ये'ति मह्त्या स्वस्त्येत्त्येत'च्छर्दिषा[13] शन्तमेने'ति यच्छर्दिः शन्तमं तेनेत्त्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुरथ † साम गायति तस्योपरि बन्धुः ॥ ८ ॥ तदाहुः । कथमेष पुरुषः स्वयमातृण्णयानभिनिहितो भव-

---

* 'हीयमेव' इति पाठो 'ज' पुस्तके ।

(१) शु० य० सं० अ० १३ क० १७ । (२) शु० य० सं० अ० १३ क० १७ (३) शु० य० सं० अ० १३ क० १८ । (४) शु० य० सं० अ० १३ क० १८ (५) शु० य० सं० अ० १३ क० १८ । (६) शु० य० सं० अ० १३ क० १८ (७) शु० य० सं० अ० १३ क० १८ । (८) शु० य० सं० अ० १३ क० १८ (९) शु० य० सं० अ० १३ क० १९ । (१०) शु० य० सं० अ० १३ क० १९ (११) शु० य० सं० अ० १३ क० १९ । (१२) शु० य० सं० अ० १३ क० १९ (१३) शु० य० सं० अ० १३ क० १९ ।

† का० श्रौ० सू० १७. ४. १६ ।

तीत्यन्नं वै स्वयमातृण्णा प्राणः स्वयमातृण्णानभिनिहितो वै पुरुषोऽन्नेन च प्राणेन च ॥ ९ ॥ अथ * दूर्वेष्टकामुपदधाति । पशवो वै दूर्वेष्टका पशूनेवैतदुपदधाति तद्यैरदोऽग्निरनन्तर्हितैः पशुभिरुपैत्त ऽएते तानेवैतदुपदधाति तामनन्तर्हिताᳬ स्वयमातृण्णाया ऽउपदधातीयं वै स्वयमातृण्णानन्तर्हिताँस्तदस्यै पशून्दधात्युत्तरामुत्तराँस्तदस्यै पशून्दधाति ॥ १० ॥ यद्वेव दूर्वेष्टकामुपदधाति । प्रजापतेर्विस्रस्तस्य यानि लोमान्यशीयन्त ता ऽइमा ऽओषधयोऽभवन्नथास्माद्प्राणो मद्ध्यत ऽउदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत ॥ ११ ॥ सोऽब्रवीत् । अयं वाव माऽधूर्वीदिति यदब्रवीदधूर्वीन्मेति तस्माद्धूर्वा धूर्वा ह वै तां दूर्वेत्याचक्षते परोक्षं परोक्षकामा हि देवास्तदेतत्क्षत्रं प्राणो ह्येष रसो लोमान्न्यन्न्या ऽओषधय ऽएतामुपदधत्सर्वा ऽओषधीरुपदधाति ॥ १२ ॥ तं यत्र देवाः समस्कुर्वन् । तदस्मिन्नेतं प्राणᳬ रसं मद्ध्यतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति तामनन्तर्हिताᳬ स्वयमातृण्णाया ऽउपदधातीयं वै स्वयमातृण्णानन्तर्हितास्तदस्या ऽओषधीर्दधात्युत्तरामुत्तरास्तदस्या ऽओषधीर्दधाति सा स्यात्समूला साग्रा कृत्स्नतायै यथा स्वयमातृण्णायामुपहिता भूमिं प्राप्नुयादेवमुपदध्यादस्याᳬ ह्येवैता जायन्त ऽइमामनु प्ररोहन्ति ॥ १३ ॥ [1]'काण्डात्काण्डात्प्ररोहन्ती । परुषः परुषस्परी'ति काण्डात्काण्डाद्ध्येषा पर्वणः–पर्वणः प्ररो-

* का० श्रौ० सू० १७. ४. १८ ।

( १ ) शु० य० सं० अ० १३ क० २० ।

•ह'स्येवा नो दूर्वे प्प्रतनु सहस्रेण शतेन चे'ति यथैव यजुस्तथा बन्धुः ॥ १४ ॥ 'या शतेन प्प्रतनोषि । सहस्रेण विरोहसी'ति शतेन ह्येषा प्प्रतनोति सहस्रेण विरोहति 'तस्यास्ते देवीष्टके विधेम हविषा वयमि'ति यथैव यजुस्तथा बन्धुर्द्वाभ्यामुपदधाति तस्योक्तो बन्धुः सादयित्त्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ १५ ॥ अथ * द्वियजुषमुपदधाति । इन्द्राग्नी ऽअकामयेताᳬ स्वर्ग्गं लोकमियावेति तावेतामिष्टकामपश्श्यतां द्वियजुषमिमामेव तामुपादधातां तामुपधायास्यै प्प्रतिष्ठायै स्वर्ग्गं लोकमैतां तथैवैतद्यजमानो यद् द्वियजुषमुपदधाति येन रूपेण यत्कर्म्म कृत्त्वेन्द्राग्नी स्वर्ग्गं लोकमैतां तेन रूपेण तत्कर्म्म कृत्त्वा स्वर्ग्गं लोकमयानीति सा यद् द्वियजुर्न्नाम द्वे ह्येतां देवते ऽअपश्श्यतां यद्वेव द्वियजुषमुपदधाति यजमानो वै द्वियजुः ॥ १६ ॥ तदाहुः । यदसावेव यजमानो योऽसौ हिरण्मयः पुरुषोऽथ कतमदस्येदᳬ रूपमिति दैवो वा ऽअस्य स ऽआत्मा मानुषोऽयं तद्यत्स हिरण्मयो भवत्यमृतं वा ऽअस्य तद्रूपं देवरूपममृतᳬ हिरण्यमथ यदियं मृदः कृता भवति मानुषᳬ ह्यस्येदᳬ रूपᳬ ॥ १७ ॥ स यदमूमेवोपदध्यात् । नेमामपशिᳬष्यात्क्षिप्प्रे हास्माल्लोकाद्यजमानः प्प्रेयाद्दथ यदिमामपशिनष्टि यदेवास्येदं मानुषᳬ रूपं तदस्यैतदुपशिनष्टि तथो हानेनात्मना सर्व्वमायुरेति ॥ १८ ॥

(१) शु॰ य॰ सं॰ अ॰ १३ क॰ २०। (२) शु॰ य॰ सं॰ अ॰ १३ क॰ २१। (३) शु॰ य॰ सं॰ अ॰ १३ क॰ २१।

* का॰ श्रौ॰ सू॰ १७. ४. २०।

स यन्नानूपदध्यात् । न हैतं दैवमात्मानमनुप्रजानीयादथ यदनूपदधाति तथो हैतं दैवमात्मानमनुप्रजानाति तामनन्तर्हितां दूर्वेष्टकाया ऽउपदधाति पशवो वै दूर्वेष्टका यजमानं तत्पशुषु प्प्रतिष्ठापयति ॥ १९ ॥ तदाहुः । कथमस्यैतावात्मानौ प्प्राणेन सन्ततावव्यवच्छिन्नौ भवत ऽइति प्राणो वै स्वयमातृण्णा प्प्राणो दूर्वेष्टका यजमानो द्विियजुः स यदनन्तर्हिताꣳ स्वयमातृण्णायै दूर्वेष्टकामुपदधाति प्प्राणेनैव तत्प्राणꣳ सन्तनोति सन्दधात्यथ यदनन्तर्हितां दूर्वेष्टकायै द्वियजुषमुपदधाति प्प्राणो वै दूर्वेष्टका यजमानो द्वियजुरेवमु हास्यैतावात्मानौ प्प्राणेन सन्ततावव्यवच्छिन्नौ भवतः ॥ २० ॥ 'यास्ते-ऽअग्ने सूर्य्ये रुचः[1] । या वो देवाः सूर्य्ये रुच' ऽइति रुचꣳ रुचमित्यमृतत्वं वै रुगमृतत्वमेवास्मिन्नेतद्दधाति द्वाभ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैतद्रूपं मृच्चापश्च सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २१ ॥ अथ * रेतःसिचा ऽउपदधाति । इमौ वै लोकौ रेतःसिचाविमौ ह्येव लोकौ रेतः सिञ्चत ऽइतो वा ऽअयमूर्द्ध्वꣳ रेतः सिञ्चति धूमꣳ सामुत्र व्वृष्टिर्ब्भवति तामसावमुतो व्वृष्टिं तदिमा ऽअन्तरेण प्प्रजाः प्प्रजायन्ते तस्मादिमौ लोकौ रेतःसिचौ ॥ २२ ॥ 'विराड्ज्योतिरधारयदि[2]'ति । अयं वै लोको विराट् स ऽइममग्निं ज्योतिर्द्धारयति 'स्वराड्[3]-

( १ ) शु० य० सं० अ० १३ क० २२,२३ ।
* का० श्रौ० सू० १७. ४. २२ ।
( २ ) शु० य० सं० अ० १३ क० २४ । ( ३ ) शु० य० सं० अ० १३ क० २४ ।

ज्योतिरधारयदि'त्यसौ वै लोकः स्वराट् सोऽमुमादित्यं ज्योतिर्द्धारयति विराट् च हेमौ लोकौ स्वराट् च नानोपदधाति नाना हीमौ लोकौ सकृत्सादयति समानं तत्करोति तस्मादु हानयोर्ल्लोकयोरन्ताः समायन्ति ॥ २३ ॥ यद्वेव रेतःसिचा ऽउपदधाति। आण्डौ वै रेतःसिचौ यस्य ह्याण्डौ भवतः स ऽएव रेतः सिञ्चति विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयदिति विराट् च हेमावाण्डौ स्वराट् च तावेतज्ज्योतिर्द्धारयतो रेत ऽएव * प्रजापतिमेव नानोपदधाति नाना हीमावाण्डौ सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनौ ते ऽअनन्तर्हिते द्वियजुष ऽउपदधाति यजमानो वै द्वियजुरनन्तर्हितौ तद्यजमानादाण्डौ दधाति ॥ २४ ॥ अथ † विश्वज्ज्योतिषमुपदधाति। अग्निर्वै प्रथमा विश्वज्ज्योतिरग्निर्ह्येवास्मिँल्लोके विश्वं ज्योतिरग्निमेवैतदुपदधाति तामनन्तर्हिताᳬं रेतःसिग्भ्यामुपदधातीमौ वै लोकौ रेतःसिचावनन्तर्हितं तदाभ्यां लोकाभ्यामग्निं दधात्यन्तरेवोपदधात्यन्तरेव हीमौ लोकावग्निः ॥ २५ ॥ यद्वेव विश्वज्ज्योतिषमुपदधाति। प्रजा वै विश्वज्ज्योतिः प्रजा ह्येव विश्वज्ज्योतिः प्रजननमेवैतदुपदधाति तामनन्तर्हिताᳬं रेतःसिग्भ्यामुपदधात्याण्डौ वै रेतःसिचावनन्तर्हितां तदाण्डाभ्यां प्रजातिं दधात्यन्तरेवोपदधात्यन्तरेव ह्याण्डौ प्रजाः प्रजायन्ते ॥ २६ ॥

* 'प्रजातिमेव' इति 'क' पुस्तके।

† का० श्रौ० सू० १७. ४. २३।

'प्र॒जाप॑तिष्ट्वा सादयत्वि॒ति । प्रजाप॑ति॒र्ह्येतां प्रथमां चिति॑मपश्य॒'त्पृ॒ष्ठे पृ॑थि॒व्या ज्यो॒तिष्मतीमि॒'ति पृष्ठे॒ ह्यं॒यं पृ॑थि॒व्यै ज्यो॒तिष्मानग्निः ॥ २७ ॥ 'वि॒श्वस्मै प्रा॒णाया॑पा॒नाय । व्याना॒ये'ति प्राणो वै वि॒श्वज्योतिः स॒र्वस्मा॑ऽउ वा॒ ऽए॒तस्मै प्राणो वि॒श्वज्यो॒तिर्यच्छ॒तीति स॒र्वं ज्यो॒तिर्यच्छे॒त्येत॒दग्निष्टे॒ऽधिपति॒रि॒त्यग्नि॒मे॒वास्या॒ ऽअ॒धिप॑तिं करोति सादयि॒त्वा सू॒ददो॒हसा॒धिवदति त॒स्योक्तो ब॒न्धुः ॥ २८ ॥ अ॒थर्त्तव्ये॒ ऽउ॒पदधाति * । ऋ॒त॒व ऽए॒ते यदृ॒तव्ये ऽऋ॒तू॒नेवै॒तदु॒पदधाति 'म॒धुश्च॒ मा॒धवश्च वा॒स॑न्तिकावृ॒तू' ऽइ॒ति ना॒मनी ऽए॒नयो॒रेते ना॒मभ्या॒मेवै॒ने ऽए॒त॑दु॒पदधाति द्वे ऽइ॒ष्टके भवतो द्वौ हि मा॒सावृ॒तुः सकृ॒त्सा॑दयत्येकं त॒दृ॒तुं करोति ॥ २९ ॥ तद्यदेते ऽअ॒त्रोपद॒धाति । संवत्सर॒ ऽए॒षोऽग्निरि॒म ऽउ लोका॒ः संवत्सरस्त॒स्याय॒मेव॒ लोक॒ः प्रथमा चि॒तिर॒यमस्य लो॒को वसन्त॒ ऽऋतुस्त॑द्यदेते ऽअ॒त्रोपद॒धाति य॒देवास्यै॒ते ऽआ॒त्मनस्त॒दस्मिन्ने॑तत्प्र॒तिदधाति त॒स्मादेते ऽअत्रो॒पदधाति ॥ ३० ॥ य॒द्वेवै॒ते॑ऽअ॒त्रोपद॒धाति । प्रजा॒पति॒रेषोऽग्निः संवत्सर॒ ऽउ प्रजा॒पति॑स्तस्य प्रति॒ष्ठैव॒ प्रथमा चितिः प्रति॒ष्ठो ऽअस्य वसन्त॑ऽऋतुस्तद्यदेते ऽअ॒त्रोपद॒धाति य॒देवास्यै॒ते ऽआ॒त्मनस्त॒द॑स्मिन्नेतत्प्र॒तिदधाति त॒स्मादेते ऽअ॒त्रोपदधाति ते ऽअ॒न॑-

( १ ) शु० य० सं० अ० १३ क० २४ । ( २ ) शु० य० सं० अ० १३ क० २४ ।
( ३ ) शु० य० सं० अ० १३ क० २४ ।
* का० श्रौ० सू० १७. ४. २४ ।
( ४ ) शु० य० सं० अ० १३ क० २५ ।

न्तर्हिते विश्वज्ज्योतिष ऽउपदधाति प्प्रजा वै विश्वज्ज्योतिर-नन्तार्हितास्तत्प्रजा ऽऋतुब्भ्यो दधाति तस्मात्प्रजा ऽऋतूनेवानुप्रजायन्त ऽऋतुभिर्ह्येव गब्र्भे सन्तः सम्पश्यन्त्यृतुभिर्ज्जातम् ॥ ३१ ॥ अथाषाढामुपदधाति * । इयं वा ऽअषाढेमामेवैतदुपदधाति तां पूर्वार्द्धे ऽउपदधाति प्प्रथमा हीयमसृज्यत ॥ ३२ ॥ सा यदषाढा नाम । देवाश्चासुराश्चोभये प्प्राजापत्या ऽअस्प्पर्द्धन्त ते देवा ऽएतामिष्टकामपश्यन्नषाढामिमामेव तामुपादधत तामुपधायासुरान्त्संपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त यदसहन्त तस्मादषाढा तथैवैतद्यजमान ऽएतामुपधाय द्विषन्तं भ्रातृव्यमस्मात्सर्वस्मात्सहते ॥ ३३ ॥ यद्वेवाषाढामुपदधाति । वाग्वा ऽअषाढा वाचैव तद्देवा ऽअसुरान्त्सपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त तथैवैतद्यजमानो वाचैव द्विषन्तं भ्रातृव्यमस्मात्सर्वस्मात्सहते वाचमेव तद्देवा ऽउपादधत तथैवैतद्यजमानो वाचमेवोपधत्ते ॥ ३४ ॥ सेयं वामभृत् । प्राणा वै वामं यद्धि किञ्च प्राणीयं तत्सर्वं बिभर्त्ति तेनेयं वामभृद्वाग्घ त्वेव वामभृत्प्राणा वै वामं वाचि वै प्राणेभ्योऽन्नं धीयते तस्माद्वाग्वामभृत् ॥ ३५ ॥ त ऽएते सर्वे प्प्राणा यदषाढा । तां पूर्वार्द्धे ऽउपदधाति पुरस्तात्तत्प्राणान्दधाति तस्मादिमे पुरस्तात्प्राणास्तान्नान्ययां यजुष्मत्येष्टकया पुरस्तात्प्रत्युपदध्यादेतस्यां चितौ नेत्प्राणानपिदधानीति ॥ ३६ ॥ यद्वपस्याः पञ्च पुरस्तादु-

* का० श्रौ० सू० १७. ४. २५ ।

पदधाति । अन्नं वा ऽआपोऽनपिहिता वा ऽअन्नेन प्प्राणा-स्तामनन्तर्हितामृतव्व्याभ्यामुपदधात्यृतुषु तद्वाचं प्रतिष्ठापयति सेयं व्वागृतुषु प्प्रतिष्ठिता व्वदति ॥ ३७ ॥ तदाहुः । यत्प्रजा विश्वज्ज्योतिर्व्वागषाढाथ कस्मादन्तरेणर्त्तव्व्ये ऽउपदधातीति संव्वत्सरो वा ऽऋतव्व्ये संव्वत्सरेण तत्प्रजाभ्यो व्वाचमन्तर्दधाति तस्मात्संव्वत्सरवेलायां प्रजा व्वाचं प्रवदन्ति ॥ ३८ ॥ 'अषाढासि[1] सहमाने'ति । असहन्त ह्येतया देवाऽअसुरा'न्त्सहस्वारातीः[2] सहस्व पृतनायत' ऽइति यथैव यजुस्तथा बन्धुः 'सहस्रवीर्य्यासि[3] सा मा जिन्वे'ति सर्व्वं वै सहस्रꣳ सर्व्ववीर्य्यासि सा मा जिन्वेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ ३९ ॥ तदाहुः । कस्मादभिस्वयमातृण्णमन्या ऽइष्टका ऽउपधीयन्ते प्प्राच्यऽएता ऽइति * द्वे वै योनी ऽइति ब्रूयाद्देवयोनिरन्न्यो मनुष्ययोनिरन्न्यः प्प्राचीनप्प्रजनना वै देवाः प्प्रतीचीनप्प्रजनना मनुष्यास्तद्यदेताः प्प्राचीरुपदधाति देवयोनेरेवैतद्यजमानं प्रजनयति ॥ ४० ॥ (B)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति चतुर्थोऽध्यायः ।

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥ ८५ ॥



( १ ) शु० य० सं० अ० १३ क० २६ । ( २ ) शु० य० सं० अ० १३ क० २६ । ( ३ ) शु० य० सं० अ० १३ क० २६ ।

* 'द्वौ वै' इति 'क' पाठः ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ९. ४. १; कठसं० १६. १५,१६; मै० सं० ११. ७. १५,१६; तै० सं० ४. २. ८,९ ।

[ कूर्मादीनामुपधानादि ]

कूर्म्ममुपदधाति । रसो वै कूर्म्मो रसमेवैतदुपदधाति यो वै स ऽएषां लोकानामप्सु प्रविद्धानां पराङ् रसोऽत्यक्षरत्स ऽएष कूर्म्मस्तमेवैतदुपदधाति यावानु वै रसस्तावानात्मा स ऽएष ऽइम ऽएव लोकाः ॥ १ ॥ तस्य यदधरं कपालम् । अयंः स लोकस्तत्प्रतिष्ठितमिव भवति प्रतिष्ठित ऽइव ह्ययं लोकोऽथ यदुत्तरंः सा द्यौस्तद्व्यवगृहीतान्तमिव भवति व्यवगृहीतान्तेव हि द्यौरथ यदन्तरा तदन्तरिक्षंः स ऽएष ऽइम ऽएव लोकाऽइमानेवैतल्लोकानुपदधाति ॥ २ ॥ तमभ्यनक्ति * । दध्ना मधुना घृतेन दधि हैवास्य लोकस्य रूपं घृतमन्तरिक्षस्य मद्ध्वमुष्य स्वेनैवैनमेतद्रूपेण समर्द्धयत्यथो दधि हैवास्य लोकस्य रसो घृतमन्तरिक्षस्य मद्ध्वमुष्य स्वेनैवैनमेतद्रसेन समर्द्धयति ॥ ३ ॥ 'मधु[1] वाता ऽऋतायत' ऽइति । यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सर्क्सो देवता तद्यजुस्तद्धैतन्मद्ध्वेवैष त्रिचो रसो वै मधु रसमेवास्मिन्नेतद्दधाति गायत्रीभिस्तिसृभिस्तस्योक्तो बन्धुः ॥ ४ ॥ स यत्कूर्म्मो नाम । एतद्वै रूपं कृत्वा प्रजापतिः प्रजा ऽअसृजत यदसृजताकरोत्तद्यदकरोत्तस्मात्कूर्म्मः कश्यपो वै कूर्म्मस्तस्मादाहुः सर्वाः प्रजाः काश्यप्य ऽइति॥५॥ स यः स कूर्म्मो ऽसौ स ऽआदित्यः । अमुमेवै-

---

* का० श्रौ० सू० १७. ४. २७ ।

(१) शु० य० सं० अ० १३ कं० २७ ।

तदादित्यमुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधात्यमुं तदादित्यं पुरस्तात्प्रत्यञ्चं दधाति तस्मादसावादित्यः पुरस्तात्प्रत्यङ् धीयते दक्षिणतोऽषाढायै ऽवृषा वै कूर्म्मो योषाषाढा दक्षिणतो वै ऽवृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि ऽवृषा योषामुपशेते सैषा सर्वासामिष्टकानां महिषी यदुषाढैतस्यै दक्षिणतः सन्त्सर्वासामिष्टकानां दक्षिणतो भवति ॥ ६ ॥ यद्वेव कूर्म्ममुपदधाति । प्राणो वै कूर्म्मः प्प्राणो हीमाः सर्वाः प्प्रजाः करोति प्प्राणमेवैतदुदधाति तं पुरस्तात्प्रत्यञ्चमुपदधाति पुरस्तात्तत्प्रत्यञ्चं प्राणं दधाति तस्मात्पुरस्तात्प्रत्यङ् प्राणो धीयते पुरुषमऽभ्यावृत्तं यजमाने तत्प्राणं दधाति दक्षिणतोऽषाढायै प्प्राणो वै कूर्म्मो वागषाढा प्प्राणो वै वाचो ऽवृषा प्प्राणो मिथुनम् ॥ ७ ॥ * 'अपां गम्भन्त्सीद'[1]ेति [†] । एतद्धापां गम्भिष्ठं यत्रैष ऽएतत्तपति 'मा त्वा[2] सूर्योऽभिताप्प्सीन्माग्निर्वैश्वानर' ऽइति मैव त्वा सूर्यो हिंसीन्मो ऽअग्निर्वैश्वानर ऽइत्येत'दुच्छिन्नपत्राः[3] प्प्रजा ऽअनुवीक्षस्वे'तीमा वै सर्वाः प्प्रजा या ऽइमा ऽइष्टकास्ता ऽअरिष्टाऽअनार्त्ता ऽअनुवीक्षस्वेत्येत'दनु[4] त्वा दिव्या ऽवृष्टिः सचतामि'ति यथैवेनं दिव्या ऽवृष्टिरनुसचेतैवमेतदाह ॥ ८ ॥ अथैनमेजयति । 'त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानि'[5]

* अत्र शतम् ४२०० ।

† का० श्रौ० सू० १७. ५. १ ।

( १ ) शु० य० सं० अ० १३ क० ३० । ( २ ) शु० य० सं० अ० १३ क० ३० । ( ३ ) शु० य० सं० अ० १३ क० ३० । ( ४ ) शु० य० सं० अ० १३ क० ३० । ( ५ ) शु० य० सं० अ० १३ क० ३१ ।

त्तीमे वै त्रयः समुद्राः स्वर्ग्या लोकास्तानेष कूर्म्मो भूत्वानुसरः ससर्प्प'पांपतिर्व्वृषभ ऽइष्टकानामि'त्यपाछ्ह्येष पतिर्व्वृषभ ऽइष्टकाना'म्पुरीषं वसानः सुकृतस्य लोक' ऽइति पशवो वै पुरीषं पशून्वसानः सुकृतस्य लोक ऽइत्येत'त्तत्र गच्छ यत्र पूर्वे परेता' ऽइति तत्र गच्छ यत्रैतेन पूर्वे कर्म्मणेयुरित्येतत् ॥ ९ ॥ 'मही द्यौः पृथिवी च न' ऽइति । महती द्यौः पृथिवी च न ऽइत्येत'दिमं यज्ञं मिमिक्षतामि'तीमं यज्ञमवतामित्येत'त्पिपृतां नो भरीमभिरि'ति बिभृतां नो भरीमभिरित्येतद् द्यापृथिव्ययोत्तमयोपदधाति द्यावापृथिव्यो हि कूर्म्मः ॥ १० ॥ त्रिभिरुपदधाति । त्रय ऽइमे लोका ऽअथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिभिरभ्यनक्ति तत्पद् तस्योक्तो बन्धुरवका ऽअधस्ताद्भवन्त्यवका ऽउपरिष्टादापो वा ऽअवका ऽअपामेवैनमेतन्मध्यतो दधाति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥११॥ अथोलूखलमुसले ऽउपदधाति* । विष्णुरकामयतान्नादः स्यामिति स ऽएत ऽइष्टके ऽअपश्यदुलूखलमुसले ते ऽउपाधत्त ते ऽउपधायान्नादोऽभवत्तथैवैतद्यजमानो यदुलूखलमुसले ऽउपदधाति येन रूपेण यत्कर्म्म कृत्वा विष्णुरन्नादोऽभवत्तेन रूपेण तत्कर्म्म कृत्वान्नादोऽसानीति तदेत्सर्वमन्नं यदुलूखल-

(१) शु० य० सं० अ० १३ क० ३१। (२) शु० य० सं० अ० १३ क० ३१। (३) शु० य० सं० अ० १३ क० ३१। (४) शु० य० सं० अ० १३ क० ३२। (५) शु० य० सं० अ० १३ क० ३२। (६) शु० य० सं० अ० १३ क० ३२।

* का० श्रौ० सू० १७. ५. ३।

मुसले ऽउलूखलमुसलाभ्याᳩ ह्येवान्नं क्रियत ऽउलूखलमुसलाभ्यामद्यते ॥ १२ ॥ ते रेतःसिचोर्वेलयोपदधाति । पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यतऽएवास्मिन्नेतदन्नं दधात्युत्तरे ऽउत्तरमेवास्मादेतदन्नं दधात्यरत्निमात्रेऽरत्निमात्राद्ध्यन्नमद्यते ॥ १३ ॥ प्रादेशमात्रे भवतः । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसम्मितमेवास्मिन्नेतदन्नं दधाति यदु वा ऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १४ ॥ औदुम्बरे भवतः । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जमेवास्मिन्नेतद्रसं दधात्यथो सर्वे ऽएते वनस्पतयो यदुदुम्बरऽएते ऽउपदधत्सर्वान्वनस्पतीनुपदधाति रेतःसिचोर्वेलयेमे वै रेतःसिचावनयोस्तद्वनस्पतीन्दधाति तस्मादनयोर्वनस्पतयश्चतुःस्रक्ति भवति चतस्रो वै दिशः सर्वासु तद्दिक्षु वनस्पतीन्दधाति तस्मात्सर्वासु दिक्षु वनस्पतयो मध्ये सङ्गृहीतं भवत्युलूखलरूपतायै ॥ १५॥ यद्वेवोलूखलमुसले ऽउपदधाति । प्रजापतेर्विस्रस्तात्प्राणो मध्यत ऽउदचिक्रमिषत्तमन्नेनागृह्णात्तस्मात्प्राणोऽन्नेन गृहीतो यो ह्येवान्नमत्ति स प्राणिति ॥ १६ ॥ प्राणे गृहीते । अस्मादन्नमुदचिक्रमिषत्तत्प्राणेनागृह्णात्तस्मात्प्राणेनान्नं गृहीतं य्यो ह्येव प्राणिति सोऽन्नमत्ति ॥ १७ ॥ एतयोरुभयोर्गृहीतयोः । अस्मादूर्गुदचिक्रमिषत्तामेताभ्यामुभाभ्यामगृह्णात्तस्मादेताभ्यामुभाभ्यामूर्ग्गृहीता यो ह्येवान्नमत्ति स प्राणिति तमूर्जयति ॥ १८ ॥ ऊर्ज्जि गृहीतायाम् । अस्मादेते ऽउभे

ऽउदचिक्रमिषतां ते ऽऊर्ज्जागृह्णात्तस्मादेते ऽउभे ऽऊर्ज्जा गृहीते यथं ह्येवोर्ज्जयति स प्राणिति सोऽन्नमत्ति ॥ १९ ॥ ताज्येताज्यन्योऽन्येन गृहीतानि । तान्यन्योऽन्येन गृहीत्वात्मन्प्रापादयत तदेतदन्नं प्रपद्यमानः सर्वे देवा ऽअनुप्रापद्यन्तान्नजीवनः हीदः सर्वम् ॥ २० ॥ तदेष श्लोकोऽभ्युक्तः । तद्वै स प्राणोऽभवदिति तद्धि स प्राणोऽभवन्महा भूत्वा प्रजापतिरिति महान्हि स तद्भवद्यदेनमेते देवाः प्रापद्यन्त भुजो भुजिष्या विश्वेति प्राणा वै भुजोऽन्नं भुजिष्या ऽएतत्सर्वं विश्वेत्येतद्यत्प्राणान्प्राणयत्पुरीत्यात्मा वै पूर्यद्वै प्राणान्प्राणयत्तस्मात्प्राणा देवा ऽअथ यत्प्रजापतिः प्राणयत्तस्मादु प्रजापतिः प्राणो यो वै स प्राण ऽएषा सा गायत्र्यथ यत्तदन्नमेष स विष्णुर्देवताथ या सोर्ग्गेष स ऽउदुम्बरः ॥ २१ ॥ सोऽब्रवीत् । अयं वाव मा सर्वस्मात्पाप्मन ऽउदभार्षीदिति यदब्रवीदुदभार्षीन्मेति तस्मादुदुम्भर ऽउदुम्भरो ह वै तमुदुम्बर ऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाऽउरु मे करदिति तस्मादुरुकरमुरुकरः ह वै तदुलूखलमित्याचक्षते परोक्षं परोक्षकामा हि देवाः सैषा सर्वेषां प्राणानां योनिर्यदुलूखलः शिरो वै प्राणानां योनिः ॥ २२ ॥ तत्प्रादेशमात्रं भवति । प्रादेशमात्रमिव हि शिरश्चतुःस्रक्ति भवति चतुःस्रक्तीव हि शिरो मध्ये सङ्गृहीतं भवति मध्ये सङ्गृहीतमिव हि शिरः ॥ २३ ॥ तं यत्र देवाः समस्कुर्वन् । तदस्मिन्नेतत्सर्वं मध्यतोऽदधुः

प्प्राणमन्नमूर्ज्जं तथैवास्मिमन्नयमेतद्दधाति रेतःसिचोर्व्वेलया। पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यत ऽएवास्मिमन्नेतत्सर्व्वं दधाति ॥ २४ ॥ 'विष्णोः[1] कर्म्माणि पश्यते'ति। वीर्य्यं वै कर्म्म विष्णोर्व्वीर्य्याणि पश्यतेत्येत'द्यतो[2] व्रतानि पस्पश' ऽइत्यन्नं वै व्रतं य्यतोऽन्नᳮ स्पाशयाश्चक्र ऽइत्येत 'दिन्द्रस्य[3] युज्यः सखे'तीन्द्रस्य ह्येष युज्यः सखा द्विदेवत्ययोपदधाति द्वे ह्युलूखलमुसले सकृत्सादयति समानं तत्करोति समानᳮ ह्येतदन्नमेव सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २५ ॥ अथोखामुपदधाति *। योनिर्व्वाऽउखा योनिमेवैतदुपदधाति तामुलूखल ऽउपदधात्यन्तरिक्षं वा ऽउलूखलं य्यद्वै किञ्चास्या ऽऊर्द्ध्वमन्तरिक्षमेव तन्मध्यं वा ऽअन्तरिक्षं मध्यतस्तद्योनिं दधाति तस्मात्सर्व्वेषां भूतानां मध्यतो योनिरपि वनस्पतीनाम् ॥ २६ ॥ यद्वेवोखामुपदधाति। यो वै स प्रजापतिर्व्यस्रᳮसतैषा सोखेमे वै लोका ऽउखेमे लोकाः प्प्रजापतिस्तामुलूखल ऽउपदधाति तदेनमेतस्मिमन्त्सर्व्वास्मिमन्प्रतिष्ठापयति प्प्राणेऽन्नऽऊर्ज्यथो ऽएतस्मादेवैनमेतत्सर्व्वस्मादनन्तर्हितं दधाति ॥ २७ ॥ अथोपशयां पिष्ट्वा। लोकभाजमुखां कृत्वा पुरस्तादुखाया ऽउपनिवपत्येष हैतस्यै लोकस्तथो हास्यैषानन्तरिता भवति ॥ २८ ॥ तदाहुः। कथमस्यैषा पक्वा शृतोपहिता भवतीति यदेव यजुष्कृता तेनाथो यद्वै किञ्चे-

(१) शु० य० सं० अ० १३ क० ३३। (२) शु० य० सं० अ० १३ क० ३३। (३) शु० य० सं० अ० १३ क० ३३।

* का० श्रौ० सू० १७. ५. ४।

तमाग्निं वैश्वानरमुपनिगच्छति तत ऽएव तत्पक्वꣳ शृतमुपहितं भवति ॥ २९ ॥ 'ध्रुवासि धरुणे'ति। तस्योक्तो बन्धुरितो 'जज्ञे प्प्रथममेभ्भ्यो योनिभ्भ्यो ऽअधि जातवेदा' ऽइत्त्येतेभ्भ्यो हि योनिभ्भ्यः प्प्रथमं जातवेदा ऽअजायत 'स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्भ्यो हव्व्यं वहतु प्प्रजानन्नि'त्त्येतैर्वा ऽएष छन्दोभिर्देवेभ्भ्यो हव्व्यं वहति प्प्रजानन् ॥ ३० ॥ 'इषे राये रमस्व। सहसे द्युम्म्न ऽऊर्ज्जे ऽअपत्त्याये'त्त्येतस्म्मै सर्वस्म्मै रमस्वेत्त्ये'तत्सम्म्राडसि स्वराडसी'ति सम्म्राट् च ह्येष स्वराट् च 'सारस्वतौ त्त्वोत्सौ प्प्रावतामि'ति मनो वै सरस्वान्न्वाक्सरस्वत्त्येतौ सारस्वता ऽउत्सौ तौ त्त्वा प्प्रावतामित्त्येतद् द्वाभ्भ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैतद्रूपं मृच्चापश्च सादयित्त्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ ३१ ॥ *

अथैनामभिजुहोति। एतद्वा ऽअस्यामेतत्पूर्वꣳ रेतः सिक्तं भवति सिकतास्तदेतदभिकरोति तस्म्माद्योनौ रेतः सिक्तमभिक्रियत ऽआज्ज्येन जुहोति स्रुवेण स्वाहाकारेण द्वाभ्भ्यामाग्नेयीभ्भ्यां गायत्रीभ्भ्यां तस्योक्तो बन्धुः ॥३२॥ 'अग्ने युक्ष्वा हि ये तव। युक्ष्वा हि देवहूतमानि'ति युक्तवतीभ्भ्यामिदमेवैतद्योनौ रेतो युनक्ति तस्म्माद्योनौ रेतो युक्तं न निष्पद्यते ॥ ३३ ॥ स यदि संवत्त्सरभृतः

(१) शु० य० सं० अ० १३ क० ३४। (२) शु० य० सं० अ० १३ क० ३४।
(३) शु० य० सं० अ० १३ क० ३४। (४) शु० य० सं० अ० १३ क० ३५।
(५) शु० य० सं० अ० १३ क० ३५। (६) शु० य० सं० अ० १३ क० ३५।
* का० श्रौ० सू० १७. ५. ५।
(७) शु० य० सं० अ० १३ क० ३६,३७।

स्यात् । अथाभिजुहुयात्सर्वं वै तद्यत्संवत्सरभृतः सर्वं तद्यदभिजुहोत्यथ यद्यसंवत्सरभृतः स्यादुपैव तिष्ठेतासर्वं वै तद्यदसंवत्सरभृतोऽसर्वं तद्यदुपतिष्ठतेऽभित्त्वेव जुहुयात् ॥ ३४ ॥ पशुरेष यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतस्तस्यावाङ् प्राणः स्वयमातृण्णा श्रोणी द्वियजुः पृष्ट्यो रेतःसिचौ कीकसा विश्वज्योतिः ककुद्मृतव्ये ग्रीवा ऽअषाढा शिरः कूर्म्मो ये कूर्म्मे प्राणा ये शीर्षन्प्राणास्ते ते ॥ ३५ ॥ तं वा ऽएतम् । इत ऽऊर्ध्वं प्राञ्चं चिनोत्यसौ वा ऽआदित्य ऽएषोऽग्निरमुं तदादित्यमित ऽऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्य ऽइत ऽऊर्ध्वः प्राङ् धीयते ॥ ३६ ॥ अथैनं प्रसलव्यावर्त्तयति । अमुं तदादित्यं प्रसलव्यावर्त्तयति तस्मादसावादित्य ऽइमाँल्लोकान्प्रसलव्यनुपर्य्येति ॥ ३७ ॥ उदरमुखा । योनिरुलूखलमुत्तरोखा भवत्यधरमुलूखलमुत्तरꣳ ह्युदरमधरा योनिः शिश्नं मुसलं तद् वृत्तमिव भवति वृत्तमिव हि शिश्नं तद्दक्षिणत ऽउपदधाति दक्षिणतो वै वृषा योषामुपशेते यदु पशोः संस्कृतस्यान्नं तद्दूर्वेष्टका तस्य वा ऽएतस्योत्तरोऽर्द्ध ऽउदाहिततरो भवति पशुरेष यदग्निस्तस्मात्पशोः सुहितस्योत्तरः कुक्षिरुन्नततरो भवति ॥ ३८ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० श० ९. ४. १; कठ० सं० ३. २. ३; कपि० सं० १६. १६. ३९. ३; मै० सं० ११. ७. १६; तै० सं० ४. २. ९ ।

[ उखायां पशुशीर्षोपधानादि ]

पशुशीर्षाण्युपदधाति । पशवो वै पशुशीर्षाणि पशूनेवैतदुपदधाति तान्युखायामुपदधातीमे वै लोका ऽउखा पशवः पशुशीर्षाण्येषु तल्लोकेषु पशून्दधाति तस्मादिमऽएषु लोकेषु पशवः ॥ १ ॥ यद्वेवोखायाम् । योनिर्वाऽउखा पशवः पशुशीर्षाणि योनौ तत्पशून्प्रतिष्ठापयति तस्मादद्यमानाः पच्यमानाः पशवो न क्षीयन्ते योनौ ह्येनान्प्रतिष्ठापयति ॥ २ ॥ यद्वेव पशुशीर्षाण्युपदधाति । या वै ताः श्रिय ऽएतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितयस्तद्यास्ताः पञ्च चितयऽइमे ते लोकास्तद्ये त ऽइमे लोका ऽएषा सोखा तद्यदुखायां पशुशीर्षाण्युपदधात्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥ ३ ॥ तान्पुरस्तात्प्रतीच ऽउपदधाति । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत त ऽआलिप्स्यमानाऽउदचिक्रमिषँस्तान्प्राणेषु समगृह्णात्तान्प्राणेषु संगृह्य पुरस्तात्प्रतीच ऽआत्मन्नधत्त ॥ ४ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदं न्वस्मात्ते पशवो नोच्चिक्रमिषन्ति यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्यथो प्राणेष्वेवैनानेतत्संगृह्य पुरस्तात्प्रतीच ऽआत्मन्धत्ते ॥ ५ ॥ यद्वेव पशुशीर्षाण्युपदधाति । प्रजापतिर्वा ऽइदमग्र ऽआसीदेकऽएव सोऽकामयतान्नं सृजेय प्रजायेयेति स प्राणेभ्यऽएवाधि पशून्निरमिमीत मनसः पुरुषं चक्षुषोऽश्वं प्राणाद्गां श्रोत्रादविं वाचोऽजं तद्यदेनान्प्राणेभ्योऽधि-

निरमिमीत तस्मादाहुः प्राणाः पशव ऽइति मनो वै प्राणानां प्रथमं तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः प्रथमः पशूनां वीर्य्यवत्तम ऽइति मनो वै सर्वे प्राणा मनसि हि सर्वे प्राणाः प्रतिष्ठितास्तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः सर्वे पशव ऽइति पुरुषस्य ह्येवैते सर्वे भवन्ति ॥ ६ ॥ तदेतदन्नꣳ सृष्ट्वा । पुरस्तात्प्रत्यगात्मन्नधत्त तस्माद्यः कश्चान्नꣳ सृजते पुरस्तादेवैनत्प्रत्यगात्मन्धत्ते तद्वा ऽउखायामुदरं वा उखोदरे तदन्नं दधाति ॥ ७ ॥ अथैषु हिरण्यशकलान्प्रत्यस्यति । प्राणा वै हिरण्यमथ वा ऽएतेभ्यः पशुभ्यः संज्ञप्यमानेभ्य ऽएव प्राणा ऽउत्क्रामन्ति तद्यद्धिरण्यशकलान्प्रत्यस्यति प्राणानेवैष्वेतद्दधाति ॥ ८ ॥ सप्त प्रत्यस्यति । सप्त वै शीर्षन्प्राणास्तानस्मिन्नेतद्दधात्यथ यदि पञ्च पशवः स्युः पञ्चैव कृत्वः सप्त–सप्त प्रत्यस्येत्पञ्च वा ऽएतान्पशूनुपदधाति सप्त–सप्त वा ऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दधाति ॥ ९ ॥ तद्धैकेऽपि । यद्येकः पशुर्भवति पञ्चैव कृत्वः सप्त–सप्त प्रत्यस्यन्ति पञ्च वा-ऽएतान्पशूनुपदधाति सप्त–सप्त वा ऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दध्म ऽइति न तथा कुर्य्यादेतस्मिन्वै पशौ सर्वेषां पशूनाꣳ रूपं तद्यदेतस्मिन्प्रत्यस्यति तदेवैषु सर्वेषु प्राणान्दधाति ॥ १० ॥ मुखे * प्रथमं प्रत्यस्यति । 'सम्यक्स्रवन्ति सरितो न धेना' ऽइत्यन्नं

* का० श्रौ० सू० १७. ५. ७ ।

( १ ) शु० य० सं० अ० १३ कं० ३८ ।

•वै धेनास्तदिदुᳮ सम्म्यङ् मुखमभिसᳯंस्त्रव'न्त्यन्तर्हृदा मनसा पूयमाना' ऽइत्यन्तर्वै हृदयेन मनसा सतान्नं पूतं ऽग्ग ऽऋजुस्तस्य 'घृतस्य[2] धारा ऽअभिचाकशीमी'ति या ऽएवैतस्मिन्ननग्नावाहुतीर्होष्यन्भवति ता ऽएतदाह 'हिरण्ययो[3] वेतसो मद्ध्ये ऽअग्नेरि'ति य ऽएवैष हिरण्मयᳮ पुरुषस्तमेतदाह ॥ ११ ॥ * 'ऋचे[4] त्वे'तीह । प्राणो वा-ऽऋक्प्राणेन ह्यर्चति 'रुचे[5] त्वे'तीह प्राणो वै रुक् प्राणेन हि रोचतेऽथो प्राणाय हीदᳮ सर्वᳮ रोचते 'भासे[6] त्वे'तीह 'ज्योतिषे[7] त्वे'तीह भास्वती हीमे ज्योतिष्मती चक्षुषी 'ऽअभूदिदं[8] विश्श्वस्य भुवनस्य वाजिनमग्नेर्वैश्श्वानरस्य चे'ती-'ह्यग्निर्ज्योतिषा[9] ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वानि'तीह विश्श्ववतीभ्यां विश्श्वᳮ हि श्रोत्रम् ॥ १२ ॥ [ अर्धप्रपाठकः ५० ॥ ] अथ पुरुषशीर्षमुद्गृह्णाति । महयत्येवैनदेत'त्सᳮहस्रदा[10]-ऽअसि सहस्राय त्वे'ति सर्वं वै सहस्रᳮ सर्वस्य दातासि सर्वस्मै त्वेत्येतत् ॥ १३ ॥ अथैनानुपदधाति । पुरुषं प्रथमं पुरुषं तच्छीर्ष्णा†प्त्वा दधाति मद्ध्ये पुरुषमभित ऽइतरान्प-शून्पुरुषं तत्पशूनां मद्ध्यतोऽत्तारं दधाति तस्मात्पुरुष ऽएव पशूनां मद्ध्यतोऽत्ता ॥ १४ ॥ अश्वं ‡ चाविं चोत्तरतᳮ ।

( १ ) शु० य० सं० अ० १३ क० ३८ । ( २ ) शु० य० सं० अ० १३ क० ३८ । ( ३ ) शु० य० सं० अ० १३. ३८ ।

*. का० श्रौ० सू० १७. ५. ८–१४ ।

( ४ ) शु० य० सं० अ० १३ क० ३९ । ( ५ ) शु० य० सं० अ० १३ क० ३९ । ( ६ ) शु० य० सं० अ० १३ क० ३९ । ( ७ ) शु० सं० अ० १३ क० ३९ । ( ८ ) शु० सं० अ० १३ क० ३९ ।

( ९ ) शु० य० सं० अ० १३ क० ४० । ( १० ) शु० य० सं० अ० १३ क० ४० ।

† 'णात्या' इति 'क' पाठः । ‡ का० श्रौ० सू० १७. ५. १५,१६ ।

एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥ १५ ॥ गां चाजं च दक्षिणतः । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥ १६ ॥ पयसि पुरुषमुपदधाति । पशवो वै पयो यजमानं तत्पशुषु प्रतिष्ठा*पय[1]स्यादित्यं गर्भं पयसा समङ्ग्धी'-त्यादित्यो वा ऽएष गर्भो यत्पुरुषस्तं पयसा समङ्ग्धी-त्येत[2]त्सहस्रस्य प्रतिमां विश्वरूपमि'ति 'पुरुषो वै सहस्रस्य प्रतिमा पुरुषस्य ह्येव सहस्रं भवति 'परिवृङ्[3]धि हरसा माभिमंस्था' ऽइति पर्य्येनं वृङ्ग्ध्यर्चिषा मैनं हिंसीरित्येत[4]च्छतायुषं कृणुहि चीयमान' ऽइति पुरुषं तत्पशूनां शतायुं करोति तस्मात्पुरुष ऽएव पशूनां शतायुः ॥ १७ ॥ अथोत्तरतोऽश्वम् । 'वा[5]तस्य जूतिमि'ति वातस्य वा ऽएष जूतिर्यदश्वो 'वरुणस्य[6] नाभिमि'ति वारुणो ह्यश्वोऽश्वं [7]जज्ञानं सरिरस्य मद्ध्य' ऽइत्यापो वै सरिरमप्सुजा ऽउ वा ऽअश्वः 'शिशुं नदीनां हरिमद्रि-बुध्नमि'ति गिरिर्वा ऽअद्रिर्गिरिबुध्ना ऽउ वा ऽआपो'ऽग्ने [8]मा हिंसीः परमे व्योमन्नि'तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिंसीरित्येतत् ॥ १८ ॥ अथ दक्षिणतो गाम् । 'अजस्र[10]मिन्दुमरुषमि'ति सोमो वा

---

* का० श्रौ० सू० १७. ५. १७।

( १ ) शु० य० सं० अ० १३ क० ४१। ( २ ) शु० य० सं० अ० १३ क० ४१। ( ३ ) शु० य० सं० अ० १३ क० ४१। ( ४ ) शु० य० सं० अ० १३ क० ४१। ( ५ ) शु० य० सं० अ० १३ क० ४२। ( ६ ) शु० य० सं० अ० १३ क० ४२। ( ७ ) शु० य० सं० अ० १३ क० ४२। ( ८ ) शु० य० सं० अ० १३ क० ४२। ( ९ ) शु० य० सं० अ० १३ क० ४२। ( १० ) शु० य० सं० अ० १३ क० ४३।

ऽइन्दुः स हैष सोमोऽजस्रो यद्गौ'र्भुरण्युमि'ति भर्त्तार-मित्येत'दग्निमीडे पूर्वचित्तिं नमोभिरि'त्याग्नेयो वै गौः पूर्वचित्तिमिति प्राञ्चᳪं ह्यग्निमुद्धरन्ति प्प्राञ्चमुपचरन्ति 'स पर्वभिर्ऋतुशः कल्पमान' ऽइति यद्वा ऽएष चीयते तदेष पर्वभिर्ऋतुशः कल्पते 'गां मा हिᳪं-सीरदितिं विराजमि'ति विराड्वै गौरन्नं वै विराडन्नमु गौः ॥ १९ ॥ अथोत्तरतोऽविम् । 'वरूत्रीं त्वष्टु-र्व्वरुणस्य नाभिमि'ति वारुणी च हि त्वाष्ट्री चावि'रविं जज्ञानाᳪं रजसः परस्म्मादि'ति श्रोत्रं वै परᳪं रजो दिशो वै श्रोत्रं दिशः परᳪं रजो 'महीᳪं साहस्रीम-सुरस्य मायामि'ति महतीᳪं साहस्रीमसुरस्य माया-मित्येत'दग्ने मा हिᳪंसीः परमे व्व्योमन्नि'ती'मे वै लोकाः परमं व्व्योमैषु लोकेष्वेनं मा हिᳪंसीरित्येतत् ॥ २० ॥ अथ दक्षिणतोऽजम् । 'यो ऽअग्निरग्नेरध्यजायते'त्य-ग्निर्वा ऽएषोऽग्नेरध्यजायत 'शोकात्पृथिव्व्या ऽउत वा दिवस्प्परी'ति यद्वै प्प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्व्यै च शोकादजायत 'येन प्प्रजा विश्श्वकर्म्मा जजाने'ति वाग्वा ऽअजो व्वाचो वै प्प्रजा विश्श्वकर्म्मा जजान 'तमग्ने हेडः परि ते व्वृणक्त्वि'ति यथैव यजुस्तथा

(१) शु० य० सं० अ० १३ क० ४३। (२) शु० य० सं० अ० १३ क० ४३
(३) शु० य० सं० अ० १३ क० ४३। (४) शु० य० सं० अ० १३ क० ४३
(५) शु० य० सं० अ० १३ क० ४४। (६) शु० य० सं० अ० १३ क० ४४
(७) शु० य० सं० अ० १३ क० ४४। (८) शु० य० सं० अ० १३ क० ४४
(९) शु० य० सं० अ० १३ क० ४५। (१०) शु० य० सं० अ० १३ क० ४५
(११) शु० य० सं० अ० १३ क० ४५। (१२) शु० य० सं० अ० १३ क० ४५।

बन्धुः ॥ २१ ॥ त ऽएते पशवः । तान्नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना ह्येते पशवः ॥ २२ ॥ अथ पुरुषशीर्षमभिजुहोति । आहुतिर्वै यज्ञः पुरुषं तत्पशूनां ऽयज्ञियं करोति तस्मात्पुरुष ऽएव पशूनां ऽयजते ॥ २३ ॥ यद्वेवैनदभिजुहोति । शीर्षंस्तद्वीर्य्यं दधात्याज्येन जुहोति वज्रो वा ऽआज्यं वीर्य्यं वै वज्रो वीर्य्यमेवास्मिन्नेतद्दधाति स्रुवेण ऽवृषा वै स्रुवो. वीर्य्यं वै ऽवृषा वीर्य्यमेवास्मिन्नेतद्दधाति स्वाहाकारेण ऽवृषा वै स्वाहाकारो वीर्य्यं वै ऽवृषा वीर्य्यमेवास्मिन्नेतद्दधाति त्रिष्टुभा वज्रो वै त्रिष्टुब्वीर्य्यं वै वज्रो वीर्य्यं त्रिष्टुब्वीर्य्येणैवास्मिन्नेतद्वीर्य्यं दधाति ॥ २४ ॥ स वा ऽअर्द्धर्चमनुद्रुत्य स्वाहाकरोति । अस्थि वा ऽऋगिदं तच्छीर्षकपालं विहाप्य यदिदमन्तरतः शीर्ष्णो वीर्य्यं तदस्मिन्दधाति ॥ २५ ॥ अथोत्तरमर्द्धर्चमनुद्रुत्य * स्वाहाकरोति । इदं तच्छीर्षकपालꣳ सन्धाय यदिदमुपरिष्टाच्छीर्ष्णो वीर्य्यं तदस्मिन्दधाति ॥ २६ ॥ 'चित्रं देवानामुदगादनीकमि'ति[1] । असौ वा ऽआदित्य ऽएष पुरुषस्तदेतच्चित्रं देवानामुदेत्यनीकं 'चक्षुर्म्मित्रस्य वरुणस्याग्नेरि'[2]त्युभयेषाꣳ हैतद्देवमनुष्याणां चक्षु'राप्रा द्यावापृथिवी ऽअन्तरिक्षमि'[3]त्युद्यन्वा ऽएष ऽइमाँल्लोकानापूरयति 'सूर्य्य ऽआत्मा जगतस्तस्थुषश्चे'[4]त्येष ह्यस्य सर्वस्यात्मा यच्च जगद्यच्च तिष्ठति

* का० श्रौ० सू० १७. ५. १८ ।

(१) शु० य० सं० अ० १३ क० ४६ । (२) शु० य० सं० अ० १३ क० ४६ । (३) शु० य० सं० अ० १३ क० ४६ । (४) शु० य० सं० अ० १३ क० ४६ ।

॥ २७ ॥ अथोत्सर्गैरुपतिष्ठते । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत त ऽआलिप्स्यमाना ऽअशोचँस्तेषामेतैरुत्सर्गैः शुचं पाप्मानमपाहँस्तथैवैषामयमेतदेतैरुत्सर्गैः शुचं पाप्मानमपहन्ति ॥ २८ ॥ तद्धैके । यं—यमेव पशुमुपदधति तस्य—तस्य शुचमुत्सृजन्ति नेच्छुचं पाप्मानमभ्युपदधामहा ऽइति ते ह ते शुचं पाप्मानमभ्युपदधति यांᳪं हि पूर्वस्य शुचमुत्सृजन्ति तामुत्तरेण सहोपदधति ॥ २९ ॥ विपरिक्रामम् हैक ऽउपतिष्ठन्ते । ऊर्द्ध्वांᳪं शुचमुत्सृजाम ऽइति ते ह ते शुचं पाप्मानमनूद्यन्त्यूर्द्ध्वो ह्येतेन कर्म्मणैत्यूर्द्ध्वामु शुचमुत्सृजन्ति ॥ ३० ॥ बाह्येनैवाग्निमुत्सृजेत् । इमे वै लोका ऽएषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्द्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद्बहिर्द्धा शुचं दधात्युदङ् तिष्ठन्नेतस्यांᳪं ह दिश्येते पशवस्तद्यत्रैते पशवस्तदेवैष्वेतच्छुचं दधाति ॥ ३१ ॥ पुरुषस्य * प्रथममुत्सृजति । तᳪं हि प्रथममुपदधा'तीमम्मा[1] हिᳪंसीर्द्विपादं पशुमि'ति द्विपाद्वा ऽएष पशुर्यत्पुरुषस्तं मा हिᳪंसीरित्येत'त्सहस्राक्षो[2] मेधाय चीयमान' ऽइति हिरण्यशकलैर्वा ऽएष सहस्राक्षो मेधायेत्यन्नायेत्येत'न्मयुं[3] पशुम्मेधमग्ने जुषस्वे'ति किम्पुरुषो वै मयुः किम्पुरुषमग्ने जुषस्वेत्येत'त्तेन[4] चिन्न्वानस्तन्न्वो निषीदे'त्यात्मा वै तनू-

* का० श्रौ० सू० १७. ५. १९ ।

( १ ) शु० य० सं० अ० १३ क० ४७ । ( २ ) शु० य० सं० अ० १३ क० ४७ । ( ३ ) शु० य० सं० अ० १३ क० ४७ । ( ४ ) शु० य० सं० अ० १३ क० ४७ ।

स्तेन चिन्न्वान ऽआत्मानꣳ सꣳस्कुरुष्वेत्येत'न्न्मयुन्ते[1] शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि'ति तन्न्मयौ च शुचं दधाति यं च द्वेष्टि तस्म्मिꣳश्च ॥ ३२ ॥ अथाश्वस्य । 'इमं मा[2] हिꣳसीरेकशफं पशुमि'त्येकशफो वा ऽएष पशु-र्यदश्वस्तं मा हिꣳसीरित्येत'त्कनिक्रदं[3] वाजिनं वाजि-नेष्वि'ति कनिक्रदो वा ऽएष वाज्यु वाजिनेषु 'गौर-[4]मारण्यमनु ते दिशामी'ति तदस्म्मै गौरमारण्यमनुदि-शति 'तेन चिन्न्वानस्तन्न्वो[5] निषीदे'ति तेन चिन्न्वान-ऽआत्मानꣳ संस्कुरुष्वेत्येत'द्गौरं[6] ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि'ति तद्गौरे च शुचं दधाति यं च द्वेष्टि तस्म्मिꣳश्च ॥ ३३ ॥ अथ गोः । 'इमꣳ साहस्रꣳ[7] शतधार-मुत्समि'ति साहस्रो वा ऽएष शतधार ऽउत्सो यद्गौ'र्व्य-[8]च्च्यमानꣳ सरिरस्य मद्ध्य' ऽइतीमे वै लोकाः सरिरमुपजी-व्व्यमानमेषु लोकेष्वित्येत'द्घृतं[9] दुहानामदितिं जनाये'ति घृतं वा ऽएषादितिर्ज्जनाय दुहे'ऽग्ने मा[10] हिꣳसीः परमे व्व्योमन्नि'तीमे वै लोकाः परमं व्व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतद्'गवयमारण्यमनु[11] ते दिशामी'ति तदस्म्मै गवययारण्यमनुदिशति 'तेन चिन्न्वानस्तन्न्वो[12] निषीदे'ति तेन चिन्न्वान ऽआत्मानꣳ संस्कुरुष्वेत्येतद्-

---

( १ ) शु० य० सं० अ० १३ क० ४७। ( २ ) शु० य० सं० अ० १३ क० ४८ ( ३ ) शु० य० सं० अ० १३ क० ४८। ( ४ ) शु० य० सं० अ० १३ क० ४८ ( ५ ) शु० य० सं० अ० १३ क० ४८। ( ६ ) शु० य० सं० अ० १३ क० ४८ ( ७ ) शु० य० सं० अ० १३ क० ४९। ( ८ ) शु० य० सं० अ० १३ क० ४९ ( ९ ) शु० य० सं० अ० १३ क० ४९। ( १० ) शु० य० सं० अ० १३ क० ४९ ( ११ ) शु० य० सं० अ० १३ क० ४९। ( १२ ) शु० य० सं० अ० १३ क० ४९।

[1]'गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि'ति तद् गवये च शुचं दधाति यं च द्वेष्टि तस्मिँश्च ॥ ३४ ॥ अथावेः । 'इ[2]ममूर्णायुमि'त्यूर्णावलमित्येत'द्वरु[3]णस्य नाभिमि'ति वारुणो ह्यवि'स्त्व[4]चं पशूनां द्विपदां चतुष्पदामि'त्युभयेषाᳬं ह्येष पशूनां त्वग्द्विपदां च चतुष्पदां च 'त्वष्टुः[5] प्रजानां प्रथमं जनित्रमि'त्येतद्ध त्वष्टा प्रथमᳬं रूपं विचका'रा[6]ग्ने मा हिᳬंसीः परमे व्योमन्नि'तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिᳬंसीरित्येत'[7]दुष्ट्रमारण्यमनु ते दिशामी'ति तदस्मा ऽउष्ट्रमारण्यमनुदिशति 'ते[8]न चिन्न्वानस्तन्न्वो निषीदे'ति तेन चिन्न्वानऽआत्मानᳬं संस्कुरुष्वेत्येत'[9]दुष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि'ति तदुष्ट्रे च शुचं दधाति यं च द्वेष्टि तस्मिँश्च ॥ ३५ ॥ अथाजस्य । 'अजो ह्य[10]ग्नेरजनिष्ट शोकादि'ति यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत 'सो ऽ[11]अपश्यज्जनितारमग्र' ऽइति प्रजापतिर्वै जनिता सोऽपश्यत्प्रजापतिमग्र ऽइत्येत'त्तेन दे[12]वा देवतामग्रमायन्नि'ति वाग्वा ऽअजो वाचो वै देवा देवतामग्रमा[13]यँस्तेन 'रोहमायन्नुप मेध्यास' ऽइति स्वर्गो वै

(१) शु० य० सं० अ० १३ क० ४९। (२) शु० य० सं० अ० १३ क० ५० (३) शु० य० सं० अ० १३ क० ५०। (४) शु० य० सं० अ० १३ क० ५० (५) शु० य० सं० अ० १३ क० ५०। (६) शु० य० सं० अ० १३ क० ५० (७) शु० य० सं० अ० १३ क० ५०। (८) शु० य० सं० अ० १३ क० ५० (९) शु० य० सं० अ० १३ क० ५०। (१०) शु० य० सं० अ० १३ क० ५१ (११) शु० य० सं० अ० १३ क० ५१। (१२) शु० य० सं० अ० १३ क० ५१ (१३) शु० य० सं० अ० १३ क० ५१।

लोको रोहस्तेन स्वर्ग्गं लोकमायन्नुप मेद्ध्यास ऽइत्त्येत[1]'च्छरभमारण्यमनु ते दिशामी'ति तदस्म्मै शरभमारण्यमनुदिशति 'तेन चिन्न्वा[2]नस्तन्न्वो निषीदे'ति तेन चिन्न्वानऽआत्मानᳬ संस्कुरुष्वेत्त्येत'च्छर[3]भं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि'ति तच्छरभे च शुचं दधाति यं च द्वेष्टि तस्म्मिँश्च ॥ ३६ ॥ तदाहुᳬ । यां वै तत्प्रजापतिरेतेषां पशूनाᳬ शुचं पाप्मानमपाहँस्त ऽएते पञ्च पशवोऽभवँस्त ऽएत ऽउत्क्रान्तमेधा ऽअमेद्ध्या ऽअयज्ञियास्तेषां ब्राह्मणो नाश्नीयात्तानेतस्यां दिशि दधाति तस्म्मादेतस्यां दिशि पर्ज्जन्न्यो न वर्षुको यत्रैते भवन्ति ॥ ३७ ॥ प्रत्त्येत्त्याग्निमुपतिष्ठते * । एतद्वा ऽएतदयथायथं करोति यदग्नौ सामिचिते बहिर्वेद्येति तस्म्मा ऽएवैतन्निह्नुतेऽहिᳬसाया ऽआग्नेय्याग्नेय ऽएवैतन्निह्नुते गायत्त्र्या † गायत्त्रोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवास्म्माऽएतन्निह्नुतेऽनिरुक्तया सर्वं वा ऽअनिरुक्तᳬ सर्वेणैवास्म्माऽएतन्निह्नुते यविष्ठवत्त्यैतद्धास्य प्प्रियं धाम यद्यविष्ठऽइति यद्वै जात ऽइदᳬ सर्वमयुवत तस्म्माद्यविष्ठᳬ ॥ ३८ ॥ '[4]त्वं य्यविष्ठ दाशुष' ऽइति । यजमानो वै दाश्श्वा'न्नॄᳬ [5]पाही'ति मनुष्या वै नरᳬ '[6]श्रृणुधी गिर' ऽइति श्रृणु

---

(१) शु० य० सं० अ० १३ क० ५१ । (२) शु० य० सं० अ० १३ क० ५१ । (३) शु० य० सं० अ० १३ क० ५१ ।

* का० श्रौ० सू० १७. ६. १ ।

† 'गायत्र्यो' इति 'ग' पाठः ।

(४) शु० य० सं० अ० १३ क० ५२ । (५) शु० य० सं० अ० १३ क० ५२ । (६) शु० य० सं० अ० १३ क० ५२ ।

न ऽइमाᳬं स्तुतिमित्येत'द्रक्षा तोकमुतत्मने'ति प्रजा वै तोकꣳ रक्ष प्प्रजां चात्मानं चेत्येतत् ॥ ३९ ॥ आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्या ऽउपदधाति । आप ऽएता यदपस्या ऽअथ वा ऽएतेब्भ्यः पशुब्भ्य ऽआप ऽउत्क्रान्ता भवन्ति तद्यदपस्या ऽउपदधात्येष्वेवैतत्पशुष्वपो दधात्यनन्तर्हिताः पशुब्भ्य ऽउपदधात्यनन्तर्हितास्तत्पशुब्भ्योऽपो दधाति पञ्च—पञ्चोपदधाति पञ्च ह्येते पशवः सर्वत ऽउपदधाति सर्वत-ऽएवैष्वेतदपो दधाति ॥ ४० ॥ तद्याः पञ्चदश पूर्वाः । ता ऽअपस्या व्वज्ज्रो वा ऽआपो व्वज्ज्रः पञ्चदशस्तस्माद्येनापो यन्त्यपैव तत्र पाप्प्मानं घ्नन्ति व्वज्ज्रो हैव तस्यार्द्धस्य पाप्प्मानमपहन्ति तस्माद्वर्षत्यप्प्रावृतो व्रजेदयं मे व्वज्ज्रः पाप्प्मानमपहनदिति ॥ ४१ ॥ अथ याः पञ्चोत्तराः । ताश्छन्दस्याः पशवो वै छन्दाᳬंस्यन्नं पशवोऽन्नमु पशोर्म्माᳬंसमथ वा ऽएतेब्भ्यः पशुब्भ्यो माᳬंसान्न्युत्क्रान्तानि भवन्ति तद्यच्छन्दस्या ऽउपदधात्येष्वेवैतत्पशुषु माᳬंसानि दधात्यनन्तर्हिताः पशुब्भ्य ऽउपदधात्यनन्तर्हितानि तत्पशुब्भ्यो माᳬंसानि दधात्यन्तरा ऽअपस्या भवन्ति बाह्याश्छन्दस्या ऽअन्तरा ह्यापो बाह्यानि माᳬंसानि ॥ ४२ ॥ तदाहुः । यदिमा ऽआप ऽएतानि माᳬंसान्न्यथ क त्वक् क लोमेत्यन्नं वाव पशोस्त्वगन्नं लोम तद्यच्छन्दस्या ऽउपदधाति सैव पशोस्त्वक्तल्लोमाथो

(१) शु० य० सं० अ० १३ क० ५२ ।

ग्रान्न्यमून्न्युखायामजलोमानि तानि लोमानि बाह्योखा भवत्यन्तराणि पशुशीर्षाणि बाह्यानि हि लोमान्न्यन्तर ऽआत्मा यदीतरेण यदीतरेणेति ह स्माह शाण्डिल्यः सर्वानेव वयं कृत्स्नान्पशून्त्सँस्कुर्म्म ऽइति ॥ ४३ ॥ यद्वेवापस्या ऽउपदधाति *। प्रजापतेर्विस्रस्तादाप ऽआयँ-स्तास्वितास्वविशद्यदविशत्तस्माद्विशतिस्ता ऽअस्याङ्गु-लिभ्योऽद्ध्यस्रवन्नन्तो वा ऽअङ्गुलयोऽन्तत ऽएवास्मात्ता-ऽआप ऽआयन् ॥ ४४ ॥ स यः स प्रजापतिर्व्यस्रꣳ-सत । अयमेव स योऽयमग्निश्चीयतेऽथ या ऽअस्मात्ता-ऽआप ऽआयन्नेतास्ता ऽअपस्यास्तद्यदेता ऽउपदधाति या-ऽएवास्मात्ता ऽआप ऽआयँस्ता ऽअस्मिन्नेतत्प्रतिदधाति तस्मादेता ऽअत्रोपदधाति ॥ ४५ ॥ 'अपां[1] त्वेमन्त्सादया-मी'ति । वायुर्वा ऽअपामेम यदा ह्येवैष ऽइतश्चेतश्च वात्यथापो यन्ति वायौ ताꣳ सादयति ॥ ४६ ॥ 'अपां[2] त्वोद्मन्त्सादयामी'ति । ओषधयो वा ऽअपामोद्म यत्र ह्याप ऽउन्दन्त्यस्तिष्ठन्ति तदोषधयो जायन्त ऽओषधिषु ताꣳ सादयति ॥ ४७ ॥ 'अपां[3] त्वा भस्मन्त्सादयामी'ति । अभ्रं वा ऽअपां भस्माभ्रे ताꣳ सादयति ॥ ४८ ॥ 'अपां[4] त्वा ज्योतिषि सादयामी'ति । विद्युद्वा ऽअपां ज्योति-र्विद्युति ताꣳ सादयति ॥ ४९ ॥ 'अपां[5] त्वायने सादया-

* का० श्रौ० सू० १७. ६. २ ।

( १ ) शु० य० सं० अ० १३ क० ५३ । ( २ ) शु० य० सं० अ० १३ क० ५३ । ( ३ ) शु० य० सं० अ० १३ क० ५३ । ( ४ ) शु० य० सं० अ० १३ क० ५३ । ( ५ ) शु० य० सं० अ० १३ क० ५३ ।

मी'ति । इयं वा ऽअपामयनमस्याᳬं ह्यापो यन्त्यस्यां ताᳬं सादयति तद्या ऽअस्यैतेभ्यो रूपेभ्य ऽआप-ऽआयँस्ता ऽअस्मिन्नेतत्प्रतिदधात्यथो ऽएतान्न्येवास्मिन्नेत-द्रूपाणि दधाति ॥५०॥ '[1]अर्ण्णवे त्वा सदने सादयामी'ति । प्राणो वा ऽअर्ण्णवः प्राणे ताᳬं सादयति ॥ ५१ ॥ 'समुद्रे [2]त्वा सदने सादयामी'तिं । मनो वै समुद्रो मनसो वै समुद्राद्वाचाभ्र्या देवास्त्रयीं विद्यां निरखनँस्तदेष श्लोको-ऽभ्युक्तो ये समुद्रान्निरखनन्देवास्तीक्ष्णाभिरभ्रिभिः सुदेवो ऽअद्य तद्विद्याद्यत्र निर्व्वपणं दधुरिति मनः समुद्रो वाक्तीक्ष्णाभ्रिस्त्रयी विद्या निर्व्वपणमेतदेष श्लोकोऽभ्युक्तो मनसि ताᳬं सादयति ॥ ५२ ॥ 'सरिरे [3]त्वा सदने सादयामी'ति । वाग्वै सरिरं वाचि ताᳬं सादयति ॥ ५३ ॥ '[4]अपां त्वा क्षये सादयामी'ति । चक्षुर्वा ऽअपां क्षयस्तत्र हि सर्व्वदैवापः क्षियन्ति चक्षुषि ताᳬं सादयति ॥ ५४ ॥ '[5]अपां त्वा सधिषि सादयामी'-ति । श्रोत्रं वा ऽअपाᳬं सधिः श्रोत्रे ताᳬं सादयति तद्या ऽअस्यैतेभ्यो रूपेभ्य ऽआपऽ आयँस्ता ऽअस्मि-न्नेतत्प्रतिदधात्यथो ऽएतान्न्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५५ ॥ '[6]अपां त्वा सदने सादयामी'ति । द्यौर्वा-ऽअपाᳬं सदनं दिवि ह्यापः सन्ना दिवि ताᳬं

(१) शु० य० सं० अ० १३ क० ५३। (२) शु० य० सं० अ० १३ क० ५३। (३) शु० य० सं० अ० १३ क० ५३। (४) शु० य० सं० अ० १३ क० ५३। (५) शु० य० सं० अ० १३ क० ५३। (६) शु० य० सं० अ० १३ क० ५३।

सादयति ॥ ५६ ॥ 'अपां त्वा सधस्थे सादयामीति । अन्तरिक्षं वा ऽअपाᳩ सधस्थमन्तरिक्षे ताᳩ सादयति ॥ ५७ ॥ 'अपां त्वा योनौ सादयामी'ति । समुद्रो वा-ऽअपां योनिः समुद्रे ताᳩ सादयति ॥ ५८ ॥ 'अपां त्वा पुरीषे सादयामी'ति । सिकता वा ऽअपां पुरीषᳩ सिकतासु ताᳩ सादयति ॥ ५९ ॥ 'अपां त्वा पाथसि सादयामी'ति । अन्नं वा ऽअपां पाथोऽन्ने ताᳩ सादयति तद्या ऽअस्यै-तेभ्यो रूपेभ्य ऽआप ऽआयँस्ता ऽअस्मिन्नेतत्प्रतिदधात्यथो-ऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ६० ॥ 'गायत्रेण त्वा च्छन्दसा सादयामि । त्रैष्टुभेन त्वा च्छन्दसा सादयामि जागतेन त्वा च्छन्दसा सादयाम्यानुष्टुभेन त्वा च्छन्दसा सादयामि पाङ्क्तेन त्वा च्छन्दसा सादया-मी'ति तद्या ऽअस्यैतेभ्यश्छन्दोभ्य ऽआप ऽआयँस्ता-ऽअस्मिन्नेतत्प्रतिदधात्यथो ऽएतान्येवास्मिन्नेतच्छन्दाᳩ-सि दधाति ॥ ६१ ॥ ता ऽएता ऽअङ्गुलयः । ताः सर्वत ऽउपदधाति सर्वतो हीमा ऽअङ्गुलयो तेषूपद-धात्यन्तेषु हीमा ऽअङ्गुलयश्चतुर्द्धोपदधाति चतुर्द्धा हीमा ऽअङ्गुलयः पञ्च-पञ्चोपदधाति पञ्च—पञ्च हीमा ऽअङ्गुलयो नानोपदधाति नाना हीमा ऽअङ्गुलयः

(१) शु० य० सं० अ० १३ क० ५३ । (२) शु० य० सं० अ० १३ क० ५३ । (३) शु० य० सं० अ० १३ क० ५३ । (४) शु० य० सं० अ० १३ क० ५३ । (५) शु० य९ सं० अ० १३ क० ५३ ।

सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनाः ॥ ६२ ॥ (B)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या १०० ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

*† हस्तिघटं नाम सप्तमं काण्डं समाप्तम् ॥ ७ ॥



(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ९. ५. १–४; कठ० सं० १६. १६–१८; कपि० सं० २५. ८, ९; मै० सं० ११. ७. १७, १८; तै० सं० ४. २. ९, ३. ११।

† अस्मिन्काण्डे कण्डिकासंख्या ॥ ३९८ ॥

# अथ चितिनामाष्टकं काण्डम्

अस्मिन् काण्डे प्रतिपाद्या विषयाः– प्राणभृत्संज्ञकेष्टकोपधानम्, आश्विनी-ष्टकोपधानादि, स्वयमातृण्णाद्युपधानम्, विश्वज्योतिर्ऋतव्याद्युपधानम्, स्तोमभागाद्युपधानम्, स्तोमचित्यर्थवादः, असपत्नाद्युपधानम्, ऋतव्याद्यर्थवादादि, इष्टकाप्रमाणम्, पुरीषनिवापादि, सुवर्णशकलसहस्रेण प्रोक्षणादिकं चेति ।

[ प्राणभृत्संज्ञकेष्टकोपधानम् ]

ॐ ॥ प्राणभृत उपदधाति । प्राणा वै प्राणभृतः प्राणानेवैतदुपदधाति ताः प्रथमायां चिता उपदधाति पूर्वार्द्धे एषोऽग्नेर्यत्प्रथमा चितिः पुरस्तात्तत्प्राणान्दधाति तस्मादिमे पुरस्तात्प्राणाः ॥ १ ॥ ता दश-दशोपदधाति । दश वै प्राणा यदु वा अपि बहु-कृत्वो दश–दश दशैव तत्पञ्चकृत्वो दश–दशोपदधाति पञ्च वा एतान्पशूनुपदधाति दश–दश वा एकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दधात्यनन्तर्हिताः पशुभ्य उपदधात्यनन्तर्हितांस्तत्पशुभ्यः प्राणान्दधाति सर्वत उपदधाति सर्वत एवैष्वेतत्प्राणान्दधाति ॥ २ ॥ यद्वेव प्राणभृत उपदधाति । प्रजापतेर्विस्रस्तात्प्राणा उदक्रामन्देवता भूत्वा तानब्रवीदुप मेत प्रति म एतद्धत्त येन मे यूयमुदक्रमिष्टेति स वै तदन्नः सृजस्व यत्ते वयं पश्यन्त उपवसामेति ते वा उभये

'सृजामहा ऽइति तथेति ते प्प्राणाश्च प्रजापतिश्चै-तदन्नमसृजन्तैताः प्प्राणभृतः ॥ ३ ॥ स * पुरस्तादुप-दधाति । '[1]अयं पुरो भुव' ऽइत्यग्निर्वै पुरस्तद्यत्तमाह पुर-ऽइति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्प्राञ्चमुपचरन्त्यथ यद्भुव-ऽइत्याहाग्निर्वै भुवोऽग्नेर्हीदꣳ सर्वं भवति प्प्राणो ह्यग्नि-र्भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधाति ॥ ४ ॥ '[2]तस्य प्प्राणो भौवायन' ऽइति । प्राणं तस्म्माद्रूपादग्नेर्न्निरमिमीत '[3]वसन्तः प्प्राणायन' ऽइति वसन्तमृतुं प्राणान्निरमिमीत '[4]गायत्री वासन्ती'ति गायत्रीं छन्दो वसन्तादृतोर्न्निर-मिमीत '[5]गायत्र्यै गायत्रमि'ति गायत्र्यै च्छन्दसो गायत्रꣳ साम निरमिमीत '[6]गायत्रादुपाꣳशुरि'ति गायत्रात्साम्म्न-ऽउपाꣳशुं ग्रहं निरमिमीतो'[7]पाꣳशोस्त्रिवृदि'त्युपाꣳशो-र्ग्ग्रहात्त्रिवृतꣳ स्तोमं निरमिमीत '[8]त्रिवृतो रथन्तरमि'ति त्रिवृत स्तोमाद्रथन्तरं पृष्ठं निरमिमीत ॥ ५ ॥ '[9]वसिष्ठ-ऽऋषिरि'ति । प्राणो वै वसिष्ठ ऽ षिर्य्यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तृतमो वसति तेनो ऽएव वसिष्ठः '[10]प्प्रजापतिगृहीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत-'[11]त्प्राणं गृह्णामि प्प्रजाब्भ्य' ऽइति प्राणं पुरस्तात्प्रा-

* का० श्रौ० सू० १७. ६ ३ ।

( १ ) शु० य० सं० अ० १३ क० ५४ । ( २ ) शु० य० सं० अ० १३ क० ५४
( ३ ) शु० य० सं० अ० १३ क० ५४ । ( ४ ) शु० य० सं० अ० १३ क० ५४
( ५ ) शु० य० सं० अ० १३ क० ५४ । ( ६ ) शु० य० सं० अ० १३ क० ५४
( ७ ) शु० य० सं० अ० १३ क० ५४ । ( ८ ) शु० य० सं० अ० १३ क० ५४
( ९ ) शु० य० सं० अ० १३ क० ५४ । ( १० ) शु० य० सं० अ० १३ क० ५४
( ११ ) शु० य० सं० अ० १३ क० ५४ ।

पादयत नानोपदधाति ये नानाकामाः प्राणे- ताँस्तद्दधाति सकृत्सादयत्येकं तत्प्राणं करोत्यथ यन्नाना सादुयेत्प्राणः ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका यजुः सादनः सूददोहास्तत्त्रिवृत्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तत्कृत्वोपदधाति ॥ ६ ॥ अथ दक्षिणतः । 'अयं दक्षिणा विश्वकर्म्मे'त्ययं वै वायुर्विश्वकर्म्मा योऽयं पवत ऽएष हीदः सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति मनो ह वायुर्भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ ७ ॥ * 'तस्य मनो वैश्वकर्म्मणमि'ति । मनस्तस्माद्रूपाद्वायोर्निरमिमीत 'ग्रीष्मो मानस' ऽइति ग्रीष्ममृतुं मनसो निरमिमीत 'त्रिष्टुब्ग्रैष्मी'ति त्रिष्टुभं छन्दो ग्रीष्मादृतोर्निरमिमीत 'त्रिष्टुभः स्वारमि'ति त्रिष्टुभश्छन्दसः स्वारः साम निरमिमीत 'स्वारादन्तर्याम' ऽइति स्वारात्साम्नोऽन्तर्यामं ग्रहं निरमिमीता'न्तर्यामात्पञ्चदश' ऽइत्यन्तर्यामाद् ग्रहात्पञ्चदशः स्तोमं निरमिमीत 'पञ्चदशाद् बृहदि'ति पञ्चदशात्स्तोमाद् बृहत्पृष्ठं निरमिमीत ॥ ८ ॥ 'भरद्वाज ऽऋषिरि'ति । मनो वै भरद्वाज ऽऋषिरन्नं वाजो यो वै मनो बिभर्त्ति सोऽन्नं

(१) शु० य० सं० अ० १३ क० ५५ ।

* अत्र शतम् ४३०० ॥

(२) शु० य० सं० अ० १३ क० ५५ (३) शु० य० सं० अ० १३ क० ५५ । (४) शु० य० सं० अ० १३ क० ५५ । (५) शु० य० सं० अ० १३ क० ५५ । (६) शु० य० सं० अ० १३ क० ५५ । (७) शु० य० सं० अ० १३ क० ५५ । (८) शु० य० सं० अ० १३ क० ५५ । (९) शु० य० सं० अ० १३ क० ५५ ।

वाजं भरति तस्मान्मनो भरद्वाज ऽऋषिः 'प्रजापति-गृहीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत'न्मनो गृह्णामि प्रजाभ्य' ऽइति मनो दक्षिणतः प्राणादयत नानोपदधाति ये नानाकामा मनसि ताँस्तद्दधाति सकृत्सादयत्येकं तन्मनः करोत्यथ यन्नाना सादयेन्मनो ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ९ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



अथ * पश्चात् । 'अयं पश्चाद्विश्वव्व्यचा' ऽइत्यसौ वा ऽआदित्यो विश्वव्व्यचा यदा ह्येवैष ऽउदेत्यथेदꣳ सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति चक्षुर्हादित्यो भूत्वा पश्चात्तस्थौ तदेव तद्रूपमुपदधाति ॥ १ ॥ 'तस्य चक्षुर्वैश्वव्व्यचसमि'ति । चक्षुस्तस्माद्रूपादादित्यान्निरमिमीत 'वर्षाश्चाक्षुष्य' ऽइति वर्षा ऽऋतुं चक्षुषो निरमिमीत 'जगती वार्षी'ति जगतीं छन्दो वर्षाभ्य ऽऋतोर्न्निरमिमीत 'जगत्या ऽऋक्समम'ति जगत्यै च्छन्दस ऽऋक्समꣳ साम निरमिमीत 'ऋक्समाच्छुक्र' ऽइत्यृक्समात्साम्नः शुक्रं

(१) शु० य० सं० अ० १३ क० ५५। (२) शु० य० सं० अ० १३ क० ५५।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १०. १. १; कठ० सं० १६. १९; कपि० सं० २५. ९; मै० सं० ११. ७. १९; तै० सं० ४. ३. २।

* का० श्रौ० सू० १७. ६. ४।

(३) शु० य० सं० अ० १३ क० ५६। (४) शु० य० सं० अ० १३ क० ५६। (५) शु० य० सं० अ० १३. ५६। (६) शु० य० सं० अ० १३ क० ५६। (७) शु० य० सं० अ० १३ क० ५६। (८) शु० य० सं० अ० १३ क० ५६।

ग्रहं निरमिमीत 'शुक्रात्सप्तदश' ऽइति शुक्राद् ग्रहात्सप्तदशᳫं स्तोमं निरमिमीत 'सप्तदशाद्वैरूपमि'ति सप्तदशास्तोमाद्वैरूपं पृष्ठं निरमिमीत ॥ २ ॥ 'जमदग्निर्ऋषिरि'ति । चक्षुर्वै जमदग्निर्ऋषिर्यदेनेन जगत्पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः 'प्रजापतिगृहीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत'च्चक्षुर्गृह्णामि प्रजाभ्य' ऽइति चक्षुः पश्चात्प्रापादयत * नानोपदधाति ये नानाकामाश्चक्षुषि ताँस्तद्दधाति सकृत्सादयत्येकं तच्चक्षुः करोत्यथ यन्नाना सादयेच्चक्षुर्ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ३ ॥ अथोत्तरतः । 'इदमुत्तरात्स्वरि'ति दिशो वा ऽउत्तरात्तद्यत्ता ऽआहोत्तरादित्युत्तरा ह्यस्मात्सर्वस्माद्दिशोऽथ यत्स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रᳫं ह दिशो भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ ४ ॥ 'तस्य श्रोत्रᳫं सौवमि'ति । श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीत 'शरच्छ्रौत्री'ति शरदमृतुᳫं श्रोत्रान्निरमिमी'तानुष्टुप्शारदी'त्यनुष्टुभं छन्दः शरद ऽऋतोर्न्निरमिमीता'नुष्टुभ ऽऐडमि'त्यनुष्टुभश्छन्दसऽऐडᳫं साम निरमिमी'तैडान्मन्थी'त्यैडात्साम्नो मन्थिनं ग्रहं निरमिमीत 'मन्थिन ऽएकविᳫंश' ऽइति मन्थिनो

( १ ) शु० य० सं० अ० १३ क० ५६ । ( २ ) शु० य० सं० अ० १३ क० ५६ ( ३ ) शु० य० सं० अ० १३ क० ५६ । ( ४ ) शु० य० सं० अ० १३ क० ५६ ( ५ ) शु० य० सं० अ० १३ क० ५६ । * 'यन्त' इति 'ख' पुस्तके । ( ६ ) शु० य० सं० अ० १३ क० ५७ । ( ७ ) शु० य० सं० अ० १३ क० ५७ ( ८ ) शु० य० सं० अ० १३ क० ५७ । ( ९ ) शु० य० सं० अ० १३ क० ५७ ( १० ) शु० य० सं० अ० १३ क० ५७ । ( ११ ) शु० य० सं० अ० १३ क० ५७ ( १२ ) शु० य० सं० अ० १३ क० ५७ ।

वैताह्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो ऽएतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति ॥ ९ ॥ पञ्चैता ऽआहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्रीणाति ॥ १० ॥ अथैनः * समुक्षति । दध्ना मधुना घृतेन जायत ऽएष ऽएतद्यच्चीयते स ऽएष सर्व्वस्मा ऽअन्नाय जायते सर्व्वम्वेतदन्नं यद्दधि मधु घृतः सर्व्वेणैवैनमेतदन्नेन प्प्रीणाति सर्व्वतः समुक्षति सर्व्वत ऽएवैनमेतत्सर्व्वेणान्नेन प्प्रीणाति ॥ ११ ॥ यद्वेवैनः समुक्षति । अत्रैष सर्व्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमं दधात्यन्नं व्वै रूपमेतदु परममन्नं यद्दधि मधु घृतं तद्यदेव परमः रूपं तदस्मिन्नेतदुत्तमं दधाति सर्व्वतः समुक्षत्यपि बाह्येन परिश्रितः सर्व्वत ऽएवास्मिन्नेतद्रूपमुत्तमं दधाति दर्भैस्ते हि शुद्धा मेध्या ऽअग्रैरग्रः हि देवानाम् ॥ १२ ॥ यद्वेवैनः समुक्षति । एतद्वै यत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निः समस्कुर्व्वंस्तदस्मिन्नदोऽमुं पुरस्ताद्भागमकुर्व्वतादः सजूरब्दीयमथास्मिन्नेतः सञ्चित ऽउपरिष्टाद्भागमकुर्व्वत तद्यत्समुक्षति य ऽएवास्मिँस्ते प्प्राणा ऽऋषयः सञ्चित ऽउपरिष्टाद्भागमकुर्व्वत तानेवैतत्प्रीणाति दध्ना मधुना घृतेन

* का० श्रौ० सू० १८. ३. ६ ।

तस्योक्तो बन्धुः ॥ १३ ॥ '[1]ये देवा देवानाम् । यज्ञिया
यज्ञियानामि'ति देवा ह्येते देवानां यज्ञिया ऽउ यज्ञिया-
नाᳪं '[2]संवत्सरीणमुप भागमासत' ऽइति संवत्सरीणᳪं
ह्येत ऽएतं भागमुपासते '[3]ऽहुतादो हविषो यज्ञे ऽअस्मि-
न्नि'त्यहुतादो हि प्राणाः '[4]स्वयं पिबन्तु मधुनो घृत-
स्ये'ति स्वयमस्य पिबन्तु मधुनश्च घृतस्य चेत्येतत्
॥ १४ ॥ '[5]ये देवा देवेषु । अधि देवत्वमायन्नि'ति देवा
ह्येते देवेष्वधि देवत्वमाय '[6]न्ये ब्रह्मणः पुर ऽएतारो-
ऽअस्ये'त्ययमग्निर्ब्रह्म तस्यैते पुर ऽएतारो '[7]येभ्यो न-
ऽऋते पवते धाम किञ्चने'ति न हि प्राणेभ्य ऽऋते
पवते धाम किञ्चन '[8]न ते दिवो न पृथिव्या ऽअधि
स्नुष्वि'ति . नैव ते दिवि न पृथिव्यां यद्देव प्राण-
भृत्तस्मिँस्त ऽइत्येतत् ॥ १५ ॥ द्वाभ्याᳪं समुक्षति ।
द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा
तावतैवैनमेतत्समुक्षति ॥ १६ ॥ अथ * प्रत्यवरोहति ।
'[9]प्राणदा ऽअपानदा' ऽइति सर्वे ह्येते प्राणा योऽय-
मग्निश्चितः स यदेतामत्रात्मनः परिदां न वदेतात्र हैवा-
स्यैष प्राणान्वृञ्जीताथ यदेतामत्रात्मनः परिदां वदते
तथो हास्यैष प्राणान्न वृङ्क्ते '[10]प्राणदा ऽअपानदा

---

(१) शु० य० सं० अ० १७ क० १३ । (२) शु० य० सं० अ० १७ क० १३ ।
(३) शु० य० सं० अ० १७ क० १३ । (४) शु० य० सं० अ० १७ क० १३ ।
(५) शु० य० सं० अ० १७ क० १४ । (६) शु० य० सं० अ० १७ क० १४ ।
(७) शु० य० सं० अ० १७ क० १४ । (८) शु० य० सं० अ० १७ क० १४ ।
* का० श्रौ० सू० १८. ३. ७ ।
(९) शु० य० सं० अ० १७ क० १५ । (१०) शु० य० सं० अ० १७ क० १५ ।

व्यानदा वर्चोदा वरिवोदा’ इत्येतद्वा मेऽसीत्येवैतदा- ‘हान्न्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यꣳ शिवो भवे’ति यथैव यजुस्तथा बन्धुः ॥ १७ ॥ प्रत्येत्य प्रव- र्ग्योपसद्भ्यां प्रचरति । प्रवर्ग्योपसद्भ्यां प्रचर्य्याथास्मै व्रतं वार्द्धव्रतं वा प्रयच्छत्यथ प्रवर्ग्योपसद्भ्यामथ प्रव- र्ग्यमुत्सादयत्याप्त्वा तं कामं यस्मै कामायैनं प्रवृणक्ति ॥ १८ ॥ तं वै परिष्यन्द ऽउत्सादयेत् । तप्तो वा ऽएष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुग्- च्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत्परिष्यन्द- ऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यदुहाप्सु न प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वा ऽआपस्तेनो ऽइमां न हिनस्ति तस्मात्परिष्यन्द- ऽउत्सादयेत् ॥ १९ ॥ अग्नौ त्वेवोत्सादयेत् । इमे वै लोका ऽएषोऽग्निरापः परिश्रितस्तं यदग्ना ऽउत्सादयति तदेवैनं परिष्यन्द ऽउत्सादयति ॥ २० ॥ यद्वेवाग्ना ऽउत्सा- दयति इमे वै लोका ऽएषोऽग्निरग्निर्वायुरादित्यस्तदेते प्रवर्ग्याः स यदन्यत्राग्नेरुत्सादयेदेताँस्तद्देवान्बहिर्द्धेभ्यो लोकेभ्यो दध्यादथ यदग्ना ऽउत्सादयत्येतानेवैतद्देवानेषु लोकेषु दधाति ॥ २१ ॥ यद्वेवाग्ना ऽउत्सादयति । शिर- ऽएतद्यज्ञस्य यत्प्रवर्ग्य ऽआत्मायमग्निश्चितः स यद- न्यत्राग्नेरुत्सादयेद्बहिर्द्धास्माच्छिरो दध्यादथ यदग्ना- ऽउत्सादयत्यात्मानमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति

(१) शु० य० सं० अ० १७ क० १५ ।

॥ २२ ॥ स्वयमातृण्णया सᳫँस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति । प्राणः स्वयमातृण्णा शिरः प्रवर्ग्य ऽआत्मायमग्निश्चितः शिरश्च तदात्मानं च प्राणेन सन्तनोति सन्दधात्युत्साद्य प्रवर्ग्यं यथा तस्योत्सादनम् ॥२३॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ ११० ॥



[ प्रवर्ग्योत्सादनविधिः ]

प्रत्येत्याग्निं प्रहरिष्यन् । आहुतीश्च जुहोति समिधश्चादधात्येतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णीते तस्योक्तो बन्धुः ॥ १ ॥ अथ षोडशगृहीतं गृह्णीते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितेनैवैनमेतदन्नेन प्रीणाति यद्‌ु वा ऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्‌ भूयो हिनस्ति तद्यत्कनीयो न तदवति समाश्याᳫँ स्रुचि गृह्णीते समानो हि स यमेतत्प्रीणाति वैश्वकर्म्मणाभ्यां जुहोति विश्वकर्म्मायमग्निस्तमेवैतत्प्रीणाति तिस्र ऽआहुतीर्ज्जुहोति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ २ ॥ अथ

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ४. १; कठ० १७. १७; कपिष्ठ० २८. १; मै० सं० ११. १०. १; तै० सं० ४. ६. १ ।

समिध ऽआदधाति । यथा तर्प्पयित्वा परिवेविष्यात्तादृक्त-द्दौदुम्बर्य्यो भवन्त्यूर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन प्प्रीणात्याद्र्रा भवन्त्येतद्वै वनस्प्पतीनामनार्त्तं जीवं यदार्द्रं तद्यदेव वनस्प्पतीनामनार्त्तं जीवं तेनैनमेतत्प्रीणाति घृते न्युत्ता भवन्त्याग्नेयं वै घृतꣳ स्वेनैवैनमेतद् भागेन स्वेन रसेन प्प्रीणाति सर्व्वाꣳ रात्रिं वसन्ति तत्र हि ता रसेन सम्पद्यन्ते तिस्रः समिध ऽआदधाति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्रीणाति ॥३॥ यद्वेवैता ऽआहुतीर्ज्जुहोति । एतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेन समस्कुर्वन्नेताभिराहुतिभिस्तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन संस्करोत्येताभिराहुतिभिः ॥ ४ ॥ स वै पञ्चगृहीतं गृह्णीते । पञ्चधाविहितो वा ऽअयꣳ शीर्षन्प्राणो मनो वाक् प्राणश्चक्षुः श्श्रोत्रमेतमेवास्मिन्नेतत्पञ्चधाविहितꣳ शीर्षन्प्राणं दधा'त्यग्निस्तिग्ग्मेन शोचिषे'ति तिग्मवत्या शिर ऽएवास्यैतया सꣳश्यति तिग्मतायै ॥ ५ ॥ अथ षोडशगृहीतं गृह्णीते । अष्टौ प्प्राणा ऽअष्टावङ्गान्न्येतामभि सम्पदꣳ समान्न्याꣳ स्रुचि गृह्णीते समाने ह्येवात्मन्नङ्गानि च प्प्राणाश्च भवन्ति नाना जुहोत्यङ्गेभ्यश्च तत्प्राणेभ्यश्च विधृतिं करोति वैश्वकर्म्मणाभ्यां जुहोति विश्वकर्म्मायमग्निस्तमेवैतत्संस्करोति तिस्र ऽआहुतीर्ज्जुहोति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन संस्करोति सप्तदशभिर्ऋग्भिः सप्तदशः प्प्रजापतिः प्प्रजापति-

( १ ) शु० य० सं० अ० १५ क० १६ ।

रग्निस्त्रिवृदग्निरुर्ध्वावानग्निरूर्ध्वावत्यस्य मात्रा तावतैवैनमेतत्संस्करोत्ये-
कविᳪशतिगृहीतेन द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे
लोका ऽअसावादित्य एकविᳪश ऽएतामभिसम्पदम्
॥ ६ ॥ षड्वैताः समिध ऽआदधाति । एतद्वा ऽएनं देवाः
सर्वं कृत्स्नᳪ संस्कृत्याथैनमेतेनान्नेनाप्रीणन्नेताभिः समि-
द्भिस्तथैवैनमयमेतत्सर्वं कृत्स्नᳪ संस्कृत्याथैनमेतेनान्नेन
प्रीणात्येताभिः समिद्भिरौदुम्बर्यो भवन्त्यार्द्रा घृते न्न्युत्ताः
सर्वाᳪ रात्रिं वसन्ति तस्योक्तो बन्धु'रुदेनमुत्तरां नयेन्द्रेमं
प्रतरान्नय, यस्य कुम्भो गृहे हविरि'ति * यथैव यजुस्तथा
बन्धुस्तिस्रः समिध ऽआदधाति त्रिवृदग्निरूर्ध्वावानग्निरूर्ध्वा-
वत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्र ऽआहुती-
र्जुहोति तत्षट् तस्योक्तो बन्धुः ॥ ७ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ अप्रतिरथजपादि ]

अथातः सम्प्रेष्यति । उद्यच्छेध्ममुपयच्छोपयमनी-
रग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूदेहि ब्रह्म-
न्नप्रतिरथं जपेति ॥ १ ॥ एतद्वै देवानुपप्रैष्यतः । एतं
यज्ञं तᳪस्यमानान्दक्षिणतोऽसुरा रक्षाᳪसि नाष्ट्रा-
ऽअजिघाᳪसन्न यक्ष्यध्वे न यज्ञं तᳪस्यध्व ऽइति ॥ २ ॥
ते देवा ऽइन्द्रमब्रुवन् । त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यव-

( १ ) शु० य० सं० अ० १५ क० ५०—५२ ।

* 'यथा यजुः' इति 'ग-ज' पुस्तकयोः ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ४. १ ।

त्तमोऽसि त्वमिमानि रक्षाᳬंसि प्प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीयमस्त्विति तथेति तस्म्मै वै बृहस्प्पतिं द्वितीयमकुर्वन्न्ब्रह्म वै बृहस्प्पतिस्त ऽइन्द्रेण चैव बृहस्प्पतिना च दक्षिणतोऽसुरान्रक्षाᳬंसि नाष्ट्रा ऽअपहत्त्याभयेऽनाष्ट्र ऽएतं य्यज्ञमतन्न्वत ॥ ३ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदन्नु तानि रक्षाᳬंसि देवैरेवापहतानि यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्त्यथो ऽइन्द्रेण चैवैतद् बृहस्प्पतिना च दक्षिणतोऽसुरान्रक्षाᳬंसि नाष्ट्रा-ऽअपहत्त्याभयेऽनाष्ट्र ऽएतं य्यज्ञं तनुते ॥ ४ ॥ स यः स-ऽइन्द्रः । एष सोऽप्प्रतिरथोऽथ * यः स बृहस्प्पतिरेष स ब्रह्मा तद्यद् ब्रह्माप्प्रतिरथं जपतीन्द्रेण चैवैतद् बृहस्प्पतिना च दक्षिणतोऽसुरान्रक्षाᳬंसि नाष्ट्रा ऽअपहत्त्याभयेऽनाष्ट्र ऽएतं य्यज्ञं तनुते तस्म्माद् ब्रह्माप्प्रतिरथं जपति ॥ ५ ॥ 'आशुः शिशानो व्वृषभो न भीम' [1] † ऽइति । ऐन्द्र्योऽभिरूपा द्वादश भवन्ति द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैतद्दक्षिणतोऽसुरान्रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति त्रिष्टुब्भिर्व्वज्रो वै त्रिष्टुब्व्वज्रेणैवैतद्दक्षिणतोऽसुरान्रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति ता द्वाविᳬंशतिर्ग्गायत्त्र्यः सम्पद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म्म हि ॥ ६ ॥ ‡ अथैनमुद्यच्छति । 'उदु

---

* का० श्रौ० सू० १८. ३. १७।

( १ ) शु० य० सं० अ० १७ क० ३३।

† 'क' पुस्तके 'इत्यैन्द्र्यो' इति पाठो लभ्यते।

‡ का० श्रौ० सू० सं० अ० १८. ३. १८।

त्वां विश्वे देवा ऽअग्ने भरन्तु चित्तिभिरि'ति तस्योक्तो बन्धुः ॥ ७ ॥ अथाभिप्प्रयन्ति । 'पञ्च[2] दिशो दैवीर्य्यज्ञमवन्तु देवीरि'ति देवाश्च्चासुराश्च्चोभये प्प्राजापत्त्या दिक्ष्वस्प्पर्द्धन्त ते देवा ऽअसुराणां दिशोऽवृञ्जत तथैवैतद्यजमानो द्विषतो भ्भ्रातृव्व्यस्य दिशो वृङ्क्ते दैवीरिति तदेना दैवीः कुरुते यज्ञमवन्तु देवीरिति यज्ञमिममवन्तु देवीरित्त्येत'दपामतिं[3] दुर्म्मतिं बाधमाना' ऽइत्त्यशनाया वाऽअमतिरशनायामपबाधमाना ऽइत्त्येत'द्रायस्प्पोषे[4] यज्ञपतिमाभजन्ती'रिति रय्यां च पोषे च यज्ञपतिमाभजन्तीरित्त्येत'द्रायस्प्पोषे[5] ऽअधि यज्ञो ऽअस्त्थादि'ति रय्यां च पोषे चाधि यज्ञोऽस्त्थादित्त्येतत् ॥ ८ ॥ 'समिद्धे[6] ऽअग्नावधि मामहान' ऽइति । यजमानो वै मामहान 'ऽउक्त्थ[7]पत्र' ऽइत्त्युक्त्थानि ह्येतस्य पत्त्रा'णीड्य[8]' ऽइति यज्ञियऽइत्त्ये'तद्गृभीत[9]' इति धारित ऽइत्त्येत'त्तप्तं[10] घर्म्मं परिगृह्यायजन्ते'ति तप्तᳪ ह्येतं घर्म्मं परिगृह्यायजन्तो'र्ज्जा[11] यद्यज्ञमयजन्त देवा' ऽइत्त्यूर्ज्जा ह्येतं यज्ञमयजन्त देवाः ॥ ९ ॥ 'दैव्व्याय[12] धर्त्त्रे जोष्ट्रे' ऽइति । दैवो ह्येष धर्त्ता जोषयितृतमो 'देवश्श्रीः[13] श्रीमनाः शतपया' ऽइति

(१) शु० य० सं० अ० १६ क० ५३। (२) शु० य० सं० अ० १६ क० ५४। (३) शु० य० सं० अ० १७ क० ५४। (४) शु० य० सं० अ० १७ क० ५४। (५) शु० य० सं० अ० १७ क० ५५। (६) शु० य० सं० अ० १७ क० ५५। (७) शु० य० सं० अ० १७ क० ५५। (८) शु० य० सं० अ० १७ क० ५५। (९) शु० य० सं० अ० १७ क० ५५। (१०) शु० य० सं० अ० १७ क० ५५। (११) शु० य० सं० अ० १७ क० ५६। (१२) शु० य० सं० अ० १७ क० ५६। (१३) शु० य० सं० अ० १६ क० ५६।

देवश्श्रीर्ह्येष श्रीमनाः शतपयाः 'परिगृह्य देवा यज्ञमायन्नि'ति परिगृह्य ह्येतं देवा यज्ञमाय'न्देवो देवेभ्यो ऽअद्ध्वर्य्यन्तो ऽअस्थुरि'त्यद्ध्वरो वै यज्ञो देवा देवेभ्यो यज्ञियन्तोऽस्थुरित्येतत् ॥ १० ॥ 'वीतꣳ हविः शमितꣳ शमिता यजद्ध्यै' ऽइति । इष्टꣳ स्विष्टमित्येत'त्तुरीयो यज्ञो यत्र हव्यमेती'त्यद्ध्वर्य्युः पुरस्ताद्यजूꣳषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येषऽएव तुरीयो यज्ञ'स्ततो वाका ऽआशिषो नो जुषन्तामि'ति ततो नो वाकाश्चाशिषश्च जुषन्तामित्येतत् ॥ ११ ॥ 'सूर्य्यरश्मिर्हरिकेशः पुरस्तात् । सविता ज्योतिरुदयाँ२ ऽअजस्रमि'त्यसौ वा ऽआदित्य ऽएषोऽग्निः स ऽएष सूर्य्यरश्मिर्हरिकेशः पुरस्तात्सवितैतज्ज्योतिरुद्यच्छत्यजस्रं 'तस्यँ पूषा प्प्रसवे याति विद्वानि'ति पशवो वै पूषा तऽएतस्य प्प्रसवे प्प्रेरते 'सर्म्पश्यन्विश्वा भुवनानि गोपा' ऽइत्येष वा ऽइदꣳ सर्वꣳ सम्पश्यत्येष ऽउ ऽएवास्य सर्वस्य भुवनस्य गोप्ता ॥ १२ ॥ तद्या ऽअमुष्मादादित्यादर्वाच्यः पञ्चदिशः । ता ऽएतद्देवा ऽअसुराणामवृञ्जताथो ता ऽएवैतत्समारोहँस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा ऽआतः सम्प्राप्नुवँस्त-

( १ ) शु० य० सं० अ० १७ क० ५६ । ( २ ) शु० य० सं० अ० १७ क० ५६ । ( ३ ) शु० य० सं० अ० १७ क० ५६ । ( ४ ) शु० य० सं० अ० १७ क० ५७ । ( ५ ) शु० य० सं० अ० १७ क० ५७ । ( ६ ) शु० य० सं० अ० १७ क० ५८ । ( ७ ) शु० य० सं० अ० १७ क० ५८ । ( ८ ) शु० य० सं० अ० १७ क० ५८ ।

थैवाभिरयमेतद्रातः सम्प्राप्नोति ॥ १३ ॥ अथाश्मानं * पृश्निमुपदधाति । असौ वा ऽआदित्योऽश्मा पृश्निरमुमेवैतदादित्यमुपदधाति पृश्निर्भवति रश्मिभिर्हि मण्डलं पृश्नि तमन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय ऽएतं तदिमौ लोकावन्तरेण दधाति तस्मादेष ऽइमौ लोकावन्तरेण तपति ॥ १४ ॥ आग्नीध्रवेलायाम् । अन्तरिक्षं वा ऽआग्नीध्रमेतं तदन्तरिक्षे दधाति तस्मादेषोऽन्तरिक्षायतनो व्यद्धे-व्यद्धे ह्येष ऽइतः ॥ १५ ॥ स ऽएष प्राणः । प्राणमेवैतदात्मन्धत्ते तदेतदायुरायुरेवैतदात्मन्धत्ते तदेतदन्नमायुर्ह्येतदन्नमु वाऽआयुरश्मा भवति स्थिरो वा ऽअश्मा स्थिरं तदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्नः ॥ १६ ॥ स ऽउपदधाति । 'विमान[1] ऽएष दिवो मध्य ऽआस्त' ऽइति विमानो ह्येष दिवो मध्य ऽआस्त 'ऽआपप्रिवान्[2]रोदसी-ऽअन्तरिक्षमि'त्युद्यन्वा ऽएष ऽइमाँल्लोकानापूरयति 'स विश्वाचीरभिचष्टे[3] घृताचीरि'ति स्रुचश्चैतद्वेदीश्चा'हान्तरा[4] पूर्वमपरं च केतुमि'त्यन्तरेमं च लोकममुं चेत्येतदथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयतेति ॥ १७ ॥ 'उक्षा[5] समुद्रो ऽअरुणः सुपर्ण' ऽइति । उक्षा ह्येष समुद्रोऽरुणः सुपर्णः 'पूर्वस्य[6] योनिं पितुराविवेशे'ति पूर्वस्य

* का० श्रौ० सू० १८. ३. २० ।

( १ ) शु० य० सं० अ० १७ क० ५९ । ( २ ) शु० य० सं० अ० १७ क० ५९ ( ३ ) शु० य० सं० अ० १७ क० ५९ । ( ४ ) शु० य० सं० अ० १७ क० ५९ । ( ५ ) शु० य० सं० अ० १७ क० ६० । ( ६ ) शु० य० सं० अ० १७ क० ६० ।

ह्येष ऽएतं रुयोनिं पितुराविशति 'मद्ध्ये दिवो निहितᳬ पृश्निरश्मे'ति मद्ध्ये ह्येष दिवो निहितᳬ पृश्निरश्मा 'विचक्रमे रजसस्प्पारन्यन्ता'विति विक्रममाणो वा ऽएष-ऽएषां लोकानामन्तान्न्याति ॥ १८ ॥ द्वाब्भ्यामुपदधाति * । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष न सादयत्यसन्नो ह्येष न सूददोहसाधिवदति प्प्राणो वै सूददोहाᳬ प्प्राण ऽएष किं प्राणे प्प्राणं दद्ध्यामिति तं निधाय यथा न नश्यश्येत् ॥ १९ ॥ † अथोपातियन्ति । 'इन्द्रं विश्वा ऽअवीवृधन्नि'ति तस्योक्तो 'बन्धु'र्देवहूर्य्यज्ञ ऽआ च वक्षत्सुम्म्नहूर्य्यज्ञ ऽआ च वक्षदि'ति देवहूश्चैव यज्ञᳬ सुम्म्नहूश्च 'यक्षदग्निर्देवो देवाँ२ ऽआ च वक्षदि'ति यक्षच्चैवाग्निर्देवो देवाना च वहत्वित्येतत् ॥ २१ ॥ 'वाजस्यमा प्प्रसवᳬ । उदग्राभेणोदग्ग्रभीत् । अधा सपत्नानिन्द्रो मे निग्ग्राभेणाधराँ२ ऽअकरि'ति यथैव यजुस्तथा बन्धुᳬ ॥ २१ ॥ 'उदग्राभं च निग्ग्राभं च ब्रह्म देवाऽअवीवृधन् । अधा सपत्नानिन्द्राग्नी मे विषूची नाऽन्व्यस्यतामि'ति यथैव यजुस्तथा बन्धुᳬ ॥ २२ ॥ तद्याऽअमुष्मादादित्यादूर्द्ध्वाश्चतस्रो दिशᳬ । ता ऽएतद्देवा-

( १ ) शु० य० सं० अ० १७ क० ६० । ( २ ) शु० य० सं० अ० १७ क० ६० ।
* का० श्रौ० सू० १८. ३. २२ ।
† 'अथोपायन्ति' इति 'ग-ज' पुस्तकयोर्दृश्यते ।
( ३ ) शु० य० सं० अ० १७ क० ६१ । ( ४ ) शु० य० सं० अ० १७ क० ६२ । ( ५ ) शु० य० सं० अ० १७ क० ६२ । ( ६ ) शु० य० सं० अ० १७ क० ६३ । ( ७ ) शु० य० सं० अ० १७ क० ६४ ।

ऽअसुरणामवृञ्जताथो ता ऽएवैतत्समारोहँस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा ऽआतः सम्प्राप्नुवँस्तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ २३ ॥ अथाग्निमारोहन्ति * । 'क्रमद्ध्वमग्निना[1] नाकमि'ति स्वर्ग्गो वै लोको नाकः क्रमद्ध्वमनेनाग्निनैतं स्वर्ग्गं लोकमित्येतद्'उख्यं[2] हस्तेषु बिभ्रत' ऽइत्युख्यं ह्येत ऽएतं हस्तेषु बिभ्रति 'दिवस्पृष्ठं[3] स्वर्गत्वा मिश्रा देवेभिराद्ध्वमि'ति दिवस्पृष्ठं स्वर्ग्गं लोकं गत्वा मिश्रा देवेभिराद्ध्वमित्येतत् ॥ २४ ॥ 'प्राचीमनु[4] प्रदिशं प्रेहि विद्वानि'ति । प्राची वै दिगग्नेः स्वामनु प्रदिशं प्रेहि विद्वानित्येत'दग्नेरग्ने[5] पुरो ऽअग्निर्भवेहे'त्यस्य त्वमग्नेरग्ने पुरोऽग्निर्भवेहेत्येत'द्विश्वा[6] ऽआशा दीद्यानो विभाही'ति सर्वा ऽआशा दीप्यमानो विभाहीत्येत'दूर्ज्जं नो धेहि द्विपदे चतुष्पद' ऽइत्याशिषमाशास्ते ॥ २५ ॥ 'पृथिव्या[7] ऽअहम् । उदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहमि'ति गार्हपत्याद्ध्याग्नीध्रीयमागच्छन्त्याग्नीध्रीयादाहवनीयं 'दिवो[8] नाकस्य पृष्ठात्स्वर्ज्योतिरगामहमि'ति दिवो नाकस्य पृष्ठात्स्वर्ग्गं लोकमगामहमित्येतत् ॥ २६ ॥ 'स्वर्यन्तो[10] नापेक्षन्ते । आ द्याम्

---

* का० श्रौ० सू० १८. ४. १ ।

( १ ) शु० य० सं० अ० १७ क० ६५ । ( २ ) शु० य० सं० अ० १७ क० ६५ ।
( ३ ) शु० य० सं० अ० १७ क० ६५ । ( ४ ) शु० य० सं० अ० १७ क० ६६ ।
( ५ ) शु० य० सं० अ० १७ क० ६६ । ( ६ ) शु० य० सं० अ० १७ क० ६६ ।
( ७ ) शु० य० सं० अ० १७ क० ६७ । ( ८ ) शु० य० सं० अ० १७ क० ६७ ।
( ९ ) शु० य० सं० अ० १७ क० ६८ । ( १० ) शु० य० सं० अ० १७ क० ६८ ।

रोहन्ति रोदसी' ऽइति न हैव तेऽपेक्षन्ते ये स्वर्ग्गं लोकं यन्ति 'यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिर' ऽइत्येष ऽएव यज्ञो विश्वतोधार ऽएत ऽउ ऽएव सुविद्वाꣳसो य ऽएतं वितन्वते ॥ २७ ॥ 'अग्ने प्प्रेहि प्प्रथमो देवयतामि'ति । इममेतदग्निमाह त्वमेषां प्रेहि प्प्रथमो देवयतामिति 'चक्षुर्देवानामुत मर्त्यानामि'त्युभयेषाꣳ हैतद्देवमनुष्याणां चक्षु'रियक्षमाणा भृगुभिः सजोषा' इति यजमाना भृगुभिः सजोषा ऽइत्येत'त्स्वर्य्यन्तु यजमानाः स्वस्ती'ति स्वर्ग्गं लोकं यन्तु यजमानाः स्वस्तीत्येतत् ॥२८॥ तद्या ऽअमुष्मिँल्लोके पञ्च दिशः । ता ऽएतद्देवा ऽअसुराणामवृञ्जताथो ता ऽएवैतत्समारोहँस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा ऽआतः सम्प्राप्नुवँस्तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ २९ ॥ अथैनमभिजुहोति । एतद्वा ऽएनं देवा ऽईयिवाꣳसमुपरिष्टादन्नेनाप्प्रीणन्नेतयाहुत्या तथैवैनमयमेतदीयिवाꣳसमुपरिष्टादन्नेन प्प्रीणात्येतयाहुत्या कृष्णायै शुक्लवत्सायै पयसा रात्रिर्वै कृष्णा शुक्लवत्सा तस्या ऽअसावादित्यो वत्सः स्वेनैवैनमेतद्भागेन स्वेन रसेन प्प्रीणात्युपरि धार्य्यमाण ऽउपरि हि स यमेतत्प्रीणाति दोहनेन दोहनेन हि पयः प्प्रदीयते ॥ ३० ॥ यद्वेवैनमभिजुहोति ।

( १ ) शु० य० सं० अ० १७ क० ६९ । ( २ ) शु० य० सं० अ० १७ क० ६९ ।
( ३ ) शु० य० सं० अ० १७ क० ६९ । ( ४ ) शु० य० सं० अ० १७ क० ६९
( ५ ) शु० य० सं० अ० १७ क० ६९ ।

शिर ऽएतद्यज्ञस्य यदग्निः प्प्राणः पयः शीर्षंस्तत्प्राणं दधाति यथा * स्वयमातृण्णामभिप्प्रक्षरेदेवमभिजुहुयात्प्राणः स्वयमातृण्णा रस ऽएष शिरश्च तत्प्राणं च रसेन सन्तनोति सन्दधाति '[1]नक्तोषासा समनसा व्विरूपे' ऽइति तस्योक्तो बन्धुः ॥ ३१ ॥ '[2]अग्ने सहस्राक्षे'ति । हिरण्यशकलैर्व्वा ऽएष सहस्राक्षः '[3]शतमूर्द्धन्नि'ति यदद्रुः शतंशीर्षा रुद्रोऽसृज्यत '[4]शतं ते प्प्राणाः सहस्रं व्व्याना' ऽइति शतꣳ हैव तस्य प्प्राणाः सहस्रं व्व्याना यः शतशीर्षा '[5]त्वꣳ साहस्रस्य राय ऽईशिष' ऽइति त्वꣳ सर्व्वस्यै रय्या ऽईशिष ऽइत्येत'[6]त्तस्मै ते व्विधेम व्वाजाय स्वाहे'त्येष वै व्वाजस्तमेतत्प्रीणाति ॥ ३२ ॥ द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदभिजुहोति ॥३३॥ अथैनं † निदधाति । '[7]सुपर्ण्णोऽसि गरुत्मानि'त्येतद्वा ऽएनमदो व्विकृत्त्या सुपर्ण्णं गरुत्मन्तं व्विकरोति तꣳ सुपर्ण्णं गरुत्मन्तं चिनोति तꣳ सुपर्ण्णं गरुत्मन्तं कृत्वान्ततो निदधाति '[8]पृष्ठे पृथिव्व्याः सीद । भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान तेजसा दिश ऽउद्दꣳहे'त्येवꣳ ह्येष ऽएतत्सर्व्वं

* का० श्रौ० सू० १८. ४. २ ।

(१) शु० य० सं० अ० १७ क० ७० । (२) शु० य० सं० अ० १७ क० ७१ । (३) शु० य० सं० अ० १७ क० ७१ । (४) शु० य० सं० अ० १७ क० ७१ । (५) शु० य० सं० अ० १७ क० ७१ । (६) शु० य० सं० अ० १७ क० ७१ ।

† का० श्रौ० सू० १८. ४. ४ ।

(७) शु० य० सं० अ० १७ क० ७२ । (८) शु० य० सं० अ० १७ क० ७२ ।

करोति ॥ ३४ ॥ 'आजुह्वानः सुप्रतीकः पुरस्तादि'ति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येत'दग्ने स्वं योनिमासीद साधुये'त्येष वा ऽअस्य स्वो योनिस्तः साद्धासीदेत्येत'दस्मिन्त्सधस्थे ऽअद्ध्युत्तरस्मिन्नि'ति द्यौर्वा ऽउत्तरः सधस्थं 'विश्वे देवा यजमानश्च सीदते'ति तद्विश्वैर्देवैः सह यजमानः सादयति द्वाभ्यां निदधाति तस्योक्तो बन्धुर्वषट्कारेण तस्योपरि बन्धुः ॥ ३५ ॥ अथास्मिन्त्समिध ऽआदधाति । एतद्वा ऽएनं देवा ऽईयिवाꣳसमुपरिष्टादन्नेनाप्रीणन्त्समिद्भिश्चाहुतिभिश्च तथैवैनमयमेतदीयिवाꣳसमुपरिष्टादन्नेन प्रीणाति समिद्भिश्चाहुतिभिश्च ॥ ३६ ॥ स वै * शमीमयीं प्रथमामादधाति । एतद्वा ऽएष ऽएतस्यामाहुत्याꣳ हुतायां प्रादीप्यतोदज्वलत्तस्माद्देवा ऽअबिभयुर्यद्वै नोऽयं न हिꣳस्यादिति त ऽएताꣳ शमीमपश्यँस्तयैनमशमयँस्त यदेनः शम्या शमयँस्तस्माच्छमी तथैवैनमयमेतच्छम्या शमयति शान्त्या ऽएव न जग्ध्यै ॥ ३७ ॥ 'ताꣳ सवितुर्वरेण्यस्य । चित्रामाहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो ऽअदुहत्प्रपीनाꣳ सहस्रधारां पयसा महीं गामि'ति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्वान्कामान्दुदुहे तथैवैतद्यजमानाय सहस्रधारा सर्वान्कामान्दुहे ॥ ३८ ॥ अथ

( १ ) शु० य० सं० अ० १७ क० ७३ । ( २ ) शु० य० सं० अ० १७ क० ७३
( ३ ) शु० य० सं० अ० १७ क० ७३ । ( ४ ) शु० य० सं० अ० १७ क० ७३
* का० श्रौ० सू० १८. ४. ६ ।
† 'यदेतः' इति 'ग' पुस्तके ।
( ५ ) शु० य० सं० अ० १७ क० ७४ ।

वैकङ्कतीमादधाति । तस्या ऽउक्तो बन्धु'र्विधेम ते परमे जन्मन्नग्न' ऽइति द्यौर्वा ऽअस्य परमं जन्म 'विधेम स्तोमै-रवरे सधस्थ' ऽइत्यन्तरिक्षं वा ऽअवरꣳ सधस्थं 'ग्यस्मा-द्योनेरुदारिथा यजे तमि'त्येष वा ऽअस्य स्वो योनिस्तं ग्यज ऽइत्येत'त्प्र त्वे हवीꣳषि जुहुरे समिद्ध' ऽइति यदा वा ऽएष समिद्ध्यतेऽथैतस्मिन्न्हवीꣳषि प्प्रजुह्वति ॥ ३९ ॥ अथौदुम्बरीमादधाति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेत-द्रसेन प्प्रीणाति कर्ण्णकवती भवति पशवो वै कर्ण्णकाः पशुभिरेवैनमेतदन्नेन प्प्रीणाति यदि कर्ण्णकवतीं न विन्दे-द्दधिद्रप्प्समुपहत्यादध्यात्तद्यद्दधिद्रप्प्स ऽउपतिष्ठते तदेव पशुरूपं 'प्रेद्धो ऽअग्ने दीदिहि पुरो न' ऽइति विराजा दधा-त्यन्नं विराडन्नेनैवैनमेतत्प्रीणाति तिस्रः समिध ऽआदधाति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्री-णाति ॥४०॥ [अर्धप्रपाठकः४७॥] अथाहुतीर्ज्जुहोति * । यथा परिविष्यानुपाययेत्तादृक्तत्स्रुवेण पूर्वे स्रुचोत्तरा'मग्ने तम-द्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋद्ध्यामा त ऽओहैरि'ति यस्ते हृदिस्पृक्स्तोमस्तं त ऽऋद्ध्यासमि-त्येतत्पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्रीणाति ॥ ४१ ॥ अथ वैश्वकर्म्मणीं

---

(१) शु० य० सं० अ० १७ क० ७५ । (२) शु० य० सं० अ० १७ क० ७५ ।
(३) शु० य० सं० अ० १७ क० ७५ । (४) शु० य० सं० अ० १७ क० ७६ ।
* का० श्रौ० सू० १८. ४. ८ ।
(५) शु० य० सं० अ० १७ क० ७६ । (६) शु० य० सं० अ० १७ क० ७७ ।

जुहोति। विश्वकर्म्मायमग्निस्तमेवैतत्प्रीणाति 'चित्तिं[1] जुहोमि मनसा घृतेने'ति चित्तमेषां जुहोमि मनसा च घृतेन चेत्त्येत- 'यथा[2] देवा ऽइहागमन्नि'ति यथा देवा ऽइहागच्छानित्त्येत'द्वीतिहोत्त्रा[3] ऽऋतावृध' ऽइति सत्यवृध ऽइत्त्येत'त्पत्त्ये[4] विश्वस्य भूमनो जुहोमि विश्वकर्म्मण' ऽइति योऽस्य सर्वस्य भूतस्य पतिस्तस्मै जुहोमि विश्वकर्म्मण- ऽइत्त्येत'द्विश्वाहादाभ्यꣳ[5] हविरि'ति सर्वदैवाक्षितꣳ हविरित्त्येतत् ॥ ४२ ॥ अथ † पूर्णाहुतिं जुहोति। सर्वमेतद्यत्पूर्णꣳ सर्वेणैवैनमेतत्प्रीणाति ॥ ४३ ॥ 'सप्त ते- ऽअग्ने[6] समिध' ऽइति। प्राणा वै समिधः प्प्राणा ह्येतꣳ समिन्धते 'सप्त[7] जिह्वा' ऽइति यानमून्त्सप्त पुरुषानेकं पुरुषमकुर्वंस्तेषामेतदाह 'सप्त[8] ऽऋषय' ऽइति सप्त हि त- ऽऋषय ऽआस'न्त्सप्त[9] धाम प्प्रियाणी'ति छन्दाꣳस्येतदाह छन्दाꣳसि वा ऽअस्य सप्त धाम प्प्रियाणि 'सप्त[10] होत्त्राः सप्तधा त्वा यजन्ती'ति सप्त ह्येतꣳ होत्त्राः सप्तधा यजन्ति 'सप्त[11] योनीरि'ति चितीरेतदा'हापृणस्वे'[12]त्त्या प्प्रजायस्वेत्त्येतद् 'घृतेने'[13]ति रेतो वै घृतꣳ रेत ऽएवैतदेषु लोकेषु दधाति 'स्वाहे'[14]ति यज्ञो वै स्वाहाकारो यज्ञियमे-

( १ ) शु० य० सं० अ० १७ क० ७८। ( २ ) शु० य० सं० अ० १७ क० ७८। ( ३ ) शु० य० सं० अ० १७ क० ७८। ( ४ ) शु० य० सं० अ० १७ क० ७८। ( ५ ) शु० य० सं० अ० १७ क० ७८।

† "पूर्णाहुतिं जुहोति सप्तत इति" का० श्रौ० सू० १८. ४. ९।

( ६ ) शु० य० सं० अ० १७ क० ७९। ( ७ ) शु० य० सं० अ० १७ क० ७९। ( ८ ) शु० य० सं० अ० १७ क० ७९। ( ९ ) शु० य० सं० अ० १७ क० ७९। ( १० ) शु० य० सं० अ० १७ क० ७९। ( ११ ) शु० य० सं० अ० १७ क० ७९। ( १२ ) शु० य० सं० अ० १७ क० ७९। ( १३ ) शु० य० सं० अ० १७ क० ७९। ( १४ ) शु० य० सं० अ० १७ क० ७९।

वैतदिदꣳ सकृत्सर्वं करोति ॥ ४४ ॥ सप्त सप्तेति । सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्प्रीणाति तिस्र ऽआहुतीर्जुहोति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्रीणाति तिस्रः समिध ऽआदधाति तत्पट्स्योक्तो बन्धुः ॥ ४५ ॥ तिष्ठन्त्समिध ऽआदधाति । अस्थीनि वै समिधस्तिष्ठन्तीव वा ऽअस्थीन्यासीनऽआहुतीर्ज्जुहोति माꣳसानि वा ऽआहुतय ऽआसत ऽइव वै माꣳसान्यन्तराः समिधो भवन्ति बाह्या ऽआहुतयोऽन्तराणि ह्यस्थीनि बाह्यानि माꣳसानि ॥ ४६ ॥ अथातः सम्पदेव । षट् पुरस्ताज्जुहोति षडुपरिष्टात्षड्भिराश्मनः पृश्नेर्य्यन्ति द्वाभ्यामश्मानं पृश्निमुपदधाति चतुर्भिराग्नेर्य्यन्ति पञ्चभिरग्निमारोहन्ति तदेकां न त्रिꣳशदाहुतिरेव त्रिꣳशत्तमी द्वाभ्यामग्निं निदधाति तद् द्वात्रिꣳशद् द्वात्रिꣳशदक्षरानुष्टुप्प्सैषानुष्टुप् ॥ ४७ ॥ तद्या ऽअमूस्तिस्रोऽनुष्टुभः । गार्हपत्ये सम्पादयन्ति तासामेतामत्रैकामाहरन्ति तद्यदेतामत्राहरन्त्यत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र तस्म्मै नालमासीद्यदन्नमात्स्यत् ॥ ४८ ॥ सोऽग्निमब्रवीत् । त्वयान्नमदानीति तथेति तस्म्मांद्यदैवैतमत्राहरन्त्यथैषोऽलमन्नायालमाहुतिभ्यो भवति ॥ ४९ ॥ अथो ऽआहुः । प्रजापतिरेवैतं प्रियं पुत्रमुरस्याधत्त ऽइति स यो हैतदेवं वेद हैवं प्रियं पुत्रमुरसि धत्ते ॥ ५० ॥ श्रद्धेवैतमत्राहरन्ति । याऽवै तान्त्सप्त

पुरुषानेकं पुरुषमकुर्वन्नयमेव स योऽयमग्निश्चीयतेऽथ यामेषां तामूर्द्ध्वाꣳ श्रियꣳ रसꣳ समुदौहन्नेष स यमेतमत्राग्निमाहरन्ति तद्यदेतमत्राहरन्ति यैवैतेषाꣳ सप्तानां पुरुषाणाꣳ श्रीर्यो रसस्तमेतदूर्द्ध्वꣳ समुदूहन्ति तदस्यैतच्छिर ऽआत्मायमग्निश्चित ऽआत्मामेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति ॥ ५१ ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

[ वैश्वानरमारुतयोर्होमविध्यादि ]

अथातो * वैश्वानरं जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र वैश्वानरो देवता तस्मा ऽएतद्धविर्जुहोति तदेनꣳ हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानरः ॥ १ ॥ यद्वेवैतं वैश्वानरं जुहोति । वैश्वानरं वा ऽएतमग्निं जनयिष्यन्भवति तमदः पुरस्ताद्दीक्षणीयायाꣳ रेतो भूतꣳ सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यत्तत्र वैश्वानरꣳ रेतो भूतꣳ सिञ्चति तस्मादयमिह वैश्वानरो जायत ऽउपाꣳशु तत्र भवति रेतो वै तत्र यज-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ४. २; कठ० सं० १८. ३. ५; १८. ४; कपिष्ठ० २८. ३. ५; २८. ४; मै० सं० ११. १०. ४, ६; तै० सं० ४. ६. ३, ५।

* का० श्रौ० सू० १८. ४. १६–१९।

ऽउपाꣳशु वै रेतः सिच्यते निरुक्त ऽइह निरुक्तꣳ हि रेतो जातं भवति ॥ २ ॥ * स यः स वैश्वानरः । इमे स लोका ऽइयमेव पृथिवी विश्वमग्निर्नरोऽन्तरिक्षमेव विश्वं वायुर्नरो द्यौरेव विश्वमादित्यो नरः ॥ ३ ॥ ते ये त ऽइमे लोकाः । इदं तच्छिर ऽइदमेव पृथिव्यो- षधयः श्मश्रूणि तदेतद्विश्वं वागेवाग्निः स नरः सोपरिष्टादस्य भवत्युपरिष्टाद्ध्यस्या ऽअग्निः ॥ ४ ॥ इद- मेवान्तरिक्षम् । तस्मादेतदलोमकमलोमकमिव ह्यन्तरिक्षं तदेतद्विश्वं प्राण ऽएव वायुः स नरः स मध्येनास्य भवति मध्येन ह्यन्तरिक्षस्य वायुः ॥ ५ ॥ शिर ऽएव द्यौः । नक्षत्राणि केशास्तदेतद्विश्वं चक्षुरेवादित्यः स नरस्तदवस्ताच्छीर्ष्णो भवत्यवस्ताद्धि दिव ऽआदित्य- स्तदस्यैतच्छिरो वैश्वानर ऽआत्मायमग्निश्चित ऽआत्मा- नमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति ॥ ६ ॥ अथ मारुताञ्जुहोति । प्राणा वै मारुताः प्राणानेवास्मिन्नेत- द्दधाति वैश्वानरꣳ हुत्वा शिरो वै वैश्वानरः शीर्षंस्तत्प्रा- णान्दधाति ॥ ७ ॥ एक ऽएष भवति । एकमिव हि शिरः सप्तेतरे सप्तकपाला यद्वु वा ऽअपि बहुकृत्वः सप्त— सप्त सप्तैव तच्छीर्षण्येव तत्सप्त प्राणान्दधाति ॥ ८ ॥ निरुक्त ऽएष भवति । निरुक्तमिव हि शिरोऽनिरुक्ता ऽइतरेऽ- निरुक्ता ऽइव हि प्राणास्तिष्ठन्नेतं जुहोति तिष्ठतीव हि शिर ऽआसीन ऽइतरानासत ऽइव हि प्राणाः ॥ ९ ॥ तद्यौ

* शतम् ४९०० ॥

प्प्रथमौ मारुतौ जुहोति। इमौ तौ प्प्राणौ तौ मद्ध्ये वैश्श्वानरस्य जुहोति मद्ध्ये हीमौ शीर्ष्णः प्प्राणौ ॥ १० ॥ अथ यौ द्वितीयौ। इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्प्राणौ ॥ ११ ॥ अथ यौ तृतीयौ। इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्प्राणौ वागेवारण्येऽनूच्च्यः सोऽरण्येऽनूच्च्यो भवति बहु हि वाचा घोरं निगच्छति ॥ १२ ॥ यद्देव वैश्श्वानरमारुताञ्जुहोति। क्षत्रं वै वैश्श्वानरो विण्मारुताः क्षत्रं च तद्विशं च करोति वैश्श्वानरं पूर्वं जुहोति क्षत्रं तत्कृत्वा विशं करोति ॥ १३ ॥ एक ऽएष भवति। एकस्थं तत्क्षत्रमेकस्थाᳬ श्श्रियं करोति बहव ऽइतरे विशि तद्भूमानं दधाति ॥ १४ ॥ निरुक्त ऽएष भवति। निरुक्तमिव हि क्षत्रमनिरुक्ता ऽइतरेऽनिरुक्तेव हि विट् तिष्ठन्नेतं जुहोति तिष्ठतीव हि क्षत्रमासीन ऽइतरानास्त ऽइव हि विट् ॥ १५ ॥ तं वा ऽएतम्। पुरोऽनुवाक्यवन्तं याज्यवन्तं वषट्कृते स्रुचा जुहोति हस्तेनैवेतरानासीनः स्वाहाकारेण क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति ॥ १६ ॥ तदाहुः। कथमस्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्तीत्येतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्प्रथमानि पदानि सा त्रिपदा गायत्री पुरोऽनुवाक्याथ यानि चत्त्वार्य्युत्तमानि सा चतुष्पदा त्रिष्टुब्याज्येदमेव * कपुत्त्सलमयं दण्डः स्वाहाकारो

* 'कपुच्छलमयम्' इति 'ग-ज' पुस्तकयोः।

वषट्कार ऽएवमु हास्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्ति ॥ १७ ॥ तद्यं प्रथमं दक्षिणतो मारुतं जुहोति । याः सप्त प्राच्च्यः स्रवन्ति ताः स स सप्तकपालो भवति सप्त हि ता याः प्राच्च्यः स्रवन्ति ॥ १८ ॥ अथ यं प्रथममुत्तरतो जुहोति । ऋतवः स स सप्तकपालो भवति सप्त ह्यृतवः ॥ १९ ॥ अथ यं द्वितीयं दक्षिणतो जुहोति । पशवः स स सप्तकपालो भवति सप्त हि ग्राम्म्याः पशवस्तमन्तर्हितं पूर्वस्म्माज्जुहोत्यप्सु तत्पशून्प्रतिष्ठापयति ॥ २० ॥ अथ यं द्वितीयमुत्तरतो जुहोति । सप्त ऽऋषयः स स सप्तकपालो भवति सप्त हि सप्तर्षयस्तमनन्तर्हितं पूर्वस्म्माज्जुहोत्यृतुषु तदृषीन्प्रतिष्ठापयति ॥ २१ ॥ अथ यं तृतीयं दक्षिणतो जुहोति । प्राणाः स स सप्तकपालो भवति सप्त हि शीर्षन्प्राणास्तमनन्तर्हितं पूर्वस्म्माज्जुहोत्यनन्तर्हितास्तच्छीर्ष्णः प्राणान्दधाति ॥ २२ ॥ अथ यं तृतीयमुत्तरतो जुहोति । छन्दाᳬसि स स सप्तकपालो भवति सप्त हि चतुरुत्तराणि च्छन्दाᳬसि तमनन्तर्हितं पूर्वस्म्माज्जुहोत्यनन्तर्हितानि तदृषिभ्यश्छन्दाᳬसि दधाति ॥ २३ ॥ अथ याः सप्त प्रतीच्च्यः स्रवन्ति । सोऽरण्येऽनूच्च्यः स सप्तकपालो भवति सप्त हि ता याः प्रतीच्च्यः स्रवन्ति सोऽस्यैषोऽवाङ् प्राण ऽएतस्य प्रजापतेः सोऽरण्येऽनूच्च्यो भवति तिर *ऽइव वै तद्यदरण्यं तिर ऽइव तद्यदवाङ् प्राणस्तस्मा-

* 'ऽइव तद्य' इति 'ग' पुस्तके ।

य्य ऽएतासां नदीनां पिबन्ति रिप्प्रतरा शपनतरा ऽआहनस्य-वादितरा भवन्ति तद्यद्यदेतदाहेदं मारुता ऽइति तदस्म्मा-ऽअन्नं कृत्वापिदधाति तेनैनं प्रीणाति ॥ २४ ॥ स यः स वैश्श्वानरः । असौ स ऽआदित्योऽथ ये ते मारुता रश्म-यस्ते ते सप्त सप्तकपाला भवन्ति सप्त-सप्त हि मारुता गणाः ॥ २५ ॥ स * जुहोति । 'शुक्रज्ज्योतिश्च चित्रज्ज्योतिश्च सत्यज्ज्योतिश्च ज्ज्योतिष्माँश्चे'ति नामान्न्येषामेतानि मण्ड-लमेवैतत्संस्कृत्याथास्मिन्नेतान् रश्मीन्नामग्ग्राहं प्रतिद-धाति ॥ २६ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ वसोर्धाराहोमः ]

अथातो † वसोर्द्धारां जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र वसुस्तस्म्मै देवा ऽएतां धारां प्राग्गृ-ह्णँस्तयैनमप्प्रीणँस्तद्यदेतस्म्मै वसव ऽएतां धारां प्राग्गृह्णँस्त-स्म्मादेनां वसोर्द्धारेत्त्याचक्षते तथैवास्म्मा ऽअयमेतां धारां प्रग्गृह्णाति तयैनं प्रीणाति ॥ १ ॥ यद्वेवैतां वसोर्द्धारां

* का० श्रौ० सू० १८. ४. २२ ।

( १ ) शु० य० सं० अ० १७ क० ८० ।

( A ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ५ १; कसं० १८. ६; कपिष्ठ० २८. ६; मै० सं० ११. ११. १; तै० सं० ४. ६, ५ ।

† यजमान आज्यं संस्कृत्यार्थपरिमाणया महत्यौदुम्बर्या स्रुचा महता स्रुवेण पञ्चवारं गृहीतमाज्यमरण्येऽनूच्ये पुरोडाशेऽधिकरणे तदुपरि सन्ततमविच्छिन्नधारं यथा भवति तथा वसो-र्धाराख्यामाहुतिं जुहोति । घृतेऽग्निप्राप्ते सति 'वाजश्च' ( १८. १–२९ ) इत्यादिहोममन्त्रा-रम्भः का० ोऽष्टाभिरनुवाकैर्वाजश्चेत्यादि-वेट्स्वाहान्तैरेकोनत्रिंशत्कण्डिकात्मकैः ( म. भा. ) ।

जुहोति । अभिषेक ऽएवास्यैष ऽएतद्वा ऽएनं देवाः सर्वं कृत्स्नꣳ संस्कृत्याथैनमेतैः कामैरभ्यषिञ्चन्नेतया वसोर्द्धारया तथैवैनमयमेतत्सर्वं कृत्स्नꣳ संस्कृत्याथैनमेतैः कामैरभिषिञ्चत्येतया वसोर्द्धारयाज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचा तस्योक्तो बन्धुः ॥ २ ॥ वैश्वानरꣳ हुत्वा । शिरो वै वैश्वानरः शीर्ष्णो वा ऽअन्नमद्यतेऽथो शीर्षतो वा-ऽभिषिच्यमानोऽभिषिच्यते मारुतान्हुत्वा प्राणा वै मारुताः प्राणैर्वा ऽअन्नमद्यतेऽथो प्राणेषु वा ऽभिषिच्यमानोऽभिषिच्यते ॥ ३ ॥ तद्वा ऽअरण्येऽनूच्यं । वाग्वा ऽअरण्येऽनूच्यो वाचो वा ऽअन्नमद्यतेऽथो वाचा वा ऽअभिषिच्यमानोऽभिषिच्यते तदेतत्सर्वं वसु सर्वे ह्येते कामाः सैषा वसुमयी धारा यथा क्षीरस्य वा सर्पिषो वैवमारम्भायैवेयमाज्याहुतिर्हूयते तद्यदेषा वसुमयी धारा तस्मादेनां वसोर्द्धारेत्याचक्षते ॥ ४ ॥ स ऽआह । * इदं च म ऽइदं च म ऽइत्यनेन च त्वा प्रीणाम्यनेन चानेन च त्वाभिषिञ्चाम्यनेन चेत्येतदथो ऽइदं च मे देहीदं च म ऽइति सा यदैवैषा धाराग्निं प्राप्नुयादथैतद्यजुः प्रतिपद्येत ॥ ५ ॥ एतद्वा ऽएनं देवाः । एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्द्धारयाथैनमेतान्कामानयाचन्त तेभ्य ऽइष्टः प्रीतोऽभिषिक्त ऽएतान्कामान्प्रायच्छत्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्द्धारयाथैनमेतान्कामान्याचते तस्मा ऽइष्टः प्रीतोऽभिषिक्त-

* 'इदं च म इदं च म' इत्यनेन 'वाजश्च मे प्रसवश्च म' इत्यादि-मान्त्राणां निर्देश इत्यर्थः ।

ऽएतान्कामान्प्रयच्छति द्वौ-द्वौ कामौ सँऽयुनक्त्यव्व्य-वच्छेदाय यथा * व्व्योकसौ सँऽयुञ्ज्यादेवं ऽयज्ञेन कल्प-न्तामिति ॥ ६ ॥ एतद्वै देवा ऽअब्रुवन् । केनेमान्कामा-न्प्रतिग्रहीष्याम ऽइत्यात्मनैवेत्यब्रुवन्न्यज्ञो वै देवानामात्मा यज्ञ ऽउ ऽएव यजमानस्य स यदाह यज्ञेन कल्पन्तामित्या-त्मना मे कल्पन्तामित्येवैतदाह ॥७॥ [काण्डस्यार्धम् २०१ ॥] द्वादशसु कल्पयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्नि-ऽर्यावानग्निऽर्यावित्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्रीणात्यथो तावतैवैनमेतदन्नेनाभिषिञ्चति चतुर्द्दशसु कल्पयत्यष्टासु कल्पयति दशसु कल्पयति त्रयोदशसु कल्पयति ॥ ८ ॥ अथार्द्धेन्द्राणि जुहोति । सर्व्वमेतद्यदर्द्धेन्द्राणि सर्व्वेणैवैन-मेतत्प्रीणात्यथो सर्व्वेणैवैनमेतदभिषिञ्चति ॥ ९ ॥ अथ ग्रहा-ञ्जुहोति । यज्ञो वै ग्रहा यज्ञेनैवैनमेतदन्नेन प्प्रीणात्यथो यज्ञेनैवैनमेतदन्नेनाभिषिञ्चति ॥ १० ॥ (B)

## तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ ९४ ॥

[ वसोर्धाराहोमस्यार्थवादः ]

अथैताद्यज्ञक्रतूञ्जुहोति । '(१)अग्निश्च मे घर्म्मश्च म' ऽइत्येतैरेवैनमेतद्यज्ञक्रतुभिः प्प्रीणात्यथो ऽएतैरेवैन-

* व्योकसौ विभिन्नदेशस्थावाचार्याविंत्यर्थः ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ५. २ ।

( १ ) शु० य० सं० अ० १८ क० २२ ।

मेतज्ज्यक्तुभिरभिषिञ्चति ॥ १ ॥ अथायुज *स्तोमाञ्जुहोति । एतद्वै देवाः सर्वान्कामानाप्त्वायुग्भि स्तोमैः स्वर्गं लोकमायँस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वायुग्भि स्तोमैः स्वर्गं लोकमेति ॥ २ ॥ तद्वै त्रयस्त्रिंशादिति । अन्तो वै त्रयस्त्रिंशोऽयुजाᳪं स्तोमानामन्तत ऽएव तद्देवाः स्वर्गं लोकमायँस्तथैवैतद्यजमानोऽन्तत ऽएव स्वर्गं लोकमेति ॥ ३ ॥ अथ † युग्मतो जुहोति । एतद्वै छन्दाᳪंस्यब्रुवन्न्यातयामा वा ऽअयुज स्तोमा युग्मभिर्वयᳪं स्तोमैः स्वर्गं लोकमयामेति तानि युग्मभि स्तोमैः स्वर्गं लोकमायँस्तथैवैतद्यजमानो युग्मभि स्तोमैः स्वर्गं लोकमेति ॥ ४ ॥ तद्वा ऽअष्टाचत्वारिंशादिति । अन्तो वा ऽअष्टाचत्वारिंशो युग्मताᳪं स्तोमानामन्तत ऽएव तच्छन्दाᳪंसि स्वर्गं लोकमायँस्तथैवैतद्यजमानोऽन्तत ऽएव स्वर्गं लोकमेति ॥ ५ ॥ स ऽआह । 'एका[1] च मे तिस्रश्च मे, चतस्रश्च मेऽष्टौ च म' ऽइति यथा वृक्षᳪं रोहन्नुत्तरामुत्तराᳪं शाखाᳪं समालम्भᳪं रोहेत्तादृक्तद्यद्वेव स्तोमाञ्जुहोत्यन्नं वै स्तोमा ऽअन्नेनैवैनमेतदभिषिञ्चति ॥ ६ ॥ अथ ‡ वयाᳪंसि जुहोति । पशवो वै वयाᳪंसि

---

* एकामादाय द्वितीयां विहाय तृतीयामादाय चतुर्थं विहाय परित्यक्तसमसंख्याकेनात्तविषमसंख्याकेन 'एका च म' इत्यादि मन्त्रेणायुग्मस्तोमाञ्जुहुयात् । अयुग्मस्तोमहोमैः सर्वकामावाप्तिरिति भावः ।

† 'चतस्रश्च मे' इत्यनया कण्डिकया युग्मस्तोमाञ्जुहोति । तद्यथा—प्रथमं चतस्र इत्येतां संख्यामादाय चतुरुत्तरत्वेन स्थितान् युग्मान् स्तोमान् अष्टाचत्वारिंशत्पर्यन्ताञ्जुहुयात् । युग्मस्तोमहोमैः स्वर्गप्राप्तिरित्यर्थः ।

( १ ) शु० य० सं० अ० १८ क० २४, २५ ।

‡ "त्र्यविश्च, पष्ठवाट् च' आभ्यां कण्डिकाभ्यां विहितो होमो वयोहोम इत्युच्यते" ।

पशुभिरेवैनमेतदन्नेन प्रीणात्यथो पशुभिरेवैनमेतदन्नेनाभिषिञ्चति ॥ ७ ॥ अथ * नामग्राहं जुहोति । एतद्वै देवाः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षमप्रीणँस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षं प्रीणाति 'वाजाय[1] स्वाहा प्रसवाय स्वाहे'ति नामान्यस्यैतानि नामग्राहमेवैनमेतत्प्रीणाति ॥ ८ ॥ त्रयोदशैतानि नामानि भवन्ति । त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रीणाति यद्वेव नामग्राहं जुहोति नामग्राहमेवैनमेतदभिषिञ्चति ॥९॥ अथाह । 'इयं[2] ते राण्मित्राय यन्तासि यमन ऽऊर्ज्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याये'त्यन्नं वा ऽऊर्ग्गन्नं वृष्टिरन्नेनैवैनमेतत्प्रीणाति ॥ १० ॥ यद्वेवाह । 'इयं ते राण्मित्राय यन्तासि यमन ऽऊर्ज्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याये'तीदं ते राज्यमभिषिक्तोऽसीत्येतन्मित्रस्य त्वं यन्तासि यमन ऽऊर्ज्जे च नोऽसि वृष्ट्यै च नोऽसि प्रजानां च न ऽआधिपत्यायासीत्युपब्रुवत ऽएवैनमेतदेतस्मै नः सर्वस्मा ऽअस्येतस्मै त्वा सर्वस्मा ऽअभ्यषिचामहीति तस्मादु हेदं मानुषः राजानमभिषिक्तमुपब्रुवते ॥ ११ ॥ अथ † कल्पाञ्जुहोति । प्राणा वै कल्पाः प्राणानेवास्मिन्नेतद्दधा'त्यायुर्यज्ञेन[3] कल्पतां प्राणो यज्ञेन

* "वाजाय स्वाहा" इत्यनेन विहितो होमो नामग्राह इत्युच्यते"।

† 'आयुर्यज्ञेन' इति मन्त्रे कल्पतामिति लिङ्गात् मन्त्रोऽयं कल्पहोमे विनियुज्यते।

( १ ) शु० य० सं० अ० १८. क० २८। ( २ ) शु० य० सं० अ० १८ क० २८। ( ३ ) शु० य० सं० अ० १८ क० २९।

कल्पतामि'त्येतानेवास्मिन्नेतत् क्लृप्ताऽन्प्राणान्दधाति ॥१२॥ द्वादश कल्पाञ्जुहोति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतत् क्लृप्ताऽन्प्राणान्दधाति यद्वेव कल्पाञ्जुहोति प्राणा वै कल्पा ऽअमृतमु वै प्राणा ऽअमृतेनैवैनमेतदभिषिञ्चति ॥ १३ ॥ अथाह । 'स्तोमश्च[1] यजुश्च ऽऋक्च साम च बृहच्च रथन्तरञ्चे'ति त्रयी हैषा विद्यान्नं वै त्रयी विद्यान्नेनैवैनमेतत्प्रीणात्यथो ऽअन्नेनैवैनमेतदभिषिञ्चति 'स्वर्देवा ऽअगन्[2]मामृता ऽअभूमे'ति स्वर्हि गच्छत्यमृतो हि भवति 'प्रजा[3]पतेः प्रजा ऽअभूमे'ति प्रजापतेर्हि प्रजा भवति 'वेट्[4] स्वाहे'ति वषट्कारो हैष परोक्षं यद्वेट्कारो वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते तदेनमेताभ्यामुभाभ्यां प्रीणाति वषट्कारेण च स्वाहाकारेण चाथो ऽएताभ्यामेवैनमेतदुभाभ्यामभिषिञ्चत्यत्र ताᳬं स्रुचमनुप्रास्यति यदत्राज्यलिप्तं तन्नेद्बहिर्धाग्नेरसदिति ॥ १४ ॥ तस्यै वा ऽएतस्यै वसोर्धारायै । द्यौरेवात्माभ्रमूधो विद्युत्स्तनो धारैव धारा दिवोऽधि गामागच्छति ॥ १५ ॥ तस्यै गौरेवात्मा । ऊध ऽएवोध स्तन स्तनो धारैव धारा गोरधि यजमानम् ॥ १६ ॥ तस्यै यजमान ऽएवात्मा । बाहुरूधः स्रुक्स्तनो धारैव धारा यजमानादधि देवान्देवेभ्योऽधि गां गोरधि यजमानं तदेतदनन्तमक्षय्यं देवाना-

( १ ) शु० य० सं० अ० १८ क० २९ । ( २ ) शु० य० सं० अ० १८ क० २९ । ( ३ ) शु० य० सं० अ० १८ क० २९ । ( ४ ) शु० य० सं० अ० १८ क० २९ ।

मन्नं परिप्लवते स यो हैतदेवं वेदैवꣳ हैवास्यैतदनन्तमक्ष-
य्यमन्नं भवत्यथातः सम्पदेव ॥ १७ ॥ तदाहुः । कथम-
स्यैषा वसोर्द्धारा संवत्सरमग्निमाप्नोति कथꣳ संवत्सरेणा-
ग्निना सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येषा
वसोर्द्धाराथ षडथ पञ्चत्रिꣳशत्ततो यानि षष्टिश्च त्रीणि च
शतानि तावन्ति संवत्सरस्याहानि तत्संवत्सरस्याहान्या-
प्नोत्यथ यानि षट् षड् वा ऽऋतवस्तदृतूनाꣳ रात्रीराप्नोति
तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिꣳ-
शत्स त्रयोदशो मासः स ऽआत्मा त्रिꣳशदात्मा प्रतिष्ठा
द्वे प्राणा द्वे शिर ऽएव पञ्चत्रिꣳशमेतावान्वै संवत्सर
ऽएवमु हास्यैषा वसोर्द्धारा संवत्सरमग्निमाप्नोत्येवꣳ
संवत्सरेणाग्निना सम्पद्यत ऽएतावत्य ऽउ वै शाण्डिलेऽग्नौ
मध्यतो यजुष्मत्य ऽइष्टका ऽउपधीयन्तेऽग्नयो हैते
पृथग्यदेता ऽइष्टका ऽएवमु हास्यैतेऽग्नयः पृथग्वसोर्द्धा-
रयाभिहुता भवन्ति ॥ १८ ॥ तदाहुः । कथमस्यैषा वसो-
र्द्धारा महदुक्थमाप्नोति कथं महतोक्थेन सम्पद्यत ऽइत्ये-
तस्या ऽएव वसोर्द्धाराया यानि नव प्रथमानि यजूꣳषि
तत् त्रिवृच्छिरोऽथ यान्यष्टाचत्वारिꣳशत्तौ चतुर्विꣳशौ
पक्षावथ यानि पञ्चविꣳशतिः स पञ्चविꣳश ऽआत्माथ
यान्येकविꣳशतिस्तदेकविꣳशं पुच्छमथ यानि त्रयस्त्रिꣳशत्स
वशोऽथ या ऽअशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि
महदुक्थमाख्यायतेऽथ यदूर्द्ध्वमशीतिभ्यो यदेवादो महत-
ऽउक्थस्योर्द्ध्वमशीतिभ्य ऽएतदस्य तदेवमु हास्यैषा

वसोर्द्धारा महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते ॥ १९ ॥ (C)

## तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



### [ वाजप्रसवीयहोमः, पार्थहोमः, यजमानाभिषेकश्च ]

अथातो * वाजप्रसवीयं जुहोति । अन्नं वै वाजोऽन्नप्प्रसवीयꣳ हास्यैतदन्नमेवास्म्मा ऽएतेन प्प्रसौति ॥ १ ॥ एतद्वा ऽएनं देवाः । एतेनान्नेन प्प्रीत्त्वैतैः कामैरभिषिच्च्यैतया वसोर्द्धारयाथैनमेतद्भूय ऽएवाप्प्रीणँस्तथैवैनमयमेतदेतेनान्नेन प्प्रीत्त्वैतैः कामैरभिषिच्च्यैतया वसोर्द्धारयाथैनमेतद्भूय ऽएव प्प्रीणाति ॥ २ ॥ यद्वेवैतद्वाजप्प्रसवीयं जुहोति । अभिषेक ऽएवास्यैष ऽएतद्वा ऽएनं देवा ऽएतेनान्नेन प्प्रीत्त्वैतैः कामैरभिषिच्च्यैतया वसोर्द्धारयाथैनमेतद्भूय ऽएवाब्भ्यषिञ्चँस्तथैवैनमेयमतदेतेनान्नेन प्प्रीत्त्वैतैः कामैरभिषिच्च्यैतया वसोर्द्धारयाथैनमेतद्भूय ऽएवाभिषिञ्चति ॥ ३ ॥ सर्व्वौषधं भवति । सर्व्वमेतदन्नं ऽयत्सर्व्वौषधꣳ सर्व्वेणैवैनमेतदन्नेन प्प्रीणात्यथो सर्व्वेणैवैनमेतदन्नेनाभिषिञ्चति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेनौदुम्बरेण स्रुवेण तयोरुक्तो बन्धुश्चतुःस्रक्ती भवत-

( C ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ५. २; कठ० १८. ११, १२; कपिष्ठ० २८. ११; २९. १; मै० सं० ११. १२. ६; तै० सं० ४. ७. ६, ९–११ ।

* 'वाजस्यनु' इत्यारभ्य 'पयः पृथिव्याम्' ( शु० य० सं० अ० १८. क० ३०-३६ ) इत्यन्तैर्मन्त्रैः प्रतिमन्त्रम्विहितो होमो वाजप्रसवीय इत्युच्यते ।

श्चतस्रो वै दिशः सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेन प्रीणा-त्यथो सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेनाभिषिञ्चति ॥ ४ ॥ यद्वेवैतद्वाजप्रसवीयं जुहोति। एता ह देवताः सुता-एतेन सवेन येनैतत्सोष्यमाणो भवति ता एवैतत्प्रीणाति ता अस्मा इष्टाः प्रीता एतछ सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निम-भिषिञ्चत्यथ यदेताभ्यो देवताभ्यो जुहोति तदु तान्दे-वान्प्रीणाति य एतस्य सवस्येशते ॥ ५ ॥ अथ वा-एतत्पार्थान्यपि * जुहोति। एतद्वै देवा अकामयन्ता-त्रैव सर्वैः सवैः सूयेमहीति तेऽत्रैव सर्वैः सवैरसूयन्त तथैवैतद्यजमानोऽत्रैव सर्वैः सवैः सूयते ॥ ६ ॥ तद्यानि पार्थानि। तानि राजसूयस्य वाजप्रसवीयं तद्यत्तानि जुहोति तद्राजसूयेन सूयतेऽथ यानि चतुर्दशोत्तराणि ततो यानि सप्त पूर्वाणि तानि वाजपेयस्य वाजप्रसवीयं तद्यत्तानि जुहोति तद्वाजपेयेन सूयतेऽथ यानि सप्तोत्तराणि तान्य-ग्नेस्तद्यत्तानि जुहोति तदग्निसवेन † स्तूयते ॥ ७ ॥ स वै राजसूयस्य पूर्वाणि जुहोति। अथ वाजपेयस्य राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन राज्यमु वा अग्रेऽथ साम्राज्यं तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेत प्रत्य-वरोहः स यथा सम्राट् सन्राजा स्यात्तादृक्तत् ॥ ८ ॥ अग्नेरुत्तमानि जुहोति। सर्वे हैते स वा यदग्निसवः सर्वछ

* का० श्रौ० सू० १८. ५. १५।

† 'सूयते' इति 'ग' पुस्तके।

हैतदग्निसवेन सुतो भवति राजा च सम्म्राट् च तस्मा-
दग्नेरुत्तमानि जुहोति ॥ ९ ॥ अथैनं कृष्णाजिनेऽभिषि-
ञ्चति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतदभिषिञ्चति
लोमतश्छन्दाꣳसि वै लोमानि च्छन्दःस्वेवैनमेतदभिषि-
ञ्चत्युत्तरतस्तस्योपरि बन्धुः प्प्राचीनग्ग्रीवे तद्धि देवत्रा
॥ १० ॥ तꣳ हैके दक्षिणतोऽग्नेरभिषिञ्चन्ति । दक्षिणतो
वा ऽअन्नस्योपचारस्तदेनमन्नस्याद्धादभिषिञ्चाम ऽइति न
तथा कुर्य्यादेषा वै दिक्पितॄणां क्षिप्प्रे हैतां दिशं प्रैति यं
तथाभिषिञ्चन्ति ॥ ११ ॥ आहवनीय ऽउ हैकेऽभिषि-
ञ्चन्ति । स्वर्ग्गो वै लोक ऽआहवनीयस्तदेनꣳ स्वर्ग्गे
लोकेऽभिषिञ्चाम ऽइति न तथा कुर्य्याद्दैवो वा ऽअस्यैष
ऽआत्मा मानुषोऽयमनेन हास्य ते मर्त्त्येनात्मनैतं दैवमा-
त्मानमनुप्प्रसजन्ति यं तथाभिषिञ्चन्ति ॥ १२ ॥ उत्तरत
ऽएवैनमभिषिञ्चेत् । एषा ह्युभयेषां देवमनुष्याणां दिग्यदु-
दीची प्प्राची स्वायामेवैनमेतद्दिश्यायत्तं प्रतिष्ठितमभि-
षिञ्चति न वै स्व ऽआयतने प्प्रतिष्ठितो रिष्यति ॥ १३ ॥
आसीनं भूतमभिषिञ्चेत् । आस्त ऽइव वै भूतस्तिष्ठन्तं
बुभूषन्तं तिष्ठतीव वै बुभूषन्वस्ताजिने पुष्टिकाममभिषि-
ञ्चेत्कृष्णाजिने ब्रह्मवर्च्चसकाममुभयोरुभयकामं तदुत्तरतः
पुच्छस्योत्तरलोम प्प्राचीनग्ग्रीवमुपस्तृणाति ॥ १४ ॥
आस्पृष्टं * परिश्रितः । तद्यत्कृष्णाजिनमास्पृष्टं परिश्रितो
भवति तथो हास्यैष दैव ऽआत्मा कृष्णाजिनेऽभिषिक्तो

* का० श्रौ० सू० १८. ५. ६ ।

भवत्यथ यदेनमन्वारब्धमाग्निं तिष्ठन्तमभिषिञ्चति तथो हैतस्माद्दैवादभिषेकान्न व्यवच्छिद्यते ॥ १४ ॥ अग्नौ † हुत्वाथैनमभिषिञ्चति । दैवो वा ऽअस्यैष ऽआत्मा मानुषोऽयं देवा ऽउ वा ऽअग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथैनं तस्यैव परिशिष्टेनाभिषिञ्चत्यत्र तꣳ स्रुवमनुप्रास्यति ॥ १६ ॥ अथैनं दक्षिणं बाहुमनुपर्य्यावृत्याभिषिञ्चति । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याᳬं सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामी'ति वाग्वै सरस्वती तस्या ऽइदꣳ सर्वं यन्त्रꣳ सवितृप्रसूत ऽएवैनमेतदनेन सर्वेण सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चत्यत्र तं चमसमनुप्रास्यति यदत्र विलिप्तं तन्नेद्बहिर्द्धाग्नेरसदिति ॥ १७ ॥ तं वै मध्ये पार्थानामभिषिञ्चति । संवत्सरो वै पार्थानि संवत्सरस्यैवैनमेतन्मध्यत ऽआदधाति षट् पुरस्ताज्जुहोति षडुपरिष्टात्षड्वा ऽऋतव ऽऋतुभिरेवैनमेतत्सुषुवाणमुभयतः परिगृह्णाति बृहस्पतिः पूर्वेषामुत्तमो भवतीन्द्र ऽउत्तरेषां प्रथमो ब्रह्म वै बृहस्पतिः क्षत्रमिन्द्रो ब्रह्मणा चैवैनमेतत्क्षत्रेण च सुषुवाणमुभयतः परिगृह्णाति ॥ १८ ॥ (D)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

† का० श्रौ० सू० १८. ५. ९ ।

( १ ) शु० य० सं० अ० १८ क० ३७ ।

( C ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ५. ३; कठ० सं० १८. १३; कपिष्ठ० २९. २; मै० सं० १२. १. १; तै० सं० ४. ७. १२ ।

[ राष्ट्रभृद्धोमः ]

अथातो राष्ट्रभृतो जुहोति । राजानो वै राष्ट्रभृतस्ते हि राष्ट्राणि बिभ्रत्येता ह देवताः सुता ऽएतेन सवेन यदेनैतत्सोष्यमाणो भवति ता ऽएवैतत्प्रीणाति ता ऽअस्मा-ऽइष्टाः प्प्रीता ऽएतः सवमनुमन्न्यन्ते ताभिरनुमतः * स्तूयते यस्मै वै राजानो राज्यमनुमन्न्यन्ते स राजा भवति न स यस्म्मै न तद्यद्राजानो राष्ट्राणि बिभ्रति राजान-ऽउ ऽएते देवास्तस्म्मादेता राष्ट्रभृतः ॥ १ ॥ यद्वेवैता † राष्ट्रभृतो जुहोति । प्रजापतेर्विस्स्रस्तान्मिथुनान्न्युदक्राम-न्गन्धर्वाप्प्सरसो भूत्त्वा तानि रथो भूत्त्वा पर्य्यगच्छत्तानि परिगत्त्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्न्ययमेतत्परिगत्त्या-त्मन्धत्त ऽआत्मन्न्कुरुते ॥ २ ॥ स यः स प्प्रजापतिर्व्व्यस्रः सत । अयमेव स योऽयमग्निश्चीयतेऽथ यान्न्यस्म्मात्तानि मिथुनान्न्युदक्रामन्नेतास्ता देवता याभ्य ऽएतज्जुहोति ॥ ३ ॥ गन्धर्वाप्प्सरोभ्यो जुहोति । गन्धर्वाप्प्सरसो हि भूत्त्वोदक्रामन्नथो गन्धेन च वै रूपेण च गन्धर्वाप्प्सरस-श्चरन्ति तस्म्माद्यः कश्च मिथुनमुपप्प्रैति गन्धं चैव स रूपं च कामयते ॥ ४ ॥ मिथुनानि जुहोति । मिथुनाद्वा-ऽअधि प्प्रजातिर्य्यो वै प्प्रजायते स राष्ट्रं भवत्त्यराष्ट्रं वै स भवति यो न प्प्रजायते तद्यन्मिथुनानि राष्ट्रं बिभ्रति मिथुना ऽउ ऽएते देवास्तस्म्मादेता राष्ट्रभृत ऽआज्येन द्वादशगृहीतेन ता ऽउ द्वादशैवाहुतयो भवन्ति तस्योक्तो

* 'सूयते' इति 'ग–ज' पुस्तकयोः ।

† का० श्रौ० सू० १८. ५. १६ ।

बन्धुः ॥ ५ ॥ पुꣳसे पूर्वस्मै जुहोति । अथ स्त्रीभ्यः पुमाꣳसं तद्वीर्य्येणात्त्याद्धात्त्येकस्मा ऽइव पुꣳसे जुहोति बह्वीभ्य ऽइव स्त्रीभ्यस्तस्मादप्प्येकस्य पुꣳसो बह्व्यो जाया भवन्त्युभाभ्यां वषट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः पुमाꣳसमेव तद्वी-र्य्येणात्त्याद्धाति ॥ ६ ॥ 'ऋताषाडृतधामे'ति [1] । * सत्यसात्स त्यधामेत्त्येत'दग्निर्ग्गन्धर्वस्तस्यौषधयोऽप्प्सरस' [2] ऽइत्त्यग्निर्हि गन्धर्व ऽओषधिभिरप्प्सरोभिर्म्मिथुनेन सहोच्चक्राम 'मुदो [3] नामे'त्त्योषधयो वै मुद ऽओषधिभिर्हीदꣳ सर्वं मोदते 'स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहे'ति तस्योक्तो बन्धुः ॥ ७ ॥ 'सꣳहित' [4] ऽइति । असौ वा-ऽआदित्यः सꣳहित ऽएष ह्यहोरात्रे सन्दधाति 'विश्वसा-[5]मे'त्त्येष ह्येव सर्वꣳ साम 'सूर्य्यो गन्धर्वस्तस्य मरीचयोऽप्प्स-रस' ऽइति सूर्य्यो ह गन्धर्वो मरीचिभिरप्प्सरोभिर्म्मिथुनेन सहोच्चक्रा'मायुवो [6] नामे'त्त्यायुवाना ऽइव हि मरीचयः प्प्लवन्ते 'स न ऽइदं [7] ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥ ८ ॥ 'सुषुम्म्ण' [8] ऽइति । सुयज्ञिय ऽइत्त्येत'त्सूर्य्यरश्मि-[9]रि'ति सूर्य्यस्येव हि चन्द्रमसो रश्मय'श्चन्द्रमा [10] गन्धर्वस्तस्य

(१) शु० य० सं० अ० १८ क० ३८ ।

* 'सत्यसाट्' इति 'ग' पुस्तके ।

(२) शु० य० सं० अ० १८ क० ३८ । (३) शु० य० सं० अ० १८ क० ३८ ।

(४) शु० य० सं० अ० १८ क० ३८ । (५) शु० य० सं० अ० १८ क० ३९ ।

(६) शु० य० सं० अ० १८ क० ३९ । (७) शु० य० सं० अ० १८ क० ३९ ।

(८) शु० य० सं० अ० १८ क० ३९ । (९) शु० य० सं० अ० १८ क० ३९ ।

(१०) शु० य० सं० अ० १८ क० ४० । (११) शु० य० सं० अ० १८ क० ४० ।

(१२) शु० य० सं० अ० १८ क० ४० ।

नक्षत्राण्ण्यप्प्सरस' ऽइति चन्द्रमा ह गन्धर्वो नक्षत्रैरप्प्सरोभिर्म्मिथुनेन सहोच्चक्राम 'भेकुरयो नामे'[1]ति भाकुरयो ह नामैते भाꣳ हि नक्षत्राणि कुर्वन्ति 'स[2] न ऽइदं ब्रह्म क्षत्त्रं पात्वि'ति तस्योक्तो बन्धुः ॥ ९ ॥ 'इषिर'[3] ऽइति । क्षिप्प्रऽइत्येत'द्विश्श्वव्व्यचा'[4] ऽइत्येष हीदꣳ सर्वं व्व्यचः करोति 'व्वातो ग[5]न्धर्व्वस्तस्यापो ऽअप्प्सरस' ऽइति व्वातो ह गन्धर्वोऽद्भिरप्प्सरोभिर्म्मिथुनेन सहोच्चक्रा'मोर्ज्जो नामे'[6]त्यापो वा ऽऊर्ज्जोऽद्भ्यो ह्यूर्ग्जायते 'स न ऽइदं ब्रह्म क्षत्त्रं पात्वि'ति तस्योक्तो बन्धुः ॥ १० ॥ 'भुज्युः सुपर्ण्ण' ऽइति । यज्ञो वै भुज्युर्य्यज्ञो हि सर्वाणि भूतानि भुनक्ति 'यज्ञो ग[8]न्धर्व्वस्तस्य दक्षिणा ऽअप्प्सरस' ऽइति यज्ञो ह गन्धर्वो दक्षिणाभिरप्प्सरोभिर्म्मिथुनेन सहोच्चक्राम 'स्तावा[10] नामे'ति दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञ स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयत ऽएव स 'स न[11] ऽइदं ब्रह्म क्षत्त्रं पात्वि'ति तस्योक्तो बन्धुः ॥११॥ [अर्धप्रपाठकः ४८॥]

'प्रजा[12]पतिर्व्विश्श्वकर्म्मे'ति । प्रजापतिर्वै विश्श्वकर्म्मा स हीदꣳ सर्व्वमकरो'न्मनो गन्धर्वस्[13]तस्य ऽऋक्सामान्न्यप्प्सरस' ऽइति मनो ह गन्धर्व्व ऽऋक्सामैरप्प्सरोभिर्म्मिथुनेन सहोच्चक्रा-

(१) शु० य० सं० अ० १८ क० ४० । (२) शु० य० सं० अ० १८ क० ४०
(३) शु० य० सं० अ० १८ क० ४१ । (४) शु० य० सं० अ० १८ क० ४१
(५) शु० य० सं० अ० १८ क० ४१ । (६) शु० य० सं० अ० १८ क० ४१
(७) शु० य० सं० अ० १८ क० ४१ । (८) शु० य० सं० अ० १८ क० ४२
(९) शु० य० सं० अ० १८ क० ४२ । (१०) शु० य० सं० अ० १८ क० ४२
(११) शु० य० सं० अ० १८ क० ४२ । (१२) शु० य० सं० अ० १८ क० ४३
(१३) शु० य० सं० अ० १८ क० ४३ ।

'मेष्टयो नामे'त्यृक्सामानि वा ऽएष्टय ऽऋक्सामैर्ह्याशासत-ऽइति नोऽस्त्वित्यर्थं नोऽस्त्विति 'स न ऽइदं ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥ १२ ॥ अथ रथशीर्षे जुहोति। एष वै स सव ऽएतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै नाज्येन पञ्चगृहीतेन ता ऽउ * पञ्चैवाहुतयो हुता भवन्ति तस्योक्तो बन्धुः ॥१३॥ शीर्षतः। शीर्षतो वा ऽअभिषिच्यमानोऽभिषिच्यत ऽउपरि धार्यमाण ऽउपरि हि स यमेतदभिषिञ्चति समानेन मन्त्रेण समानो हि स यमेतदभिषिञ्चति सर्वतः परिहारः सर्वत ऽएवैनमेतदभिषिञ्चति ॥ १४ ॥ यद्वेव रथशीर्षे † जुहोति । असौ वा ऽआदित्य ऽएष रथ-ऽएतद्वै तद्रूपं कृत्वा प्रजापतिरेतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगत्यात्मन्धत्त ऽआत्मन्कुरुत ऽउपरि धार्यमाण ऽउपरि हि स य ऽएतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत समानेन मन्त्रेण समानो हि स य ऽएतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत सर्वतः परिहारः सर्वतो हि स य ऽएतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत ॥ १५ ॥ 'सं नो भुवनस्य पते प्रजापत' ऽइति। भुवनस्य ह्येष पतिः प्रजापतिर्यस्य त 'ऽउपरि गृहा यस्य

---

( १ ) शु० य० सं० अ० १८ क० ४३। ( २ ) शु० य० सं० अ० १७ क० ४३।
* 'क' पुस्तके 'पञ्चैवाहुतयो भवन्ति' इत्येव लभ्यते।
† का० श्रौ० सू० १८. ५. १७।
( ३ ) शु० य० सं० अ० १८ क० ४४। ( ४ ) शु० य० सं० अ० १८ क० ४४।

वेहे'त्युपरि च ह्येतस्य गृहा ऽइह चा'स्म्मै ब्रह्मणेऽस्म्मै[1] क्षत्राये'त्ययं वा ऽअग्निर्ब्रह्म च क्षत्रं च 'महि शर्म्म यच्छ[2] स्वाहे'ति महच्छर्म्म यच्छ स्वाहेत्त्येतत् ॥ १६ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ वातहोमादि ]

अथ † वातहोमाञ्जुहोति । इमे वै लोका ऽएषोऽग्निर्वायुर्वातहोमा ऽएषु तल्लोकेषु वायुं दधाति तस्म्मादयमेषु लोकेषु वायुः ॥ १ ॥ वाह्येनाग्निमाहरति । आप्तो वा ऽअस्य स वायुरुर्य्य ऽएषु लोकेष्वथ य ऽइमाँल्लोकान्न्परेण वायुस्तमस्मिन्न्नेतद्दधाति ॥ २ ॥ बहिर्वेदेरियं वै वेदिः । आप्तो वा ऽअस्य स वायुरुर्य्योऽस्यामथ य ऽइमां परेण वायुस्तमस्मिन्न्नेतद्दधाति ॥ ३ ॥ अञ्जलिना । न ह्येतस्येतीवाभिपत्तिरस्ति स्वाहाकारेण जुहोति ह्यधोऽधो धुरमसौ वा ऽआदित्य ऽएष रथोऽर्वाचीनं तदादित्याद्वायुं दधाति तस्म्मादेषोऽर्वाचीनमेवातः पवते ॥ ४ ॥ 'समुद्रोऽसि[3] नभस्वानि'ति । असौ वै लोकः समुद्रो नभस्वा'नार्द्रदानुरि'[4]त्येष ह्यार्द्रं ददाति तद्योऽमुष्मिँल्लोके वायुस्तमस्मिन्न्नेतद्दधाति 'शम्भूर्म्मयोभूरभि[5] मा वाहि स्वाहे'ति

(१) शु० य० सं० अ० १८ क० ४४ । (२) शु० य० सं० अ० १८ क० ४४ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ६ १; कठ० १८. ४; कपिष्ठ० २९. ३; मै० सं० ११. १२. २; तै० सं० ३. ४, ७ ।

† का० श्रौ० सू० १८. ६. १ ।

(३) शु० य० सं० अ० १८ क० ४५ । (४) शु० य० सं० अ० १८ क० ४५ । (५) शु० य० सं० अ० १८ क० ४५ ।

सोऽनुपसमुह्यानुपाधायोदपिपतिषत्स नाशक्नोत्स ऽउपसमुह्योपाधायोदपतत्तस्मादुप्प्येतर्हि व्वयाꣳसि यदैव पक्षा ऽउपसमूहन्ते यदा पत्राणि विसृजन्तेऽथोत्पतितुꣳ शक्नुवन्ति ॥ १ ॥ तँव्वा ऽअङ्गुलिभिर्म्मिमीते। पुरुषो वै यज्ञस्तेनेदꣳ सर्व्वम्मितन्तस्यैषावमा मात्रा यदङ्गुलयस्तद्यास्यावमा मात्रा तामस्य तदाप्नोति तयैनन्तन्मिमीते ॥ २ ॥ चतुर्व्विꣳशत्याङ्गुलिभिर्म्मिमीते। चतुर्व्विꣳशत्यक्षरा वै गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनन्तन्मिमीते ॥ ३ ॥ स चतुरङ्गुलमेवोभयतोऽन्तरत ऽउपसमूहति। चतुरङ्गुलमुभयतो बाह्यतो व्युदूहति तद्यावदेवोपसमूहति तावद्व्युदूहति तन्नाहैवातिरेचयति नो कनीयः करोति तथा पुच्छस्य तथोत्तरस्य पक्षस्य ॥ ४ ॥ अथ निर्ण्णामौ पक्षयोः करोति। निर्ण्णामौ हि व्वयसः पक्षयोर्भवतो वितृतीये वितृतीये हि व्वयसः पक्षयोर्न्निर्ण्णामौ भवतोऽन्तरे वितृतीयेऽन्तरे हि वितृतीये व्वयसः पक्षयोर्न्निर्ण्णामौ भवतः स चतुरङ्गुलमेव पुरस्तादुदूहति चतुरङ्गुलम्पश्चादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति नो कनीयः करोति ॥ ५ ॥ स तस्मिन्निर्ण्णामे। एकामिष्टकामुपदधाति तद्येयं व्वयसः पततो निर्ण्णामादेका नाड्युपशेते तान्तत्करोत्यथो ऽइदम् ॥ ६ ॥ अथ वक्रौ पक्षौ करोति। वक्रौ हि व्वयसः पक्षौ भवतः स चतुरङ्गुलमेव पश्चादुदूहति चतुरङ्गुलम्पुरस्तादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति

नो कनीयः करोति ॥ ७ ॥ अथ रूपमुत्तमङ्करोति । अत्रैष सर्वोऽग्निः सँस्कृतस्तस्मिन्देवा ऽएतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमन्दधाति स सहस्रमृज्वालिखिता ऽइष्टकाः करोति सहस्रमित्यालिखिताः सहस्रमित्यलिखिताः ॥ ८ ॥ अथ पञ्चमीञ्चितिमुपधाय । त्रेधाग्निं विमिमीते स मध्यमे वितृतीये सहस्रमृज्वालिखिता ऽइष्टका ऽउपदधाति तद्यानीमानि वयसः प्रत्यञ्चि शीर्ष्ण ऽआपुच्छादृजूनि लोमानि तानि तत्करोति ॥९॥ अथ सहस्रमित्यालिखिता दक्षिणत ऽउपदधाति । तद्यानीमानि वयसो दक्षिणतो वक्राणि लोमानि तानि तत्करोति ॥ १० ॥ अथ सहस्रमित्यालिखिता ऽउत्तरत ऽउपदधाति । तद्यानीमानि वयस ऽउत्तरतो वक्राणि लोमानि तानि तत्करोति सहस्रेण सर्वं वै सहस्रꣳ सर्वेणैवास्मिन्नेतद्रूपमुत्तमन्दधाति त्रिभिः सहस्रैस्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रूपमुत्तमन्दधाति ॥ ११ ॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



चित्याग्नेः सप्तपुरुषप्रमाणत्वम्, पक्षपुच्छयोश्चारत्नि-वितस्तिप्रमाणत्वम् ]

यान्वै तान्त्सप्त पुरुषान् । एकम्पुरुषमकुर्वन्त्स प्रजापतिरभवत्स प्रजा ऽअसृजत स प्रजाः सृष्ट्वोर्द्ध्व ऽउदक्रामत्स ऽएतँल्लोकमगच्छद्यत्रैष ऽएतत्तपति नो ह तर्ह्यन्य ऽएतस्मादत्र यज्ञिय ऽआस तन्देवा यज्ञेनैव

(A) एतद्ब्राह्मणस्थाविषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. १ ।

यष्टुमक्रियन्त ॥ १ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । 'यज्ञेन[1] यज्ञमयजन्त देवा, ऽइति यज्ञेन हि तँऽयज्ञमयजन्त 'देवास्तानि[2] धर्म्माणि प्प्रथमान्न्यासन्नि'ति ते हि धर्म्माः प्प्रथमेऽक्रियन्त 'ते[3] ह नाकम्महिमानः सचन्ते'ति स्वर्ग्गो वै लोको नाको देवा महिमानस्ते देवाः स्वर्ग्गँल्लोकꣳ सचन्त ये तँऽयज्ञमयजन्नित्त्येतत् ॥ २ ॥ 'यत्र[4] पूर्व्वे साद्ध्याः सन्ति देवा' ऽइति । प्प्राणा वै साद्ध्या देवास्त ऽएतमग्ग्र ऽएवमसाधयन्नेतदेव बुभूषन्तस्त ऽउ ऽएवाप्प्येतर्हि साधयन्ति यश्चेदमन्न्यद्भवद्यजत्रममर्त्त्यस्य भुवनस्य भूनेति यश्चाहैवेदमन्न्यद्यज्ञियमास यत्किञ्चामृतम् ॥ ३ ॥ ॥ ३ ॥ सुपर्ण्णो ऽअङ्ग सवितुर्ग्गरुत्त्मान् । पूर्व्वो जातः स ऽउ ऽअस्यानु धर्म्मेति प्प्रजापतिर्व्वै सुपर्ण्णो गरुत्त्मानेष सवितैतस्य प्प्रजापतिरनु धर्म्ममित्त्येतत् ॥ ४ ॥ स वै सप्तपुरुषो भवति । सप्तपुरुषो ह्ययम्पुरुषो यच्चत्त्वार ऽआत्त्मा त्र्यः पक्षपुच्छानि चत्त्वारो हि तस्य पुरुषस्यात्त्मा त्र्यः पक्षपुच्छानि ॥ ५ ॥ तँवा ऽउद्ब्बाहुना पुरुषेण मिमीते । पुरुषो वै यज्ञस्तेनेदꣳ सर्व्वम्मितन्तस्यैषा परमा मात्रा यदुद्बाहुस्तद्यास्य परमा मात्रा तामस्य तदाप्प्नोति तयैनन्तन्मिमीते तत्रोप यत्प्रपदेनाऽभ्युच्छ्रितो भवति तत्परिश्रिद्भिराप्प्नोति तस्मादु बाह्वेनैव लेखाम्परिश्रिद्भ्यः खनेत् ॥ ६ ॥ अथ पक्षयोररत्नी ऽउपादधाति ।

(१) शु० य० सं० अ० ३१ क० १६। (२) शु० य० सं० अ० ३१ क० १६। (३) शु० य० सं० अ० ३१ क० १६। (४) शु० य० सं० अ० ३१ क० १६।

पक्षयोस्तद्द्वीर्य्यन्दधाति बाहू वै पक्षौ बाहुभ्यामु वा ऽअन्न-मद्यतेऽन्नायैव तमवकाशङ्करोति तद्यत्पक्षयोररत्नी ऽउपा-दधात्यरत्निमात्राद्ध्यन्नमद्यते ॥ ७ ॥ अथ पुच्छे वितस्ति-मुपादधाति । प्प्रतिष्ठायान्तद्वीर्य्यन्दधाति प्प्रतिष्ठा वै पुच्छꣳ हस्तो वितस्तिर्हस्तेन वा ऽअन्नमद्यतेऽन्नायैव तमवकाशङ्करोति तद्यत्पुच्छे वितस्तिमुपादधात्यन्न ऽएवैन-न्तत्प्रतिष्ठापयति तद्यत्तत्र कनीय ऽउपादधात्यन्ने ह्येवैन-न्तत्प्रतिष्ठापयत्यथो ऽएतावद्द्वा ऽइदम्मितम्भवत्येतावदिद-न्तद्यदेवम्मिमीत ऽएतस्यैवाप्प्त्यै ॥ ८ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ प्राकृतस्य सप्तविधाग्नेर्वैकृतस्यैकशतविधाग्नेश्च वेदिमानम् ]

या वा ऽइयँव्वेदिः सप्प्तविधस्य । एषा व्वेदेम्मात्रा स देवयजनमद्ध्यवसाय पूर्व्वया द्वारा पत्नीशालम्प्रपद्य गार्हपत्यायोद्धत्यावोक्षति गार्हपत्यस्योद्धतात्सप्प्त प्प्राचः प्प्रक्रमान्प्रक्रामति ततः प्प्राञ्चं व्व्यामं व्विमिमीते तस्य मद्ध्य ऽआहवनीयायोद्धत्यावोक्षति पूर्व्वार्द्धाद्व्व्यामस्य त्रीन्प्राचः प्प्रक्रमान्प्रक्रामति स व्वेद्यन्तः ॥ १ ॥ * ते वा ऽएते । व्व्यामैकादशाः प्प्रक्रमा ऽअन्तरा व्वेद्यन्तञ्च गार्हपत्यञ्चैकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रे-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २, २; ऋ० सं० २. ३. २३ ॥

* अत्रशतम् ५२०० ।

णैवैतद्वीर्य्येण यजमानः पुरस्ताद्यज्ञमुखाद्रक्षाᳬसि नाष्ट्रा ऽअपहन्ति ॥ २ ॥ सैषा वेदेर्य्योनिः । एतस्यै वै योनेर्देवा वेदिम्प्राजनयन्नथ य ऽएष व्यामः सा गार्हपत्यस्य योनिरेतस्यै वै योनेर्देवा गार्हपत्यम्प्राजनयन्गार्हपत्यादा-हवनीयम् ॥ ३ ॥ स वेद्यन्तात् । षट्त्रिᳬशत्प्रक्रमाम्प्राचीं वेदिं विमिमीते त्रिᳬशतम्पश्चात्तिरश्चीं चतुर्विᳬशति-म्पुरस्तात्तन्नवतिः सैषा नवतिप्रक्रमा वेदिस्तस्याᳬ सप्त-विधमग्निं विदधाति ॥ ४ ॥ तदाहुः । कथमेष सप्तविध ऽएतया वेद्या सम्पद्यत ऽइति दश वा ऽइमे पुरुषे प्राणा-श्चत्वार्य्यङ्गान्यात्मा पञ्चदश ऽएवन्द्वितीय ऽएवन्तृतीये षट्सु पुरुषेषु नवतिरथैकः पुरुषोऽत्येति पाङ्क्तो वै पुरुषो लोम त्वङ्माᳬसमस्थि मज्जा पाङ्क्तो ऽइयं वेदिश्चतस्रो दिश ऽआत्मा पञ्चम्येवमेष सप्तविध ऽएतया वेद्या सम्प-द्यते ॥ ५ ॥ तद्धैके । उत्तरा विधा विधास्यन्त ऽएताँश्च प्रक्रमानेतञ्च व्याममनुवर्द्धयन्ति योनिमनुवर्द्धयाम ऽइति न तथा कुर्य्यान्न वै जातङ्गर्भं य्योनिरनुवर्द्धते यावद्वाव योनावन्तर्गर्भो भवति तावदेव योनिर्विर्द्धत ऽएतावत्यु वा ऽअत्र गर्भस्य वृद्धिः ॥ ६ ॥ ते ये ह तथा कुर्वन्ति । एतᳬ ह ते पितरम्प्रजापतिᳬ सम्पदश्च्यावयन्ति त ऽइष्ट्वा पापीयाᳬसो भवन्ति पितरᳬ हि प्रजा-पतिᳬ सम्पदश्च्यावयन्ति सा यावत्येषा सप्तविधस्य वेदिस्तावतीं चतुर्दश कृत्व ऽएकशतविधस्य वेदिं विमि-मीते ॥ ७ ॥ अथ षट्त्रिᳬशत्प्रक्रमाᳬ रज्जुम्मिमीते ।

ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्प्राच ऽउपदधाति निःसृजति चतुरः ॥ ८ ॥ अथ त्रिᳬंशत्प्रक्रमाम्मिमीते । ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्पश्चादुपदधाति निःसृजति चतुरः ॥ ९ ॥ अथ चतुर्विᳬंशतिप्रक्रमाम्मिमीते । ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्पुरस्तादुपदधाति निः सृजति चतुर ऽइति नु वेदिविमानम् ॥ १० ॥ अथाग्नेर्विधाः । अष्टाविᳬंशतिः प्राञ्चः पुरुषा ऽअष्टाविᳬंशतिस्तिर्य्यञ्चः स ऽआत्मा चतुर्द्दश पुरुषा दक्षिणः पक्षश्चतुर्द्दशोत्तरश्चतुर्द्दश पुच्छश्चतुर्द्दशारत्नीन्दक्षिणे पक्ष ऽउपदधाति चतुर्द्दशोत्तरे चतुर्द्दश वितस्तीः पुच्छ ऽइति न्वष्टानवतेः पुरुषाणाम्मात्रा साधिमानानाम् ॥ ११ ॥ अथ त्रिपुरुषाᳬं रज्जुम्मिमीते । ताᳬं सप्तधा समस्यति तस्यै चतुरो भागानात्मन्नुपदधाति त्रीन्पक्षपुच्छेषु ॥ १२ ॥ अथारत्निमात्रीम्मिमीते । ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्दक्षिणे पक्ष ऽउपदधाति त्रीनेवोत्तरे निःसृजति चतुरः ॥ १३ ॥ अथ वितस्तिमात्रीम्मिमीते । ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्पुच्छ ऽउपदधाति निःसृजति चतुर ऽएवमेष ऽएकशतविध ऽएतया वेद्या सम्पद्यते ॥ १४ ॥ तदाहुः । यत्त्रयोदश पुरुषा ऽअतियन्ति कथमेते सम्पदो न च्यवन्त ऽइति या वा ऽएतस्य सप्तमस्य पुरुषस्य सम्पत्सैवैतेषाᳬं सर्वेषाᳬं सम्पत् ॥ १५ ॥ अथो ऽआहुः । प्रजापतिरेवात्मानं विधाय तस्य यत्र-यत्र न्यूनमासीत्तदेतैः समा-

पूरयत तेनो ऽएवापि सम्पन्न ऽइति॥ १६ ॥ तद्धैके । एकविधम्प्रथमं विदधत्यथैकोत्तरमापरिमितविधान्न तथा कुर्य्यात् ॥ १७ ॥ सप्तविधो वा ऽअग्ग्रे प्प्रजापतिरसृज्यत । स ऽआत्मानं विदधान ऽऐत्स ऽएकशतविधेऽतिष्ठत स योऽर्वाचीनꣳ सप्तविधाद्विधत्त ऽएतꣳ ह स पितरम्प्रजापतिं विच्छिनत्ति स ऽइष्ट्वा पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्वाथ य ऽएकशतविधमतिविधत्तेऽस्मात्स सर्वस्माद्बहिर्द्धा निष्पद्यते सर्वमु हीदम्प्रजापतिस्तस्मादु सप्तविधमेव प्प्रथमं विदधीताथैकोत्तरमैकशतविधादेकशतविधन्तु नातिविदधीत नाहैतम्पितरम्प्रजापतिं विच्छिनत्ति नो ऽअस्मात्सर्वस्माद्बहिर्द्धा निष्पद्यते ॥ १८ ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ एकशतविधस्याग्नेरादित्यात्मना स्तुतिः, तस्य प्राकृताग्निसङ्ख्यया सम्पत्तिप्रकारादिश्च ]

सँवत्सरो वै प्प्रजापतिः । अग्निरु सर्वे कामाः सोऽयꣳ सँवत्सरः प्प्रजापतिरकामयताग्निꣳ सर्वान्कामानात्मानमभिसञ्चिन्वीयेति स ऽएकशतधात्मानं व्यधत्त स ऽएकशतधात्मानं विधायाग्निꣳ सर्वान्कामानात्मानमभिसमचिनुत स सर्वे कामा ऽअभवत्तस्मान्न कश्चन बहिर्द्धा कामोऽभवत्तस्मादाहुः सँवत्सरः सर्वे कामा ऽइति न ह सँवत्सरात्कश्चन बहिर्द्धा कामोऽस्ति ॥ १ ॥

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा – का० श० १२. २. ३ ।

तथैवैतद्यजमानः । एकशतधात्मानं विधायाग्निꣳ सर्वा-न्कामानात्मानमभिसञ्चिनुते स सर्वे कामा भवति तस्मान्न कश्चन बहिर्द्धा कामो भवति ॥ २ ॥ स यः स सँवत्सरोऽसौ स ऽआदित्यः । स ऽएष ऽएकशत-विधस्तस्य रश्मयः शतं विधा ऽएष ऽएवैकशततमो य ऽएष तपत्यस्मिन्त्सर्वस्मिन्प्रतिष्ठितस्तथैवैतद्यजमान ऽएकशतधात्मानं विधायास्मिन्त्सर्वस्मिन्प्रतितिष्ठति ॥ ३ ॥ अथ वा ऽएकशतविधः । सप्तविधमभिसम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्तसु देवलोकेषु प्रतिष्ठितः सप्त वै देवलोकाश्चतस्रो दिशस्त्रय ऽइमे लोका ऽएते वै सप्त देवलोकास्तेष्वेष प्रतिष्ठितस्तथैवैतद्य-जमान ऽएकशतधात्मानं विधाय सप्तसु देवलोकेषु प्रतितिष्ठति ॥ ४ ॥ यद्वेवैकशतविधः । सप्तविधमभि-सम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्तस्वृ-तुषु सप्तसु स्तोमेषु सप्तसु पृष्ठेषु सप्तसु छन्दःसु सप्तसु प्राणेषु सप्तसु दिक्षु प्रतिष्ठितस्तथैवैतद्य-जमान ऽएकशतधात्मानं विधायैतस्मिन्त्सर्वस्मिन्प्रतिति-ष्ठति ॥ ५ ॥ यद्वेवैकशतविधः । सप्तविधमभिसम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्ताक्षरे ब्रह्म-न्प्रतिष्ठितः सप्ताक्षरं वै ब्रह्मर्गित्येकमक्षरं यजुरिति द्वे सामेति द्वे ऽअथ यदतोऽन्यद्ब्रह्मैव तद्व्यक्षरं वै ब्रह्म तदेतत्सर्वꣳ सप्ताक्षरम्ब्रह्म तस्मिन्नेष प्रतिष्ठित-स्तथैवैतद्यजमान ऽएकशतधात्मानं विधाय सप्ताक्षरे

ब्ब्रह्मन्न्प्रतितिष्ट्ठति ॥ ६ ॥ तस्म्मादु सप्प्तभिः सप्प्तभिः
परिश्श्रयन्ति । तस्म्मादेकशतविधः सप्प्तविधमभिसम्प-
द्यतेऽथ वै सप्प्तविध ऽएकशतविधमभिसम्पद्यते ॥ ७ ॥
सप्प्तविधो वा ऽअग्ग्रे प्प्रजापतिरसृज्ज्यत । स ऽएतमेक-
शतधात्मानं विहितमपश्श्यत्प्राणभृत्सु पञ्चाशदिष्टकाः पञ्चा-
शद्यजूꣳषि तच्छतꣳ सादनञ्च सूददोहाश्चैकशततमे
तत्समानꣳ सादयित्वा हि सूददोहसाधिवदति स ऽएते-
नैकशतविधेनात्मनेमाञ्जितिमजयदिमां व्व्यष्टिं व्व्याश्नुत
तथैवैतद्यजमान ऽएतेनैकशतविधेनात्मनेमाञ्जितिञ्जयतीमां
व्व्यष्टिं व्व्यश्नुत ऽएवमु सप्तविध ऽएकशतविधमभि-
सम्पद्यते स य ऽएवैकशतविधः स सप्प्तविधो यः सप्प्त-
विधः स ऽएकशतविध ऽइति नु विधानाम् ॥ ८ ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥१॥
कण्डिकासंख्या ॥ ९४ ॥

[ चित्याग्नेः कालविध्यादि ]

अथातश्चयनस्यैव । अन्तरोपसदौ चिनोत्येतद्वै देवा
ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्यु-
रिति.त ऽएताः पुरोऽपश्श्यन्नुपसद ऽइमानेव लोकानिमे
वै लोकाः पुरस्ताः प्रापद्यन्त ताः प्प्रपद्याभयेऽनाष्ट्रऽए-
तमात्मानꣳ समस्कुर्वत तथैवैतद्यजमान ऽएताः पुरः प्रपद्या-

( D ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. ४ ।

भयेऽनाष्ट्र ऽएतमात्मानꣳ संस्कुरुते ॥ १ ॥ यद्वेवान्तरो-
पसदौ चिनोति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइम-
मिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति त ऽएतान्वज्रान-
पश्यन्नुपसदो वज्रा वा ऽउपसदस्तान्प्रापद्यन्त तान्प्रप-
द्याभयेऽनाष्ट्र ऽएतमात्मानꣳ समस्कुर्वत तथैवैतद्यजमान
ऽएतान्वज्रान्प्रपद्याभयेऽनाष्ट्रऽएतमात्मानꣳ संस्कुरुते
॥ २ ॥ एतदु ह यज्ञे तपः । यदुपसदस्तपो वा ऽउप-
सदस्तद्यत्तपसि चीयते तस्मात्तापश्चितस्तद्वै यावद्देवो-
पसद्भिश्चरन्ति तावत्प्रवर्ग्येण सँवत्सरमेवोपसद्भिश्चरन्ति
सँवत्सरम्प्रवर्ग्येण ॥ ३ ॥ अहोरात्राणि वा ऽउपसदः ।
आदित्त्यः प्प्रवर्ग्योऽमुन्तदादित्त्यमहोरात्रेषु प्प्रतिष्ठाप-
यति तस्मादेषोऽहोरात्रेषु प्प्रतिष्ठितः ॥ ४ ॥ अथ यदि
चतुर्विꣳशतिः । चतुर्विꣳशतिर्वा ऽअर्द्धमासा ऽअर्द्धमासा
ऽउपसद ऽआदित्त्यः प्प्रवर्ग्योऽमुन्तदादित्त्यमर्द्धमासेषु
प्प्रतिष्ठापयति तस्मादेषोऽर्द्धमासेषु प्प्रतिष्ठितः ॥ ५ ॥
अथ यदि द्वादश । द्वादश वै मासा मासा ऽउपसद
ऽआदित्त्यः प्प्रवर्ग्योऽमुन्तदादित्त्यम्मासेषु प्प्रतिष्ठापयति
तस्मादेष मासेषु प्प्रतिष्ठितः ॥ ६ ॥ अथ यदि षट् ।
षड्वा ऽऋतव ऽऋतव ऽउपसद ऽआदित्त्यः प्प्रवर्ग्यो-
ऽमुन्तदादित्त्यमृतुषु प्प्रतिष्ठापयति तस्मादेष ऽऋतुषु
प्प्रतिष्ठितः ॥ ७ ॥ अथ यदि तिस्रः । त्रयो वा ऽइमे
लोका ऽइमे लोका ऽउपसद ऽआदित्त्यः प्प्रवर्ग्योऽमुन्तदा-
दित्त्यमेषु लोकेषु प्प्रतिष्ठापयति तस्मादेष ऽएषु लोकेषु

प्प्रतिष्ठितः ॥ ८ ॥ अथातश्चितिपुरीषाणामेव मीमांसा । मासम्प्रथमा चितिम्मासम्पुरीषमेतावान्न्वासन्तिक ऽऋतौ कामस्तद्यावान्न्वासन्तिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ ९ ॥ मासन्द्वितीया । मासम्पुरीषमेतावान्ग्रैष्म्म ऽऋतौ कामस्तद्यावान्ग्रैष्म्म ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १० ॥ मासन्तृतीया । मासम्पुरीषमेतावान्न्वार्षिक ऽऋतौ कामस्तद्यावान्न्वार्षिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ ११ ॥ मासञ्चतुर्थी । मासम्पुरीषमेतावाञ्छारद ऽऋतौ कामस्तद्यावाञ्छारद ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥१२॥ अथ पञ्चम्म्यै चितेः । असपत्ना विराजश्च प्प्रथमाहमुपदधाति स्तोमभागा ऽएकैकामन्न्वहन्ताः सकृत्सादयति सकृत्सूददोहसाधिवदति तूष्णीम्मासं स्तोमभागापुरीषमभिहरन्त्येतावान्हैमन्तिक ऽऋतौ कामस्तद्यावान्हैमन्तिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १३ ॥ मासः षष्ठी । मासम्पुरीषमेतावाञ्छैशिर ऽऋतौ कामस्तद्यावाञ्छैशिर ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुत ऽएतावान्वै द्वादशसु मासेषु कामः षट्स्वृतुषु तद्यावान्द्वादशसु मासेषु कामः षट्स्वृतुषु तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १४ ॥ अथ त्रीण्यहान्न्युपातियन्ति । यदहः शतरुद्रियञ्जुहोति यदहरुपवसथो यदहः प्प्रसुतस्तद्यत्तेष्ष्वहःसूपसदा चरन्ति तानि तस्य मासस्याहोरात्राण्यथ यत्प्रवर्ग्ग्येण तदु तस्मिन्नृतावादित्यम्प्रतिष्ठापयत्येतावान्वै

त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तद्यावाँस्त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तन्तत्सर्व्वमात्मानमभिसञ्चिनुते ॥ १५ ॥ स सँवत्सरम्प्रसुतः स्यात् । सर्वं वै सँवत्सरः सर्वमेकशतविधः सर्वेणैव तत्सर्वमाप्नोति यदि सँवत्सरन्न शक्नुयाद्विश्वजिता सर्वपृष्ठेनातिरात्रेण यजेत तस्मिन्त्सर्ववेदसन्दद्यात्सर्वं वै विश्वजित्सर्वपृष्ठोऽतिरात्रः सर्वꣳ सर्ववेदसꣳ सर्वमेकशतविधः सर्वेणैव तत्सर्वमाप्नोति ॥ १६ ॥ (E)

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रजापतेः प्रकारान्तरेणैकशतसंख्याकत्वादिविधानम् ]

सँवत्सरो वै प्रजापतिरेकशतविधः । तस्याहोरात्राण्यर्द्धमासा मासा ऽऋतवः षष्टिर्म्मासस्याहोरात्राणि मासि वै सँवत्सरस्याहोरात्राण्याप्यन्ते चतुर्विꣳशतिरर्द्धमासास्त्रयोदश मासास्त्रय ऽऋतवस्ताः शतं विधाः सँवत्सर ऽएवैकशततमी विधा ॥ १ ॥ स ऽऋतुभिरेव सप्तविधः । षडृतवः सँवत्सर ऽएव सप्तमी विधा तस्यैतस्य सँवत्सरस्यैतत्तेजो य ऽएष तपति तस्य रश्मयः शतं विधा मण्डलमेवैकशततमी विधा ॥ २ ॥ स दिग्भिरेव सप्तविधः । ये प्राच्यान्दिशि रश्मयः सैका विधा ये दक्षिणायाꣳ सैका ये प्रतीच्याꣳ सैका य ऽउदीच्याꣳ सैका य ऽऊर्द्ध्वायाꣳ

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. ४

सैका येऽवाच्चयात्सैका मण्डलमेव सप्तमी विधा ॥ ३ ॥ तस्यैतस्य परस्तात्कामप्रो लोकः । अमृतं वै काममप्रममृतमेवास्य तत्परस्तात्तद्यत्तदमृतमेतत्तद्यदेतदर्चिर्दीप्यते ॥ ४ ॥ तदेतद्वसुचित्रꣳ राधः । तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजत्यप्योषधिभ्योऽपि वनस्पतिभ्यो भूय ऽइव ह त्वेकाभ्यः प्रयच्छति कनीय ऽइवैकाभ्यस्तद्याभ्यो भूयः प्रयच्छति ता ज्योक्तमाञ्जीवन्ति याभ्यः कनीयः कनीयस्ताः ॥ ५ ॥ तदेतदृचाभ्युक्तम् । 'विभक्तारꣳ हवामहे वसोश्चित्रस्य राधसः । सवितारन्नृचक्षसमि'ति तदेतत्सर्वमायुर्दीर्घमनन्तꣳ हि तद्यदिदमाहुर्दीर्घन्त ऽआयुरस्तु सर्वमायुरिहीत्येष ते लोक ऽएतत्तेऽस्त्विति हैवैतत् ॥ ६ ॥ पश्यन्ती वाग्वदति । तदेतदेकशतविधेन वैवाप्तव्यꣳ शतायुतया वा य ऽएवैकशतविधं विधत्ते यो वा शतं वर्षाणि जीवति स हैवैतदमृतमाप्नोति तस्माद्ये चैतद्विदुर्ये च न लोक्या शतायुतेत्येवाहुस्तस्मादु ह न पुरायुषः स्वकामी प्रेयादलोक्यꣳ हैत ऽउ वाव लोका यदहोरात्राण्यर्द्धमासा मासा ऽऋतवः संवत्सरः ॥ ७ ॥ तद्येऽर्वाग्विꣳशेषु वर्षेषु प्रयन्ति । अहोरात्रेषु ते लोकेषु सज्यन्तेऽथ ये परोविꣳशेष्ववर्वाक्चत्वारिꣳशेष्वर्द्धमासेषु तेऽथ ये परश्चत्वारिꣳशेष्ववर्वाक्षष्टेषु मासेषु तेऽथ ये परः षष्टेष्ववर्वागशीतेष्वृतुषु तेऽथ ये परोऽशीतेष्ववर्वाक्शतेषु सँवत्सरे तेऽथ य ऽएव शतं वर्षाणि यो वा

(१) शु० य० सं० अ० ३० क० ४ ।

भूयाꣳसि जीवति स हैवैतदमृतमाप्नोति ॥ ८ ॥ बहुभिर्ह वै यज्ञैः । एकमहरेका रात्रिर्म्मिता स य ऽएवैकशतविधं विधत्ते यो वा शतं वर्षाणि जीवति स हैवैनदद्धातमामाप्नोत्येष वा ऽएकशतविधं विधत्ते य ऽएनꣳ सँवत्सरं बिभर्त्ति तस्मादेनꣳ सँवत्सरभृतमेव चिन्वीतेत्यधिदेवतम् ॥ ९ ॥ अथाधियज्ञम् । यानमूनेकशतमुद्द्धाहून्पुरुषान्मिमीते स विधैकशतविधः स चितिभिरेव सप्तविधः षट्तव्व्यवत्यश्चितयोऽग्निरेव सप्तमी विधा ॥ १० ॥ स ऽउ वा ऽइष्टकैकशतविधः । याः पञ्चाशत्प्रथमा ऽइष्टका याश्चोत्तमास्ताः शतं विधा ऽअथ या ऽएतदन्तरेणेष्टका ऽउपधीयन्ते सैवैकशततमी विधा ॥ ११ ॥ स ऽउ ऽएव यजुस्तेजाः । यजुरेकशतविधो यानि पञ्चाशत्प्रथमानि यजूꣳषि यानि चोत्तमानि ताः शतं विधा ऽअथ यान्येतदन्तरेण यजूꣳषि क्रियन्ते सैवैकशततमी विधैवमु सप्तविध ऽएकशतविधो भवति स यः शतायुतायाङ्कामो य ऽएकशतविधे सप्तविधेन हैव तमेवंविदाप्नोति ॥ १२ ॥ एवं वाव सर्वे यज्ञाः । एकशतविधा ऽअग्निहोत्रादग्निभर्ऋयजुर्भिः पदैरक्षरैः कर्म्मभिः सामभिः स यः शतायुतायाङ्कामो य ऽएकशतविधे यः सप्तविधे यज्ञेन-यज्ञेन हैव तमेवंविदाप्नोतीत्यु ऽएवाधियज्ञम् ॥ १३ ॥ अथाध्यात्मम् । पञ्चेमाश्चतुर्विधा ऽअङ्गुलयो द्वे कल्कुषी दोरꣳसफलकश्चाक्षश्च तत्पञ्चविꣳशतिरेवमिमानीतराण्यङ्गानि ताः शतं विधा ऽआत्मैवैकशततमी

विधोक्तः सप्तविधतायै ॥ १४ ॥ स ऽउ ऽएव प्राणतेजाः । प्राणैकशतविधोऽन्वङ्गमङ्गेऽङ्गे हि प्राणः स यः शतायुतायाङ्कामो य ऽएकशतविधे यः सप्तविधे यः सर्वेषु यज्ञेषु विद्यया हैव तमेवंविदाप्नोति सर्वैर्हि यज्ञैरात्मानः सम्पन्नं विदे ॥१५॥ त्रीणि वा ऽइमानि पञ्चविधानि । सँवत्सरोऽग्निः पुरुषस्तेषाम्पञ्चविधा ऽअन्नम्पानꣳ श्रीर्ज्योतिरमृतं यदेव सँवत्सरेऽन्नन्तदन्नं या ऽआपस्तत्पानः रात्रिरेव श्रीः श्रियाꣳ हैतद्रात्र्याꣳ सर्वाणि भूतानि सँवसन्त्यहर्ज्योतिरादित्योऽमृतमित्यधिदेवतम् ॥ १६ ॥ अथाधियज्ञम् । यदेवाग्नावन्नमुपधीयते तदन्नं या ऽआपस्तत्पानम्परिश्रित ऽएव श्रीस्तद्धि रात्रीणाꣳ रूपं यजुष्मत्यो ज्योतिस्तद्ध्यह्नाꣳ रूपमग्निरमृतन्तद्ध्यादित्यस्य रूपमित्यु ऽएवाधियज्ञम् ॥ १७ ॥ अथाध्यात्मम् । यदेव पुरुषेऽन्नन्तदन्नं या ऽआपस्तत्पानमस्थीन्येव श्रीस्तद्धि परिश्रिताꣳ रूपम्मज्जानो ज्योतिस्तद्धि यजुष्मतीनाꣳ रूपम्प्राणोऽमृतन्तद्ध्यग्ने रूपम्प्राणोऽग्निः प्राणोऽमृतमित्यु वा ऽआहुः ॥ १८ ॥ अन्नाद्वा ऽअशनाया निवर्त्तते । पानात्पिपासा श्रियै पाप्मा ज्योतिषस्तमोऽमृतान्मृत्युर्न्नि ह वा ऽअस्मादेतानि सर्वाणि वर्त्तन्तेऽप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवं वेद तदेतदमृतमित्येवामुत्रोपासीतायुरितीह प्राण ऽइति हैक ऽउपासते प्राणोऽग्निः प्राणोऽमृतमिति वदन्तो न तथा विद्यादध्रुवं वै तद्यत्प्राण'स्तन्ते विष्याम्यायुषो न मद्ध्यादि'[1]ति-

(१) शु० य० सं० अ० १२ क० ६५

ह्यपि यजुषाऽभ्युक्तन्तस्मादेनदमृतमित्येवामुत्रोपासीतायुरितीह तथो ह स सर्वमायुरेति ॥ १९ ॥ (F)

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ गायत्र्यादि-सप्तच्छन्दसां वीर्यरूपत्वेन स्तुतिः ]

प्राणो गायत्री । चक्षुरुष्णिग्वागनुष्टुम्मनो बृहतीश्श्रोत्रम्पङ्क्तिर्य एवायम्प्रजननं प्राण एष त्रिष्टुबथ योऽयमवाङ् प्राण एष जगती तानि वा एतानि सप्त च्छन्दांसि चतुरुत्तराण्ययग्नौ क्रियन्ते ॥ १ ॥ प्राणो गायत्रीति । तद्य एव प्राणस्य महिमा यद्वीर्यन्तदेतत्सहस्रम्प्राणस्यैवैतद्वीर्यं यद्यस्य चिन्वतं प्राण उत्क्रामेत्तत एवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष गायत्रीं सञ्चितो भवति ॥ २ ॥ चक्षुरुष्णिगिति । तद्य एव चक्षुषो महिमा यद्वीर्यन्तदेतत्सहस्रञ्चक्षुष एवैतद्वीर्यं यद्यस्य चिन्वतश्चक्षुरुत्क्रामेत्तत एवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष उष्णिहं सञ्चितो भवति ॥ ३ ॥ वागनुष्टुबिति । तद्य एव वाचो महिमा यद्वीर्यन्तदेतत्सहस्रं वाच एवैतद्वीर्यं यद्यस्य चिन्वतो वागुत्क्रामेत्तत एवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेषोऽनुष्टुभं सञ्चितो

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. ५ ।

भवति ॥४॥ मनो बृहतीति । तद्य ऽएव मनसो महिमा यद्वृद्वीर्ऽर्षन्तदेतत्सहस्रम्मनस ऽएवैतद्वृद्वीर्ऽर्षँऽयद्धयस्य चिन्न्वतो मन ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष बृहतीः सञ्चितो भवति ॥५॥ श्रोत्रम्पङ्क्तिरिति । तद्य ऽएव श्श्रोत्रस्य महिमा यद्वृद्वीर्ऽर्षन्तदेतत्सहस्रꣳ श्रोत्रस्यैवैतद्वृद्वीर्ऽर्षं ऽयद्धयस्य चिश्वतः श्रोत्रमुत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष पङ्क्तीः सञ्चितो भवति ॥ ६ ॥ यऽएवायम्प्रजननः प्प्राणः । एष त्रिष्टुबिति तद्य ऽएवैतस्य प्प्राणस्य महिमा यद्वृद्वीर्ऽर्षन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य व्वीर्ऽर्षं ऽयद्धयस्य चिश्वत ऽएष प्प्राण ऽआलुब्भ्येत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः सञ्चितो भवति ॥ ७ ॥ अथ योऽयमवाङ् प्प्राणः । एष जगतीति तद्य ऽएवैतस्य प्प्राणस्य महिमा यद्वृद्वीर्ऽर्षन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य व्वीर्ऽर्षं ऽयद्धयस्य चिश्वत ऽएष प्प्राण ऽआलुब्भ्येत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष जगतीः सञ्चितो भवति ॥ ८ ॥ तानि वा ऽएतानि । सप्त च्छन्दाꣳसि चतुरुत्तराण्यन्न्योऽन्न्यस्मिन्न्प्रतिष्ठितानि सप्तेमे पुरुषे प्प्राणा ऽअन्न्योऽन्न्यस्मिन्न्प्रतिष्ठितास्तद्यावन्तमेवँविच्छन्दसाङ्गणमन्न्वाह च्छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो व्वोपहितो वा ॥ ९ ॥ (E)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. १

[ वेदवादिप्रश्नोत्तराभ्यां शिरोग्रीवादीनां छन्दोमयत्वनिरूपणम् ]

तदाहुः । किञ्छन्दः का देवताग्नेः शिर ऽइति गायत्री च्छन्दोऽग्निर्देवता शिरः ॥ १ ॥ किञ्छन्दः । का देवता ग्रीवा ऽइत्युष्णिक्छन्दः सविता देवता ग्रीवाः ॥ २ ॥ किञ्छन्दः । का देवतानूकमिति बृहती च्छन्दो बृहस्पतिर्देवतानूकम् * ॥ ३ ॥ किञ्छन्दः । का देवता पक्षाविति बृहद्रथन्तरे च्छन्दो द्यावापृथिवी देवते पक्षौ ॥४॥ किञ्छन्दः का देवता मध्यमिति त्रिष्टुप्छन्द ऽइन्द्रो देवता मध्यम् ॥ ५ ॥ किञ्छन्दः । का देवता श्रोणी ऽइति जगती च्छन्द ऽआदित्यो देवता श्रोणी ॥ ६ ॥ किञ्छन्दः । का देवता यस्मादिदम्प्राणाद्रेतः सिच्यत ऽइत्यतिच्छन्दाश्छन्दः प्रजापतिर्देवता ॥ ७ ॥ किञ्छन्दः । का देवता योऽयमवाङ् प्राण ऽइति यज्ञायज्ञियञ्छन्दो वैश्वानरो देवता ॥ ८ ॥ किञ्छन्दः । का देवतोरू ऽइत्यनुष्टुप्छन्दो विश्वे देवा देवतोरू ॥ ९ ॥ किञ्छन्दः । का देवताष्ठीवन्ताविति पङ्क्तिश्छन्दो मरुतो देवताष्ठीवन्तौ (A) ॥ १० ॥ किञ्छन्दः । का देवता प्रतिष्ठे ऽइति द्विपदा च्छन्दो विष्णुर्देवता प्रतिष्ठे ॥ ११ ॥ किञ्छन्दः । का देवता प्राणा ऽइति विच्छन्दाश्छन्दो वायुर्देवता प्राणाः ॥ १२ ॥ किञ्छन्दः । का देवतोनातिरिक्तानीति न्यूनाक्षरा च्छन्द ऽआपो देवतोनातिरिक्तानि सैषात्म-

* अनूकशब्दस्य पक्षयोर्मध्यदेहस्य सन्धिः । पुच्छमध्ययोश्च सन्धिरित्यर्थः ॥

( A ) ष्ठीवन्तौ जानुप्रदेशावित्यर्थः । सा० भा० ॥

विद्यैवैतन्मयो हैवैता देवता ऽएतमात्मानमभिसम्भवति न हात्रान्न्या लोक्यतायाऽआशीरस्ति ॥ १३ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ धीरमहाशालनाम्नोर्महर्ष्योः प्रश्नप्रतिवचनाभ्यामग्नेः सर्व-देवतासमष्टिरूपप्राणवाय्वात्मकत्वप्रतिपादनम् ]

धीरो ह शातपर्णेयः । महाशालञ्जाबालमुपोत्ससाद तᳬ होवाच किम्मा विद्वानुपोदसद ऽइत्यग्निं वेदेति * कमग्निं वेत्थेति वाचमिति यस्तमग्निं वेद किᳬ स भवतीति वाग्ग्मी भवतीति होवाच नैनं वाग्ग्जहातीति ॥ १ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति चक्षुरिति यस्तमग्निं वेद किᳬ स भवतीति चक्षुष्मान्भवतीति होवाच नैनञ्च-क्षुर्जहातीति ॥ २ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति मन ऽइति यस्तमग्निं वेद किᳬ स भवतीति मनस्वी भवतीति होवाच नैनम्मनो जहातीति ॥ ३ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति श्श्रोत्रमिति यस्तमग्निं वेद किᳬ स भवतीति श्श्रोत्रवान्भवतीति होवाच नैनᳬ श्श्रोत्रञ्जहातीति ॥४॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. २ ।

* सर्वत्र प्रश्नप्रतिवचनसमाप्तिद्योतका इतिशब्दाः ।

ऽइत्यग्निं वेदेति कमग्निं वेत्थेति य ऽएतत्सर्वमग्निस्तं वेदेति तस्मिन्ह्योक्तऽउपावरुरोहाधीहि भोस्तमग्निमिति ॥ ५ ॥ स होवाच । प्राणो वाव सोऽग्निर्यदा वै पुरुषः स्वपिति प्राणन्तर्हि वागप्येति प्राणञ्चक्षुः प्राणम्मनः प्राणꣳ श्रोत्रं यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्तऽइत्यध्यात्मम् ॥ ६ ॥ अथाधिदेवतम् । या वै सा वागग्निरेव स यत्तच्चक्षुरसौ स ऽआदित्यो यत्तन्मन ऽएष स चन्द्रमा यत्तच्छ्रोत्रन्दिश ऽएव तदुथ यः स प्राणोऽयमेव स वायुर्योऽयम्पवते ॥ ७ ॥ यदा वा ऽअग्निरनुगच्छति । वायुन्तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुꣳ ह्यनूद्वाति यदादित्योऽस्तमेति वायुन्तर्हि प्रविशति वायुश्चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्जायन्ते स यदेवं विदस्माल्लोकात्प्रैति वाचैवाग्निमप्येति चक्षुषादित्यम्मनसा चन्द्रꣳ श्रोत्रेण दिशः प्राणेन वायुꣳ स ऽएतन्मय ऽएव भूत्वैतासान्देवतानां यां यां कामयते सा भूत्वेलयति ॥ ८ ॥ (M)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अनेकैः प्रश्नप्रतिवचनैः पुरुषस्यार्करूपत्वेन स्तुतिः ]

श्वेतकेतुर्हारुणेयः । यक्ष्यमाण ऽआस तꣳ ह पितोवाच कानृत्विजोऽवृथा ऽइति स होवाचायन्न्वेव मे वैश्वा-

(१) "अग्निर्वाग्भूत्वा मुखं प्राविशद्" इति श्रुतेः । ऐ० उ० २ । ४ ।

(M) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ३, ३

वसळ्ळ्यो होतेति तꣳ ह पप्रच्छ ब्वेत्थ ब्राह्मण वैश्वाव- सळ्व्य ॥ १ ॥ चत्वारि महान्ती३ ऽइति । ब्वेद भो३ ऽइति होवाच ब्वेत्थ चत्वारि महताम्महान्ती३ ऽइति ब्वेद भो३ ऽइति होवाच ब्वेत्थ चत्वारि ब्रतानी३ ऽइति ब्वेद भो३ ऽइति होवाच ब्वेत्थ चत्वारि ब्रतानां ब्रतानी३ ऽइति ब्वेद भो३ ऽइति होवाच ब्वेत्थ चत्वारि क्क्यानी३ ऽइति ब्वेद भो३ ऽइति होवाच ब्वेत्थ चत्वारि क्क्याना- ङ्क्क्यानी३ इति ब्वेद भो३ इति होवाच वेत्थ चतुरोऽर्क्का३निति ब्वेद भो३ ऽइति होवाच ब्वेत्थ चतुरोऽर्क्काणामर्क्का३निति- ब्वेद भो३ ऽइति होवाच ॥ २ ॥ ब्वेत्थार्क्कमिति । अथ वै नो भवान्न्वक्ष्यतीति ब्वेत्थार्क्कपर्ण्णे ऽइत्यथ वै नो भवान्न्व- क्ष्यतीति ब्वेत्थार्क्कपुष्प्पे ऽइत्यथ वै नो भवान्न्वक्ष्यतीति ब्वेत्थार्क्ककोश्श्यावित्यथ वै नो भवान्न्वक्ष्यतीति ब्वेत्थार्क्कस- मुद्गावित्यथ वै नो भवान्वक्ष्यतीति ब्वेत्थार्क्कधाना ऽइत्यथ वै नो भवान्वक्ष्यतीति ब्वेत्थार्क्काष्ट्ठीलामित्यथ वै नो भवा- न्न्वक्ष्यतीति ब्वेत्थार्क्कमूलमित्यथ वै नो भवान्न्वक्ष्यतीति ॥ ३ ॥ स ह वै यत्तदुवाच । ब्वेत्थ चत्वारि महान्ति ब्वेत्थ चत्वारि महताम्महान्तीत्यग्निर्म्महाँस्तस्य महतो महदोषधयश्च ब्वनस्पतयश्च तद्ध्यस्यान्नं ब्वायुर्म्महाँस्तस्य महतो महदापस्तद्ध्यस्यान्नमादित्यो महाँस्तस्य महतो महच्चन्द्रमास्तद्ध्यस्यान्नम्पुरुषो महाँस्तस्य महतो मह- त्पशवस्तद्ध्यस्यान्नमेतान्येव चत्वारि महान्त्येतानि चत्वारि

(१) कः प्रजापतिः, तस्मै हितानि क्यानि ।

महताम्महान्त्येव चत्वारि व्रतान्न्येतानि चत्वारि व्रतानां व्रतान्न्येतान्न्येव चत्वारि कक्ष्यान्न्येतानि चत्वारि कक्ष्यानां कक्ष्यान्न्येतऽएव चत्वारोऽर्क्का ऽएते चत्वारोऽर्क्काणामर्क्काः ॥ ४ ॥ अथ ह वै यत्तदुवाच वेत्थार्क्कमिति पुरुषꣳ हैव तदुवाच । वेत्थार्क्कपर्ण्णेऽइति कर्ण्णौ हैव तदुवाच वेत्थार्क्कपुष्पे इत्यऽक्षिणी हैव तदुवाच वेत्थार्क्ककोश्यावितिं नासिके हैव तदुवाच वेत्थार्क्कसमुद्गावित्योष्ठौ हैव तदुवाच वेत्थार्क्कधाना ऽइति दन्तान्हैव तदुवाच वेत्थार्क्काष्ठीलामिति जिह्वाꣳ हैव तदुवाच वेत्थार्क्कमूलमित्यन्नꣳ हैव तदुवाच स ऽएषोऽग्निरर्क्को यत्पुरुषः स यो हैतमेवमग्निमर्क्कम्पुरुषमुपास्तेऽयमहमग्निरर्क्कोऽस्मीति विद्यया हैवास्यैष ऽआत्मन्नग्निरर्क्कश्चितो भवति ॥ ५ ॥ (A)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ यजुषो विधायकब्राह्मणयोर्निर्वचनम् ]

( तत्राधिदैवाध्यात्मभेदेनार्थप्रतिपादनम्, उपनिषदः स्तुतिः, तत्स्वरूपनिर्वचनादि, उपांश्वनुष्ठानप्रतिपादनं च )

अयं वाव यजुर्योऽयम्पवते । एष हि यन्नेवेदꣳ सर्व्वञ्जनयत्येतं यन्तमिदमनु प्प्रजायते तस्माद्वायुरेव यजुः ॥ १ ॥ अयमेवाकाशो जूः । यदिदमन्तरिक्षमेतꣳ ह्याकाशमनु जवते तदेतद्यजुर्व्वायुश्चान्तरिक्षञ्च यच्च जूश्च तस्माद्यजुरेष ऽएव यदेष ह्येति तदेतद्यजुर्ऋक्सामयोः

( A ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ४. ४ ।

प्रतिष्ठितमृक्साम्ने वहतस्तस्मात्समानैरेवाद्ध्वर्युर्ग्रहैः कर्म्म करोत्यन्यान्यन्यान्यानि स्तुतशस्त्राणि भवन्ति यथा पूर्वाभ्याᳬं स्यत्त्वापराभ्यान्धावयेत्तादृक्तत् ॥ २ ॥ अग्निरेव पुरः । अग्निᳬं हि पुरस्कृत्येमाः प्रजा उपासत आदित्य एव चरणं यदा ह्येवैष उदेत्यथेदᳬं सर्व्वञ्चरति तदेतद्यजुः सपुरश्चरणमधिदेवतम् ॥ ३ ॥ अथाध्यात्मम् । प्राण एव यजुः प्राणो हि यन्नेवेदᳬं सर्व्वञ्जनयति प्राणं यन्तमिदमनु प्रजायते तस्मात्प्राण एव यजुः ॥ ४ ॥ अयमेवाकाशो जूः । योऽयमन्तरात्मन्नाकाश एतᳬं ह्याकाशमनु जवते तदेतद्यजुः प्राणश्चाकाशश्च यच्च जूश्च तस्माद्यजुः प्राण एव यत्प्राणो ह्येति ॥ ५ ॥*
अन्नमेव यजुः । अन्नेन हि जायतेऽन्नेन जवते तदेतद्यजुरन्ने प्रतिष्ठितमन्नँ वहति तस्मात्समान एव प्राणेऽन्न्यदन्न्यदन्नन्धीयते ॥ ६ ॥ मन एव पुरः । मनो हि प्रथमम्प्राणानाञ्चक्षुरेव चरणञ्चक्षुषा ह्ययमात्मा चरति तदेतद्यजुः सपुरश्चरणमधिदेवतञ्चाध्यात्मञ्च प्रतिष्ठितᳬं स यो हैतदेवं यजुः सपुरश्चरणमधिदेवतञ्चाध्यात्मञ्च प्रतिष्ठितं वेद ॥ ७ ॥ अरिष्टो हैवानार्त्तः । स्वस्ति यज्ञस्योदृचमश्नुतेऽथो[2] स्वानाᳬं श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद ॥ ८ ॥ य उ हैवँविदᳬं स्वेषु प्रतिप्रति-

(१) 'ज' पुस्तके 'स्यत्वा' इत्यत्र 'स्यन्त्वा' इति पाठो दृश्यते । स तु न समीचीनः, 'स्यन्दू' प्रस्रवणे इत्यस्मात्, क्त्वा प्रत्यये, उदित्वादिडभावपक्षे 'क्त्वि स्कन्दिस्यन्दोः' ( पा० ६।४।३१ ) इति नकारलोपात् ।

* अत्र शतम् ५३०० ।

(२) 'ज' पुस्तके 'ऽथो' नास्ति ।

र्बुभूषति न हैवालम्भाऽर्येभ्यो भवत्यथ य ऽएवैतमनु-
भवति यो वै तमनु भाऽर्यान्बुभूर्षति स हैवालम्भा-
ऽर्येभ्यो भवति ॥ ९ ॥ तदेतज्ज्येष्ठम्ब्रह्म । न ह्येतस्मा-
त्किञ्चन ज्यायोऽस्ति ज्येष्ठो ह वै श्रेष्ठः स्वानाम्भवति
य ऽएवं वेद ॥ १० ॥ तदेतद्ब्रह्मापूर्वमपरवत् । स यो
हैतदेवम्ब्रह्मापूर्वमपरवद्वेद न हास्मात्कश्चन श्रेयान्त्स-
मानेषु भवति श्रेयांसः श्रेयांसो हैवास्मादपरपुरुषा
जायन्ते तस्माद्योऽस्माज्ज्यायान्त्स्याद्दिशोऽस्मात्पूर्वा
ऽइत्युपासीत तथो हैनन्न हिनस्ति ॥ ११ ॥ तस्य वा
ऽएतस्य यजुषः । रस ऽएवोपनिषत्तस्माद्यावन्मात्रेण
यजुषाध्वर्युर्ग्रहङ्गृह्णाति स ऽउभे स्तुतशस्त्रे ऽअनुविभव-
त्युभे स्तुतशस्त्रे ऽअनुव्यश्नुते तस्माद्यावन्मात्रऽइवा-
न्नस्य रसः सर्वमन्नमवति सर्वमन्नमनुव्येति ॥ १२ ॥
तृप्तिरेवास्य गतिः । तस्माद्यदान्नस्य तृप्यत्यथ स गत
ऽइव मन्यत ऽआनन्द ऽएवास्य विज्ञानमात्मानन्दात्मानो
हैव सर्वे देवाः सा हैषैव देवानामद्धाविद्या स ह स न
मनुष्यो य ऽएवंविद्देवानां हैव स एकः ॥ १३ ॥ एतद्ध
स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन ऽआह । वायुं वान्त-
मानन्दुस्त ऽआत्मेतो वा वाहीतो वेति स ह स्म तथैव
वाति तस्माद्यान्दिवेष्वाशिषमिच्छेदेतेनैवोपतिष्ठेतानन्दो व
ऽआत्मासौ मे कामः स मे समृध्यतामिति सं ह हैवास्मै
स काम ऽऋध्यते यत्कामो भवत्येतां ह वै तृप्तिमेताङ्ग-
तिमेतमानन्दमेतमात्मानमभिसम्भवति य ऽएवं वेद

॥ १४ ॥ तदेतद्यजुरुपांशु अनिरुक्तम् । प्राणो वै यजुरुपांश्वायतनो वै प्राणस्तद्य एनन्निर्ब्रुवन्तं ब्रूयादनिरुक्तान्देवतान्निरवोचत्प्राण एनं हास्यतीति तथा हैव स्यात् ॥ १५ ॥ तस्य ह यो निरुक्तमाविर्भावं वेद । आविर्भवति कीर्त्या यशसोपांशु यजुषाद्वर्युर्ग्रहं गृह्णाति गृहीतः सन्न आविर्भवत्युपांशु यजुषाग्निञ्चिनोति चितः सञ्चित आविर्भवत्युपांशु यजुषा हविर्निर्वपति शृतन्निष्ठितमाविर्भवत्येवं यत्किञ्चोपांशु करोति कृतन्निष्ठितमाविर्भवति तस्य ह य एतमेवन्निरुक्तमाविर्भावं वेदाविर्भवति कीर्त्या यशसा ब्रह्मवर्चसेन क्षिप्र उ हैवाविदङ्गच्छति स ह यजुरेव भवति यजुषैनमाचक्षते ॥१६॥(B)

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ प्रजापतेर्भोक्तृत्वमाहवनीयरूपत्वम्, रुक्मपुरुषयोरिन्द्राग्न्यात्मना स्तुत्यादिकश्च ]

प्रजापतिं विस्रस्तम् । यत्र देवाः समस्कुर्वँस्तमुखायां योनौ रेतो भूतमसिञ्चन्योनिर्वा उखा तस्मा एतत्सँवत्सरेऽन्नः समस्कुर्वन्योऽयमग्निश्चितस्तदात्मना पर्यदधुस्तदात्मना परिहितमात्मैवाभवत्तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ १ ॥ तथैवैतद्यजमानः । आत्मा-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. ५ ।

नमुखायां ᳪ योनौ रेतो भूतᳪ सिञ्चति योनिर्वा ऽउखा तस्मा ऽएतत्संवत्सरेऽन्नᳪ संस्करोति योऽयमग्निश्चित-स्तदात्मना परिदधाति तदात्मना परिहितमात्मैव भवति तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ २ ॥ तन्नि-दधाति । वौषडिति वौगिति वा ऽएष षडितीदᳪ षट्चिति-कमन्नङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं ᳪ यदु वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ ३ ॥ स ऽएष ऽएवार्कः । यमे-तमत्राग्निमाहरन्ति तस्यैतदन्नङ्क्यं ᳪ योऽयमग्निश्चित-स्तदुक्थ्यं ᳪ यजुष्ट्व ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्म-हाव्रतᳪ सामत ऽएष ऽउ ऽएवोक्तस्यैतदन्नन्थन्तदुक्थ-मृक्तस्तदेतदेकᳪ स त्रेधा ख्यायते ॥ ४ ॥ अथेन्द्राग्नी वा ऽअसृज्येताम् । ब्रह्म च क्षत्रञ्चाग्निरेव ब्रह्मेन्द्रः क्षत्रन्तौ सृष्टौ नानैवास्तान्तावब्रूतान्न वा ऽइत्थᳪ सन्तौ शक्ष्यावः प्रजाः प्रजनयितुमेकᳪ रूपमुभावसावेति तावेकᳪ रूपमुभावभवताम् ॥ ५ ॥ तौ यौ ताविन्द्राग्नी । एतौ तौ रुक्मश्च पुरुषश्च रुक्म ऽएवेन्द्रः पुरुषोऽग्निस्तौ हिरण्मयौ भवतो ज्योतिर्वै हिरण्यञ्ज्योतिरिन्द्राग्नी ऽअमृतᳪ हिरण्यममृतमिन्द्राग्नी ॥ ६ ॥ तावेताविन्द्राग्नी ऽएव चिन्वन्ति । यद्धि किञ्चैष्टकमग्निरेव तत्तस्मात्त-दग्निना पचन्ति यद्धि किञ्चाग्निना पचन्त्यग्निरेव तदुथ यत्पुरीषᳪ स ऽइन्द्रस्तस्मात्तदग्निना न पचन्ति नेदग्नि-रेवासन्नेन्द्र ऽइति तस्मादेताविन्द्राग्नी ऽएव चितौ ॥ ७ ॥

अथ यश्चितेऽग्निर्न्निधीयते । तदेकꣳ रूपमुभौ भवतस्त-स्म्मात्तावेतेनैव रूपेणेमाꣳ प्प्रजाꣳ प्प्रजनयतꣳ सैषैकैवेष्ट-काग्निरेव तामेष सर्वोऽग्निरभिसम्पद्यते सैवेष्टकासम्पत्त-देतदेकमेवाक्षरं वौगिति तदेष सर्वोऽग्निरभिसम्पद्यते सैवाक्षरसम्पत् ॥ ८ ॥ तद्धैतत्पश्यन्नृषिरब्भ्यनूवाद । भूत-म्भविष्ष्यत्प्रस्तौमि महद्ब्रह्मैकमक्षरम्बहु ब्ब्रह्मैकमक्षरमित्त्ये-तद्ध्येवाक्षरꣳ सर्वे देवाꣳ सर्वाणि भूतान्न्यभिसम्पद्यन्ते तदेतद्ब्रह्म च क्षत्रञ्चाग्निरेव ब्ब्रह्मेन्द्रꣳ क्षत्रमिन्द्राग्नी वै विश्श्वे देवा विड्ड विश्श्वे देवास्तदेतद्ब्रह्म क्षत्रं विट् ॥ ९ ॥ एतद्ध स्म वै तद्विद्वाञ्छ्यापर्ण्णꣳ सायका-यन ऽआह । यद्वै मऽइदङ्कर्म्म समाप्प्स्यत ममैव प्प्रजा सल्ल्वानाꣳ राजानोऽभविष्ष्यन्न्मम ब्ब्राह्मणा मम वैश्श्या यत्तु मऽएतावत्कर्म्मणꣳ समापि तेन मऽउभयथा सल्ल्वान्प्रजातिरेक्ष्यतऽइति स ऽएष ऽएव श्श्रीरेष यश ऽएषोऽन्नादꣳ ॥ १० ॥ एतद्ध वै तच्छा-ण्डिल्यꣳ । वामकक्षायणाय प्प्रोच्च्योवाच श्रीमाञ्यशस्व्य-न्नादो भविष्ष्यसीति श्श्रीमान्न्ह वै यशस्व्यन्नादो भवति य ऽएवं वेद ॥ ११ ॥ स ऽएषोऽग्निꣳ प्प्रजापतिरेव । तं देवा ऽएतमग्निम्प्रजापतिꣳ सँस्कृत्याथास्म्मा ऽएतत्सँव-त्सरेऽन्नꣳसमस्कुर्वञ्च्य ऽएष महाव्रतीयो ग्ग्रहꣳ B ॥ १२ ॥ तमर्द्धर्ग्युग्ग्रहेण गृह्णाति । यद्गृह्णाति तस्म्माद् ग्रहस्त-

B कात्यायनमहर्षिणापि महाव्रतैकनियतग्रहणं सूत्रितम्, 'महाव्रतमग्निष्टोमः' 'प्राजापत्य उपालम्भ्यः' 'ग्रहं गृह्णाति "विन ऽइन्द्र" वाचस्पतिं विश्वकर्मन्निति" वा', का० श्रौ० सू० अ० १३ । कं० २ सू० २१, २२, २३ ।

स्मिन्नुद्गाता महाव्रतेन रसन्दधाति सर्व्वाणि हैतानि सामानि यन्महाव्रतन्तदस्मिन्त्सर्व्वैः सामभी रसन्दधाति तस्मिन्न्होता महतोक्थेन रसन्दधाति सर्व्वा हैता ऽऋचो यन्महदुक्थन्तदस्मिन्त्सर्व्वाभिर्ऋग्भी रसन्दधाति ॥ १३ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं वषट्कृते जुहोति वौगिति वा ऽएष षडितीदं षड्विधमन्नङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं यदु वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १४ ॥ स ऽएष ऽएवार्क्कः । योऽयमग्निश्चितस्तस्यैतदन्नङ्क्यमेष महाव्रतीयो ग्रहस्तदुक्थं यजुष्ट्व ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्तस्यैतदन्नं* थन्तदुक्थमृक्तस्तदेतदेकꣳ स त्रेधा ख्यायते ॥ १५ ॥ स ऽएष सँवत्सरः प्रजापतिरग्निः । तस्यार्द्धमेव सावित्राण्यर्द्धं वैश्वकर्म्मणान्यष्टावेवास्य कलाः सावित्राण्यष्टौ वैश्वकर्म्मणान्यथ यदेतदन्तरेण कर्म्म क्रियते स ऽएव सप्तदशः प्रजापतिर्यो वै कला मनुष्याणामक्षरन्तद्देवानाम् ॥ १६ ॥ तद्द्वे लोमेति द्वे ऽअक्षरे । त्वगिति द्वे ऽअसृगिति द्वे मेद ऽइति द्वे माꣳसमिति द्वे स्नावेति द्वे ऽअस्थीति द्वे मज्जेति द्वे ताः षोडश कला ऽअथ य ऽएतदन्तरेण प्राणः सञ्चरति स ऽएव सप्तदशः प्रजापतिः ॥ १७ ॥ तस्मा ऽएतस्मै प्राणाय । एताः षोडश कला ऽअन्नमभिह-

* 'ग-ज' पुस्तकयोः 'एवोक्तदन्नं' इति पाठः समुपलभ्यते

रन्ति ता यदानभिहर्त्तुन्ध्रियन्तेऽथैता ऽएव जग्ध्वोत्क्रामति तस्मादु हैतदशिशिषतस्तृप्रमिव भवति प्प्राणैरद्यमानस्य तस्मादु हैतदुपतापी कृश ऽइव भवति प्प्राणैर्हि जग्धो भवति ॥ १८ ॥ तस्मा ऽएतस्म्मै सप्तदशाय प्प्रजापतये । एतत्सप्तदशमन्नꣳ समस्कुर्वन्न्य ऽएष सौम्म्योऽध्वरोऽथ या ऽअस्य ताः षोडश कला ऽएते ते षोडशऽर्त्विजस्त-स्म्मान्न सप्तदशमृत्विजङ्कुर्वीत नेदतिरेचयानीत्यथ य ऽएवात्र रसो या ऽआहुतयो हूयन्ते तदेव सप्तदशमन्नम् ॥ १९ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं वषट्कृते जुहोति वौगिति वा ऽएष षडितीदꣳ षड्विध-मन्नङ्कृत्वास्म्मा ऽअपिदधात्यात्मसम्मितं ऽयदु वा ऽआत्म-सम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्य-त्कनीयो न तदवति ॥ २० ॥ स ऽएष ऽएवार्क्कः । योऽय-मग्निश्चितस्तस्यैतदन्नङ्क्यमेष सौम्म्योऽध्वरस्तदुक्क्यं ऽयजुष्ट्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्क्तस्यैतदन्नन्थन्तदुक्क्थमृक्तस्तदेत-देकꣳ स त्रेधा ख्यायते स ऽएतेनान्नेन सहोर्द्ध्व ऽउदक्क्रामत्स यः स ऽउदक्क्रामदसौ स ऽआदित्योऽथ येन तेनान्नेन सहोद-क्क्रामदेष स चन्द्रमाः ॥ २१ ॥ स ऽएष ऽएवार्क्को य ऽएष तपति । तस्यैतदन्नङ्क्यमेष चन्द्रमास्तदुक्क्यं ऽयजुष्ट्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष

(१) "षोडशर्त्विजो ब्रह्मोद्गातृ-होत्रध्वर्यु-ब्राह्मणाच्छꣳसि-प्रस्तोतृ-मैत्रावरुण-प्रतिप्रस्थातृ-पोतृ-प्रतिहर्त्रच्छावाक-नेष्ट्रग्नीत्-सुब्रह्मण्य-ग्रावस्तदुन्नेतॄन् वृणीते" का० श्रौ० सू० ७. १. ७ ।

ऽउ ऽएवोक्क्तस्यैतदन्नन्थन्तदुक्क्थमृक्कस्तदेतदेकः स त्रेधा ख्यायत ऽइत्यधिदेवतम् ॥ २२ ॥ अथाध्यात्मम् । प्प्राणो वा ऽअर्कस्तस्यान्नमेव क्क्यन्तदुक्क्यं य्यजुष्टः प्प्राण ऽएव महाँस्तस्यान्नमेव व्व्रतन्तन्महाव्व्रतः सामतः प्प्राण ऽउ ऽएवोक्क्तस्यान्नमेव थन्तदुक्क्थमृक्कस्तदेतदेकः स त्रेधा ख्यायते स ऽएष ऽएवैषोऽधिदेवतमयमध्यात्मम् ॥ २३ ॥ (B)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०९ ॥



सँव्वत्सरो वै प्प्रजापतिरग्निः । सोमो राजा चन्द्रमाः स ह स्वयमेवात्मानम्प्रोचे यज्ञवचसे राजस्तम्बायनाय यावन्ति वाव मे ज्योतीꣳषि तावत्यो मऽइष्टका इति ॥ १ ॥ तस्य वा ऽएतस्य सँव्वत्सरस्य प्प्रजापतेः । सप्त च शतानि विꣳशतिश्चाहोरात्राणि ज्योतीꣳषि ता ऽइष्टकाः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्यः सोऽयꣳसँव्वत्सरः प्प्रजापतिः सर्वाणि भूतानि ससृजे यच्च प्प्राणि यच्चाप्प्राणमुभयान्देवमनुष्यान्त्स सर्वाणि भूतानि सृष्ट्वा रिरिचान ऽइव मेने स मृत्योर्बिभयाञ्चकार ॥ २ ॥ स हेक्षाञ्चक्रे । कथ-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ४. १ ।

न्न्वहमिमानि सर्वाणि भूतानि पुनरात्मन्नावपेय पुनरात्मन्दधीय कथन्न्वहमेवैषाꣳ सर्वेषाम्भूतानाम्पुनरात्मा स्यामिति ॥ ३ ॥ स द्वेधात्मानं व्व्यौहत् । षष्टिश्च त्रीणि च शतान्न्यन्न्यतरस्येष्टका ऽअभवन्नेवमन्न्यतरस्य स न व्व्याप्प्नोत् ॥ ४ ॥ त्रीनात्मनोऽकुरुत । तिस्रस्तिस्रोऽशीतय ऽएकैकस्येष्टका ऽअभवन्त्स नैव व्व्याप्प्नोत् ॥ ५ ॥ चतुर ऽआत्मनोऽकुरुत । अशीतिशतेष्टकान्त्सं नैव व्व्याप्प्नोत् ॥ ६ ॥ पञ्चात्मनोऽकुरुत । चतुश्चत्त्वारिꣳशꣳशतमेकैकस्येष्टका ऽअभवन्त्स नैव व्व्याप्प्नोत् ॥ ७ ॥ षडात्मनोऽकुरुत । विꣳशतिशतेष्टकान्त्स नैव व्व्याप्प्नोन्न सप्तधा व्व्यभवत् ॥ ८ ॥ अष्टावात्मनोऽकुरुत । नवतीष्टकान्त्स नैव व्व्याप्नोत् ॥ ९ ॥ नवात्मनोऽकुरुत । अशीतीष्टकान्त्स नैव व्व्याप्नोत् ॥ १० ॥ दशात्मनोऽकुरुत । द्वासप्ततीष्टकान्त्स नैव व्व्याप्नोन्नैकादशधा व्व्यभवत् ॥ ११ ॥ द्वादशात्मनोऽकुरुत । षष्टीष्टकान्त्स नैव व्व्याप्नोन्न त्रयोदशधा व्व्यभवन्न चतुर्द्दशधा ॥ १२ ॥ पञ्चदशात्मनोऽकुरुत । अष्टाचत्त्वारिꣳशदिष्टकान्त्स नैव व्व्याप्नोत् ॥ १३ ॥ षोडशात्मनोऽकुरुत । पञ्चचत्त्वारिꣳशदिष्टकान्त्स नैव व्व्याप्नोन्न सप्तदशधा व्व्यभवत् ॥ १४ ॥ अष्टादशात्मनोऽकुरुत । चत्त्वारिꣳशदिष्टकान्त्स नैव व्व्याप्नोन्नैकान्न विꣳशतिधा व्व्यभवत् ॥ १५ ॥ विꣳशतिमात्मनोऽकुरुत । षट्त्रिꣳशदिष्टकान्त्स नैव व्व्याप्नोन्नैक-

विꣳशतिधा व्व्यभवन्न द्वाविꣳशतिधा न त्रयोविꣳशतिधा ॥ १६ ॥ चतुर्विꣳशतिमात्मनोऽकुरुत । त्रिꣳशदिष्टकान्त्सोऽत्रातिष्ठत पञ्चदशे व्व्यूहे तद्यत्पञ्चदशे व्व्यूहेऽतिष्ठत तस्मात्पञ्चदशापूर्य्यमाणस्य रूपाणि पञ्चदशापक्षीयमाणस्य ॥ १७ ॥ अथ यच्चतुर्विꣳशतिमात्मनोऽकुरुत । तस्माच्चतुर्विꣳशत्यर्द्धमासः सँव्वत्सरः स ऽएतैश्चतुर्विꣳशत्या त्रिꣳशदिष्टकैरात्मभिर्न्न व्व्यभवत्स पञ्चदशाह्नो रूपाण्यपश्यदात्मनस्तन्वो मुहूर्त्ताँल्लोकम्पृणाः पञ्चदशैव रात्रेस्तद्यन्मुहु त्रायन्ते तस्मान्मुहूर्त्ता ऽअथ यत्क्षुद्राः सन्त ऽइमाँल्लोकानापूरयन्ति तस्माल्लोकम्पृणाः ॥ १८ ॥ एष वा ऽइदꣳ सर्वम्पचति । अहोरात्रैरर्द्धमासैर्म्मासैर्ऋतुभिः सँव्वत्सरेण तदमुना पक्वमयम्पचति पक्वस्य पक्तेति ह स्माह भारद्वाजोऽग्निममुना हि पक्वमयम्पचतीति ॥ १९ ॥ तानि सँव्वत्सरे । दश च सहस्राण्यष्टौ च शतानि समपद्यन्त सोऽत्रातिष्ठत दशसु च सहस्रेष्वष्टासु च शतेषु ॥ २० ॥ अथ सर्वाणि भूतानि पर्य्यैक्षत् । स त्रय्यामेव विद्यायाꣳ सर्वाणि भूतान्यपश्यदत्र हि सर्वेषाञ्छन्दसामात्मा सर्वेषाꣳ स्तोमानाꣳ सर्वेषाम्प्राणानाꣳ सर्वेषान्देवानामेतद्वा ऽअस्त्येतद्ध्यमृतं यद्ध्यमृतन्तद्ध्यस्त्येतदु तद्यन्मर्त्यम् ॥ २१ ॥ स ऽऐक्षत प्प्रजापतिः । त्रय्यां वाव विद्यायाꣳ सर्वाणि भूतानि हन्त त्रयीमेव विद्यामात्मानमभिसंस्करवा ऽइति ॥ २२ ॥ स ऽऋचो व्व्यौहत् । द्वादश बृहतीसहस्राण्येतावत्यो हऽर्चो

याः प्रजापतिसृष्टास्तास्त्रिꣳशत्तमे व्यूहे पङ्क्तिष्ववतिष्ठन्त ता यत्त्रिꣳशत्तमे व्यूहेऽतिष्ठन्त तस्मात्त्रिꣳशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः* प्रजापतिस्ता ऽअष्टाशतꣳ शतानि पङ्क्तयोऽभवन् ॥ २३ ॥ अथेतरौ वेदौ व्यौहत् । द्वादशैव बृहतीसहस्राण्यष्टौ यजुषाञ्चत्वारि साम्नामेतावद्धैतयोर्वेदयोर्यत्प्रजापतिसृष्टन्तौ त्रिꣳशत्तमे व्यूहे पङ्क्तिष्ववतिष्ठेतान्तौ यत्त्रिꣳशत्तमे व्यूहेऽतिष्ठेतान्तस्मात्त्रिꣳशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः प्रजापतिस्ता ऽअष्टाशतमेव शतानि पङ्क्तयोऽभवन् ॥ २४ ॥ ते सर्वे त्रयो वेदाः । दश च सहस्राण्यष्टौ च शतान्यशीतीनामभवन्त्स मुहूर्त्तेन-मुहूर्त्तेनैवाशीतिमाप्नो-न्मुहूर्त्तेन-मुहूर्त्तेनाशीतिः समपद्यत ॥ २५ ॥ स ऽएषु त्रिषु लोकेषूखायाम् । योनौ रेतो भूतमात्मानमसिञ्च च्छन्दोमयꣳ स्तोममयम्प्राणमयन्देवतामयन्तस्यार्द्धमासे प्रथम ऽआत्मा समस्क्रियत दुवीयसि परो दुवीयसि परः सँवत्सर ऽएव सर्वः कृत्स्नः समस्क्रियत ॥ २६ ॥ तद्यत्परिश्रितमुपाधत्त । तद्रात्रिमुपाधत्त तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्ताननु पञ्चदशाशीतीरथ यद्य-जुष्मतीमुपाधत्त तदहरुपाधत्त तदनु पञ्चदश मुहूर्त्ता-न्मुहूर्त्ताननु पञ्चदशाशीतीरेवमेतान्त्रयीं विद्यामात्मन्नाव-पतात्मन्नकुरुत सोऽत्रैव सर्वेषाम्भूतानामात्माभवच्छन्दोमय स्तोममयः प्राणमयो देवतामयः स ऽएतन्मय ऽएव

* पाङ्क्तत्वं नाम पञ्चसंख्यावत्त्वम्, पञ्चपदा पङ्क्तिरिति संख्यासाम्यात्' प्रजापतेर्लोमत्वङ्मांसास्थिमज्जात्मानः पञ्चचितय इति षष्ठे प्रतिपादितम् । (१) 'ग' 'ज' पुस्तकयोः 'माशी०'

ऽउदक्क्रामत्स यः स ऽउदक्क्रामदेष स चन्द्रमाः ॥ २७ ॥ तस्यैषा प्प्रतिष्ठा । य ऽएष तपत्येतस्म्मादेवाद्ध्यचीयतैतस्म्मिन्नद्ध्यचीयतात्मन ऽएवैनन्तन्निरमिमीतात्मनः प्प्राजनयत् ॥ २८ ॥ स यदग्निञ्चेष्ष्यमाणो दीक्षते । यथैव तत्प्रजापतिरेषु त्रिषु लोकेषूखायां य्योनौ रेतो भूतमात्मानमसिञ्चदेवमेवैष ऽएतदात्मानमुखायां य्योनौ रेतो भूतः सिञ्चति च्छन्दोमयथं स्तोममयम्प्राणमयन्देवतामयन्तस्यार्द्धमासे प्प्रथम ऽआत्मा संस्क्रियते दवीयसि परो दवीयसि परः सँवत्सर ऽएव सर्व्वः कृत्स्नः संस्क्रियते ॥ २९ ॥ तद्यत्परिश्रितमुपधत्ते । तद्रात्रिमुपधत्ते तदनु पञ्चदश मुहूर्त्तान्म्मूहूर्त्तानन पञ्चदशाशीतीरथ यद्यजुष्म्मतीमुपधत्ते तदहरुपधत्ते तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्तानन पञ्चदशाशीतीरेवमेतान्त्रयीं विद्यामात्मन्नावपत ऽआत्मन्कुरुते सोऽत्रैव सर्व्वेषाम्भूतानामात्मा भवति च्छन्दोमय स्तोममयः प्प्राणमयो देवतामयः स ऽएतन्मय ऽएव भूत्त्वोर्द्ध्व ऽउत्क्रामति ॥ ३० ॥ तस्यैषा प्प्रतिष्ठा । य ऽएष तपत्येतस्म्मादेवाधिचीयत ऽएतस्म्मिन्नधिचीयत ऽआत्मन ऽएवैनन्तन्निर्म्मिमीत ऽआत्मनः प्प्रजनयति स यदैवंविदस्म्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति च्छन्दोमयथं स्तोममयम्प्राणमयन्देवतामयः स ऽएतन्मय ऽएव भूत्त्वोर्द्ध्व ऽउत्क्रामति य ऽएवं विद्वानेतत्कर्म्म कुरुते यो वैतदेवं वेद ॥३१॥(E)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ४. १ ।

[ संवत्सररूपप्रजापतेर्मृत्य्वन्तरूपत्वम्, तद्रूपोपासनस्य फलम्,
अग्निचयनस्यामृतलक्षणं फलं, परिश्रिद्यजुष्मती-
लोकम्पृणेष्टकानां संख्या च ]

एष वै मृत्युर्य्यत्सँवत्सरः। एष हि मर्त्त्यानामहोरात्राभ्यामायुः क्षिणोत्त्यथ म्म्रियन्ते तस्म्मादेष ऽएव मृत्युः स यो हैतम्मृत्युᳬ सँवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुः क्षिणोति सर्वᳬ हैवायुरेति ॥ १ ॥ एष ऽउ ऽएवान्तकः। एष हि मर्त्त्यानामहोरात्राभ्यामायुषोऽन्तङ्गच्छत्त्यथ म्म्रियन्ते तस्म्मादेष ऽएवान्तकः स यो हैतमन्तकम्मृत्युᳬ सँवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुषोऽन्तङ्गच्छति सर्वᳬ हैवायुरेति ॥ २ ॥ ते देवाः। एतस्म्मादन्तकान्म्मृत्योः सँवत्सरात्प्रजापतेर्ब्बिभयाञ्चक्क्रुर्यद्वै नोऽयमहोरात्राभ्यामायुषोन्तन्न गच्छेदिति ॥ ३ ॥ त ऽएतान्यज्ञक्क्रतूँस्तेनिरे। अग्निहोत्रन्दर्शपूर्ण्णमासौ चातुर्म्मास्यानि पशुबन्धᳬ सौम्म्यमद्ध्वरन्त ऽएतैर्य्यज्ञक्क्रतुभिर्य्यजमानानामृतत्त्वमानशिरे ४ ते हाप्प्यग्निञ्चिक्क्यिरे। ते ऽपरिमिता ऽएव परिश्रित ऽउपदधुरपरिमिता यजुष्म्मतीरपरिमिता लोकम्पृणा यथेदमप्प्येतर्ह्येक ऽउपदधतीति देवा ऽअकुर्वन्निति ते ह नैवामृतत्त्वमानशिरे ॥ ५ ॥ तेऽर्चन्तः श्राम्म्यन्तश्चेरुः। अमृतत्त्वमवरुरुत्समानास्तान्ह प्प्रजापतिरुवाच न वै मे सर्वाणि रूपाण्युपधत्त्थाति[2] वेव रेचयथ न वाभ्यापयथ तस्मान्नामृता भवथेति ॥ ६ ॥ ते होचुः। तेभ्यो वै

( १ ) अवरोद्धुकामाः। ( २ ) 'ग' 'ज' पुस्तकयोः 'धत्था' इति पाठः समुपलभ्यते।

नस्त्वमेव तद् ब्रूहि यथा ते सर्वाणि रूपाण्युपदधामेति ॥७॥
स होवाच । षष्टिश्च त्रीणि च शतानि परिश्रित ऽउप-
पधत्त षष्टिश्च त्रीणि च शतानि यजुष्मतीरधि षट्त्रिᳫं-
शतमथ लोकम्पृणा दश च सहस्राण्यष्टौ च शतान्युप-
धत्ताथ मे सर्वाणि रूपाण्युपधास्यथाथामृता भविष्य-
थेति ते ह तथा देवा ऽउपदधुस्ततो देवा ऽअमृता ऽआसुः
॥ ८ ॥ स मृत्युर्देवानब्रवीत् । इत्थमेव सर्वे मनुष्या
ऽअमृता भविष्यन्त्यथ को मह्यम्भागो भविष्यतीति ते
होचुर्नातोऽपरः कश्चन सह शरीरेणामृतोऽसद्यदैवत्त्वमेत-
म्भागᳫं हरासा ऽअथ व्यावृत्य शरीरेणामृतोऽसद्योऽमृतो-
ऽसद्विद्यया वा कर्म्मणा वेति यद्वै तदब्रुवन्विद्यया वा
कर्म्मणा वेत्येषा हैव सा विद्या यदग्निरेतदु हैव तत्कर्म्म
यदग्निः ॥ ९ ॥ ते य ऽएवमेतद्विदुः । ये वैतत्कर्म्म
कुर्वते मृत्वा पुनः सम्भवन्ति ते सम्भवन्त ऽएवामृतत्त्व-
मभिसम्भवन्त्यथ य ऽएवन्न विदुर्ये वैतत्कर्म्म न कुर्वते
मृत्वा पुनः सम्भवन्ति त ऽएतस्यैवान्नम्पुनः पुनर्भवन्ति
॥ १० ॥ स यदग्निञ्चिनुते । एतमेव तदन्तकम्मृत्युᳫं
सँवत्सरम्प्रजापतिमग्निमाप्नोति यन्देवा ऽआप्नुवन्नेत-
मुपधत्ते यथैवैनमदो देवा ऽउपादधत ॥ ११ ॥ परिश्रि-
द्भिरेवास्य रात्रीराप्नोति । यजुष्मतीभिरहान्यर्द्धमासान्मा-
सानृतूँल्लोकम्पृणाभिर्म्मुहूर्त्तान् ॥ १२ ॥ तद्याः परिश्रितः ।
रात्रिलोकास्ता रात्रीणामेव साप्तिः क्रियते रात्रीणाम्प्रतिमा
ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै

त्रीणि च शतानि सँव्वत्सरस्य रात्रयस्तासामेकविꣳशतिङ्गार्हपत्ये परिश्रयति द्वाभ्यान्नाशीतिन्धिष्ण्ण्येषु द्वे ऽएकषष्टे शते ऽआहवनीये ॥ १३ ॥ अथ यजुष्म्मत्यः दर्भस्तम्बो लोगेष्टकाः पुष्करपर्ण्णꣳ रुक्ममपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतः सिचौ विश्वज्योतिर्ऋतव्ये ऽअषाढा कूर्म्मं ऽउलूखलमुसले ऽउखा पञ्च पशुशीर्षाणि पञ्चदशापस्याः पञ्च छन्दस्याः पञ्चाशत्प्राणभृतस्ता द्वाभ्यान्न शतम्प्रथमा चितिः ॥ १४ ॥ [अर्धप्रपाठः ४५] अथ द्वितीया । पञ्चाश्विन्न्यो द्वे ऽऋतव्ये पञ्च वैश्वदेव्यः पञ्च प्प्राणभृतः पञ्चापस्या ऽएकया न विꣳशतिर्व्वयस्यास्ता ऽएकचत्त्वारिꣳशद्द्वितीया चितिः ॥ १५ ॥ अथ तृतीया । स्वयमातृण्णा पञ्च दिश्या विश्वज्योतिश्चतस्र ऽऋतव्या दश प्प्राणभृतः षट्त्रिꣳशच्छन्दस्याश्चतुर्द्दश वालखिल्ल्यास्ता ऽएकसप्ततिस्तृतीया चितिः ॥ १६ ॥ अथ चतुर्थी । अष्टादश प्प्रथमा ऽअथ द्वादशाऽथ सप्तदश ताः सप्तचत्त्वारिꣳशच्चतुर्थी चितिः ॥ १७ ॥ अथ पञ्चमी । पञ्चासपत्नाश्चत्त्वारिꣳशद्विराज ऽएकया न त्रिꣳशत्स्तोमभागाः पञ्च नाकसदः पञ्च पञ्चचूडा ऽएकत्रिꣳशच्छन्दस्या ऽअष्टौ गार्हपत्त्या चितिरष्टौ पुनश्चितिर्ऋतव्ये विश्वज्योतिर्विमर्ण्णी च स्वयमातृण्णा चाश्म्मा पृश्निरर्थश्चिचतेऽग्निर्न्निधीयते ता ऽअष्टात्रिꣳशꣳ शतम्पञ्चमी चितिः ॥ १८ ॥ ताः सर्वाः पञ्चभिर्न्न चत्त्वारि शतानि । ततो याः षष्टिश्च त्रीणि च शतान्न्यहर्ल्लोकास्ता

ऽअह्नामेव साप्तिः क्रियतेऽह्नाम्प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि सँवत्सरस्याहान्यथ याः षट्त्रिंशत्पुरीषन्तासाꣳ षट्त्रिंशी ततो याश्चतुर्विंशतिरर्द्धमासलोकास्ता ऽअर्द्धमासानामेव साप्तिः क्रियतेऽर्द्धमासानाम्प्रतिमाथ या द्वादश मासलोकास्ता मासानामेव साप्तिः क्रियते मासानाम्प्रतिमा ता ऽउ द्वे-द्वे सहर्त्तुलोका ऽऋतूनामशून्यतायै ॥ १९ ॥ अथ या लोकम्पृणाः । मुहूर्त्तलोकास्ता मुहूर्तानामेव साप्तिः क्रियते मुहूर्त्तानाम्प्रतिमा ता दश च सहस्राण्यष्टौ च शतानि भवन्त्येतावन्तो हि सँवत्सरस्य मुहूर्त्तास्तासामेकविंशतिङ्गार्हपत्य ऽउपदधाति द्वाभ्यान्नाशीतिन्धिष्ण्येष्वाहवनीय ऽइतरा ऽएतावन्ति वै सँवत्सरस्य रूपाणि तान्यस्यात्राप्तान्युपहितानि भवन्ति ॥ २० ॥ तद्धैके । आहवनीय ऽएवैताꣳ सम्पदमापिपयिषन्त्यन्ये वा ऽएतेऽग्नयश्चिताः किमन्यत्रोपहिता ऽइह सम्पश्येमेति न तथा कुर्याद्दश वा ऽएतानग्नीश्चिनुतेऽष्टौधिष्ण्यानाहवनीयञ्च गार्हपत्यञ्च तस्मादाहुर्विराडग्निरिति दशाक्षरा हि विराट् तानु सर्वानेकमिवैवाचक्षतेऽग्निरित्येतस्य ह्येवैतानि सर्वाणि रूपाणि यथा सँवत्सरस्याहोरात्राण्यर्द्धमासा मासा ऽऋतव ऽएवमस्यैतानि सर्वाणि रूपाणि ॥ २१ ॥ ते ये ह तथा कुर्वन्ति एतानि हास्य ते रूपाणि बहिर्द्धा कुर्वन्त्यथो पापवस्यसङ्कुर्वन्ति क्षत्राय विशम्प्रतिप्रतिनीम्प्रत्युद्यामिनीमाग्नी-

द्वीये वा ऽअश्मानम्पृश्निमुपदधात्यथ तं सम्पश्यति किमुतं सम्पश्यन्नितरा न सम्पश्येद्येनैव निर्ऋतिम्पाप्मानमपहते स ऽएकादशः ॥ २२ ॥ तदाहुः । कथमुता ऽअत्र न सम्पश्यतीति न ह्येना ऽअभिजुहोत्याहुत्या वा ऽइष्टका सर्वा कृत्स्ना भवतीति ॥ २३ ॥ तदाहुः । कथमस्यैता ऽअनतिरिक्ता ऽउपहिता भवन्तीति वीर्यं वा ऽअस्यैता ऽअनतिरिक्तं वै पुरुषं वीर्यं स ह वा ऽएतं सर्वङ्कृत्स्नम्प्रजापतिं संस्करोति य ऽएवं विद्वानेतत्कर्म्म कुरुते यो वैतदेवं वेद ॥ २४ ॥ (A)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ संवत्सररूपाग्नेः, तदवयवानाञ्च सहस्ररूपत्वेनोपासनम्, तत्फलञ्च ]

प्रजापतिं वै प्रजाः सृजमानम् । पाप्मा मृत्युरभिपरिजघान स तपोऽतप्यत सहस्रं सँवत्सरान्पाप्मानं विजिहासन् ॥१॥ तस्य तपस्तेपानस्य । एभ्यो लोमगर्त्तेभ्य ऽऊर्द्ध्वानि ज्योतींष्यायँस्तद्यानि तानि ज्योतींष्येतानि तानि नक्षत्राणि यावन्त्येतानि नक्षत्राणि तावन्तो लोमगर्त्ता यावन्तो लोमगर्त्तास्तावन्तः सहस्रसँवत्सरस्य मुहूर्त्ताः ॥ २ ॥ स सहस्रतमे सँवत्सरे । सर्वोऽत्यपवत स यः सोऽत्यपवतायमेव स वायुर्योऽयम्पवतेऽथ यन्तम्पाप्मानमत्यपवतेदन्तच्छरीरङ्क ऽउ तस्मै मनुष्यो यः सहस्रसँवत्सरमवरुन्धीत विद्यया ह वा ऽएवंवित्सहस्रसँवत्सर-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ४. ३ ।

मवरुन्द्धे ॥ ३ ॥ सर्व्वा ऽएवैता ऽइष्टकाः साहस्रीरुपासीत। रात्रिसहस्रेण रात्रिसहस्रेणैकैकाम्परिश्रितः सम्पन्नामुपासीताहःसहस्रेणाहःसहस्रेणैकैकामहर्भाजमर्द्धमाससहस्रेणार्द्धमाससहस्रेणैकैकामर्द्धमासभाजम्माससहस्रेण माससहस्रेणैकैकाम्मासभाजमृतुसहस्रेणऽर्त्तुसहस्रेणैकैकामृतुभाजम्मुहूर्त्तसहस्रेण मुहूर्त्तसहस्रेणैकैकाम्मुहूर्त्तभाजः सँवत्सरसहस्रेण सँवत्सरन्ते य ऽएतमेवमग्निः सँवत्सरेण सम्पन्नं विदुः सहस्रतमीᳫं हास्य ते कलां विदुरथ य ऽएनमेवन्न विदुर्न्न हास्य ते सहस्रतमीञ्चन कलां विदुरथ य ऽएवैवं वेद यो वैतत्कर्म्म कुरुते स हैवैतः सर्वङ्कृत्स्नम्प्राजापत्यमग्निमाप्नोति यम्प्रजापतिराप्नोत्तस्मादेवंवित्तप ऽएव तप्येत यदु ह वा ऽएवंवित्तपस्तप्यत ऽआमैथुनात्सर्व्वः हास्य तत्स्वर्ग्गँल्लोकमभिसम्भवति ॥ ४ ॥ तदेतदृचाऽभ्युक्तम् । 'न मृषाश्रान्तं यदवन्ति देवा'[1] ऽइति न हैवैवं विदुषः किञ्चन मृषाश्रान्तम्भवति तथो हास्यैतत्सर्वन्देवा ऽअवन्ति ॥ ५ ॥ (B)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ व्यष्टिरूपाग्निविषयोपासना ]

अथादेशा ऽउपनिषदाम् । वायुरग्निरिति ह शाकायनिन ऽउपासत ऽआदित्योऽग्निरित्यु हैक ऽआहुरथ ह स्माह श्रौमत्यो वा हालिङ्गवो वा वायुरेवाग्निस्तस्माद्य-

(१) ऋ० सं० अ० २. अ० ४ व० १२ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ४. ४ ।

दैवाद्ध्रुर्ध्रुरुत्तमङ्कर्म्म करोत्यथैतमेवाप्येतीति ॥ १ ॥ शाट्यायनिरु ह स्माह । सँवत्सर ऽएवाग्निस्तस्य वसन्तः शिरो ग्ग्रीष्मो दक्षिणः पक्षो वर्षा ऽउत्तरः शरदृतुर्म्म-ध्यमात्मा हेमन्तशिशिरावृतू पुच्छम्प्रतिष्ठा वागग्निः प्प्राणो वायुश्चक्षुरादित्यो मनश्चन्द्रमाः श्रोत्रन्दिश ऽआपो मिथु-नन्तपः प्रतिष्ठा मासाः पर्वाण्यर्द्धमासा नाड्योऽहो-रात्राणि रजतसुवर्ण्णानि पत्राणि स ऽएवन्देवानप्येतीति सँवत्सरोऽग्निरित्यु हैव विद्यादेतन्मयो भवतीति त्वेव विद्यात् ॥ २ ॥ चेलक ऽउ ह स्माह शाण्डिल्यायनः । इम ऽएव लोकास्तिस्रः स्वयमातृण्णवत्यश्चितयो यजमान-श्चतुर्थी सर्वे कामाः पञ्चमीमाँश्च लोकान्त्संस्कुर्व ऽआ-त्मानञ्च सर्वाँश्च कामानित्येव विद्यादिति ॥ ३ ॥ (C)

चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ त्रयीमयादित्येऽग्न्युपासना ]

तस्य वा ऽएतस्याग्नेः । वागेवोपनिषद्वाचा हि चीयत ऽऋचा यजुषा साम्नेति नु दैव्याऽथ यन्मानुष्या वाचाहेतीदुङ्कुरुतेतीदुङ्कुरुतेति तदु ह तया चीयते ॥ १ ॥ सा वा ऽएषा वाक्त्रेधाविहिता । ऋचो यजूंषि सामानि तेनाग्निस्त्रेधाविहित ऽएतेन हि त्रयेण चीयतेऽप्ययहैत्र-

(C) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा— का० श० १२. ४. ५ ।

रात्रयस्ताः सर्वा ऽअमावास्यायां समवयन्ति स यो हैवं विद्वान्त्स्वयमुपवसथे जुहोति सर्वदा हैवास्य स्वयं हुतम्भवति ॥ ४ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

---

[ आख्यायिकया यज्ञोत्पत्तिकथनम् ]

देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्याः पस्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयञ्जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः ॥ १ ॥ अथ देवाः । अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्प्रजापतिरात्मानम्प्रददौ यज्ञो हैषा मास यज्ञो हि देवानामन्नम् ॥ २ ॥ स देवेभ्य ऽआत्मानम्प्रदाय । अथैतमात्मानः प्रतिमामसृजत यद्यज्ञन्तस्मादाहुः प्प्रजापतिर्यज्ञ ऽइत्यात्मनो ह्येतम्प्रतिमामसृजत ॥ ३ ॥ स ऽएतेन यज्ञेन । देवेभ्य ऽआत्मानन्निरक्रीणीत स यद्व्रतमुपैति यथैव तत्प्रजापतिर्द्देवेभ्य ऽआत्मानम्प्रायच्छदेवमेवैष ऽएतद्देवेभ्य ऽआत्मानम्प्रयच्छति तस्मादु संयत ऽएवैतां रात्रिञ्चिचरिषेद्यथा हविषा चरेदेवं हविर्ह्येष देवानाम्भवति ॥ ४ ॥ अथ यद्यज्ञन्तनुते । यज्ञेनैवैतद्देवेभ्य ऽआत्मानन्निष्क्रीणीते यथैव तत्प्रजापतिर्न्निरक्रीणीतैवमथ यद्धविर्न्निर्वपति हविषैवैतद्यज्ञन्निष्क्रीणाति हविरनुवाक्य-

---

* व्रीहिपिष्टैर्यवपिष्टैर्वा निर्मितः पक्वः पिण्डविशेषः पुरोडाशः ।

यानुवाक्यामवदानेनावदानं याज्ययया याज्यां वषट्कारेण वषट्कारमाहुत्या तस्याहुतिरेवानिष्क्रीता भवति ॥ ५ ॥
स यथाग्रप्रशीर्णो वृक्षः । एवमस्यैष यज्ञो भवत्याहुतिमेवान्वाहार्येण निष्क्रीणाति तद्यदेतद्धीनं यज्ञस्यान्वाहरति तस्मादन्वाहार्यो नामैवमु हास्यैष सर्व एव यज्ञो निष्क्रीतो भवत्येष ह वै यजमानस्यामुष्मिँल्लोक आत्मा भवति यद्यज्ञ स ह सर्वतनूरेव यजमानोऽमुष्मिँल्लोके सम्भवति य एवं विद्वान्निष्क्रीत्या यजते ॥ ६ ॥

प्रथमाध्याये अष्टमं ब्राह्मणम् ॥ ८ ॥

इति प्रथमोऽध्यायः ॥१॥



[ पुरुषजन्मत्रयप्रतिपादनम्, सामिधेनीप्रशंसाच ]

त्रिर्ह वै पुरुषो जायते । एतन्न्वेव मातुश्चाधि पितुश्चाग्रे जायतेऽथ यं यज्ञ उपनमति स यद्यजते तद्द्वितीयञ्जायतेऽथ यत्र म्रियते यत्रैनमग्नावभ्यादधति स यत्ततः सम्भवति तत्तृतीयञ्जायते तस्मात्त्रिः पुरुषो जायत इत्याहुः ॥ १ ॥ ता वा एताः । एकादश सामिधेनीरन्वाह दश वा इमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणाः प्रतिष्ठिता एतावान्वै पुरुषस्तदेनङ्कृत्स्नञ्जनयत्यथ यदूर्द्ध्वः सामिधेनीभ्यः सा प्रतिष्ठा तदेनञ्जनयित्वा प्रतिष्ठापयति ॥ २ ॥ नव प्रसवस्य

(१) सम्यगिध्यते ज्वाल्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्यः 'प्र वो वाजा अभिद्यव, (तै० ब्रा० ३।५।२।१) इत्याद्या एकादश ।

व्याहृतयः । नवेमे पुरुषे प्राणास्तदेनन्द्वितीयञ्जनय-त्याश्श्रावणम्प्रत्याश्श्रावणꣳ सा प्रतिष्ठाथ यद्देवाद꣡ꣳ सृष्टौ जन्मोच्यते तदेनन्तृतीयञ्जनयति पत्नीसंयाजा ऽएव तत्र प्रतिष्ठा ॥ ३ ॥ त्रिर्हि वै पुरुषो जायते । एवमेवैनमेतद्यज्ञात्त्रिर्जनयति तासामेकादशानान्त्रिꣳ प्रथमा-मन्वाह त्रिरुत्तमाम् ॥ ४ ॥ ताꣳ पञ्चदश सामिधेन्न्यꣳ । द्वावाघारौ[1] पञ्च प्रयाजा[2] ऽइडा त्रयोऽनुयाजाꣳ सूक्त-वाकश्च शम्म्योर्वाकश्च तास्त्रयोदशाहुतयोऽथ यद्देवादꣳ पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ ५ ॥ ताꣳ पञ्चदशाहुतयꣳ । तासाम्पञ्चदशानामाहुतीनामेता ऽअनु-वाक्क्या ऽएताꣳ पञ्चदश सामिधेन्न्य ऽएतासामनुवाक्क्या-नामेता याज्या[3] य ऽएवात्र मन्त्रो यो निगदस्तद्याज्यारूप-मेतेनो हास्यैता ऽआहुतयोऽनुवाक्क्यवत्यो भवन्त्येताभिꣳ सामिधेनीभिरेताभिराहुतिभिरेता ऽअनुवाक्क्या[4] याज्यवत्य-श्चाहुतिमत्यश्च[5] भवन्ति ॥ ६ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



---

( १ ) वह्नेः कञ्चिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकमाज्यधारया आहरणमाघारः ।

( २ ) प्रकर्षेण इज्यन्ते देवता एभिस्ते प्रयाजाः "समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहा यजति" ( तै० सं० २।६।१ ) इति प्रयाजाः ।

( ३ ) इज्यते अनयेति व्युत्पत्त्या 'ये यजामहे' इति पूर्विका वषट्कारान्ता हविःप्रदानार्था ऋक् याज्याशब्देनोच्यते ।

( ४ ) पुरः यागात्पूर्वं देवतामनुकलयितुं या ऋक् अनूच्यते सा पुरोऽनुवाक्या अनुवाक्या इति चोच्यते ।

( ५ ) 'वत्त्य०' इति 'ज' पुस्तके ।

[ याज्यानुवाक्ययोश्छन्दोविशेषत्वविधानपूर्वकं स्तवनम् ]

गायत्रीमनुवाक्यामन्वाह । त्रिपदा वै गायत्री त्रय ऽइमे लोका ऽइमानेवैतल्लोकान्देवाः प्रत्यष्ठापयन् ॥ १ ॥ अथ त्रिष्टुभा यजति । चतुष्पदा वै त्रिष्टुप्चतुष्पादाः पशवस्तत्पशूनेवैतदेषु लोकेषु प्रतिष्ठितेषु देवाः प्रत्यष्ठापयन् ॥ २ ॥ द्व्यक्षरो वषट्कारः । द्विपाद्वै पुरुषस्तत्पुरुषमेवैतद्द्विपादमेषु पशुषु प्रतिष्ठितेषु देवाः प्रत्यष्ठापयन् ॥३॥ सोऽयन्द्विपात्पुरुषः । पशुषु प्रतिष्ठित ऽएवमेवैष ऽएतल्लोकान्प्रतिष्ठापयति लोकेषु प्रतिष्ठितेषु पशून्प्रतिष्ठापयति पशुषु प्रतिष्ठितेष्वात्मानम्प्रतिष्ठापयत्त्येवमेष पुरुषः पशुषु प्रतिष्ठितो य ऽएवं विद्वान्यजते ॥ ४ ॥ अथ यद्वषट्कृते जुहोति । एष वै वषट्कारो य ऽएष तपति स ऽएष मृत्युस्तदेनमुपरिष्टान्मृत्योः संस्करोति तदेनमतो जनयति स ऽएतम्मृत्युमतिमुच्यते यज्ञो वा ऽअस्यात्मा भवति तद्यज्ञ ऽएव भूत्वैतन्मृत्युमतिमुच्यत ऽएतेनो हास्य सर्वे यज्ञकृतव ऽएतम्मृत्युमतिमुक्ताः ॥ ५ ॥ * अथ यामेतामाहुतिञ्जुहोति । एषा ह वा ऽअस्याहुतिरमुष्मिँल्लोक ऽआत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैनमेषाहुतिरेतस्य पृष्ठे सत्याह्वयत्येह्यहं वै त ऽइहात्मास्मीति तद्यदाह्वयति तस्मादाहुतिर्नाम ॥ ६ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



* शतम् ५६०० ।

[ आधारौ स्तोतुमाख्यायिकया तत्सृष्टिप्रतिपादनम् ]

ब्रह्म वा ऽइदमग्र ऽआसीत् । तद्देवानसृजत तद्देवान्त्सृष्ट्वैषु लोकेषु व्यारोहयदस्मिन्नेव लोकेऽग्निं वायुमन्तरिक्षे दिव्येव सूर्यम् ॥ १ ॥ अथ येऽत ऽऊर्द्ध्वा लोकाः । तद्या ऽअत ऽऊर्द्ध्वा देवतास्तेषु ता देवता व्यारोहयत्स यथा हैवेम ऽआविर्ल्लोका ऽइमाश्च देवता ऽएवमु हैव त ऽआविर्ल्लोकास्ताश्च देवता येषु ता देवता व्यारोहयत् ॥ २ ॥ अथ ब्रह्मैव परार्द्धमगच्छत् । तत्परार्द्धं गत्वैक्षत कथन्न्विमाँल्लोकान्प्रत्यवेयामिति तद्द्वाभ्यामेव प्रत्यवैद्रूपेण चैव नाम्ना च स यस्य कस्य च नामास्ति तन्नाम यस्यो ऽअपि नाम नास्ति यद्वेद रूपेणेदꣳ रूपमिति तद्रूपमेतावद्वा ऽइदं यावद्रूपञ्चैव नाम च ॥ ३ ॥ ते हैते ब्रह्मणो महती ऽअभ्वे । स यो हैते ब्रह्मणो महती ऽअभ्वे वेद महद्धैवाभ्वम्भवति ॥ ४ ॥ ते हैते ब्रह्मणो महती यक्षे । स यो हैते ब्रह्मणो महती यक्षे वेद महद्धैव यक्षम्भवति तयोरन्यतरज्ज्यायो रूपमेव यद्ध्यपि नाम रूपमेव तत्स यो हैतयोर्ज्यायो वेद ज्यायान्ह तस्माद्भवति यस्माज्ज्यायान्बुभूषति ॥ ५ ॥ मर्त्या ह वा ऽअग्रे देवा ऽआसुः । स यदैव ते ब्रह्मणापुरथामृता ऽआसुः स यम्मनस ऽआधारयति मनो वै रूपम्मनसा हि वेदेदꣳ रूपमिति तेन रूपमाप्नोत्यथ यं वाच ऽआधारयति वाग्वै नाम वाचा हि नाम गृह्णाति तेनो नामाप्नोत्येतावद्वा ऽइदꣳ सर्वं यावद्रूपञ्चैव

नाम च तत्सर्वमाप्नोति सर्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतम्भवत्यक्षय्यो लोकः ॥ ६ ॥ तद्वा ऽअद ऽआग्नेय्यामिष्टा ऽउच्यते । यथा तदृषिभ्यो यज्ञः प्प्रारोचत तं य्यथातन्न्वत तद्यज्ञन्तन्न्वानानृषीन्गन्धर्वा ऽउपनिषेदुस्ते ह स्म सन्निदधतीदं वा ऽअत्यरीरिचन्निदमूनमक्रन्निति स यदेषां य्यज्ञः सन्तस्थेऽथैनाँस्तद्दर्शयाञ्चक्रुरिदं वा ऽअत्यरीरिचतेदमूनमकर्त्तेति ॥ ७ ॥ स यदतिरेचयाञ्चक्रुः । यथा गिरिरेवन्तदासाथ यदूनञ्चक्रुर्य्यथा श्वभ्राः प्प्रदरा एवन्तदास ॥ ८ ॥ स यत्र शंय्योराह । तदभिमृशति '[१]यज्ञ नमश्च त ऽउप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्वे'ति स यदतिरेचयति तन्नमस्कारेण शमयत्यथ यदूनङ्करोत्युप चेति तेन तदुन्न्यूनम्भवति यज्ञस्य शिवे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्न्यूनातिरिक्तन्तच्छिवन्तेन तदुभयꣳ शमयति स्विष्टे मे सन्तिष्ठस्वेति यद्वै यज्ञस्याऽन्यूनातिरिक्तन्तत्स्विष्टन्तेनो तदुभयꣳ शमयत्त्येवमु हास्यैतेन यज्ञेनान्न्यूनातिरिक्तेनैवेष्टम्भवति य ऽएवं विद्वानेवमभिमृशति तस्मादेवमेवाभिमृशेत्ते ह ते गन्धर्वा ऽआसुः शूर्प्पं य्यवमान्कृषिरुद्दालवान्धानान्तर्वान् ॥ ९ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



( १ ) शु० य० सं० अ० २ क० १९ ।

[ दर्शपूर्ण्णमासनामात्मना आधारस्तुतिः, अधिदैवमध्यात्मभेदेन दर्शपूर्णमासप्रतिपादनञ्च ]

एष वै पूर्ण्णमाः । य ऽएष तपत्यहरहर्ह्येवैष पूर्ण्णोऽथैष ऽएव दर्शो यच्चन्द्रमा ददृश ऽइव ह्येषः ॥ १ ॥ अथो ऽइतरथाहुः । एष ऽएव पूर्ण्णमा यच्चन्द्रमा ऽएतस्य ह्यनु पूरणम्पौर्ण्णमासीत्याचक्षतेऽथैष ऽएव दर्शो य एष तपति ददृश ऽइव ह्येषः ॥ २ ॥ इयमेव पूर्ण्णमाः । पूर्ण्णेव हीयमसावेव द्यौर्द्दर्शो ददृश ऽइव ह्यसौ द्यौः ॥ ३ ॥ रात्रिरेव पूर्ण्णमाः । पूर्ण्णेव हीयꣳ रात्रिरहरेव दर्शो ददृश ऽइव हीदमहरेषा नु देवत्रा दर्शपूर्ण्णमासयोर्म्मीमाꣳसा ॥ ४ ॥ अथाध्यात्मम् । उदान ऽएव पूर्ण्णमा ऽउदानेन ह्ययम्पुरुषः पूर्य्यत ऽइव प्प्राण ऽएव दर्शो ददृश ऽइव ह्ययम्प्राणस्तदेतावन्नादश्चान्नप्प्रदश्च दर्शपूर्ण्णमासौ ॥ ५ ॥ प्राण ऽएवान्नादः । प्राणेन हीदमन्नमद्यत ऽउदान ऽएवान्नप्प्रद ऽउदानेन हीदमन्नम्प्रदीयते स यो हैतावन्नादश्चान्नप्प्रदश्च दर्शपूर्ण्णमासौ वेदान्नादो हैव भवति प्प्र हास्मा ऽअन्नाद्यन्दीयते ॥ ६ ॥ मन ऽएव पूर्ण्णमाः । पूर्ण्णमिव हीदम्मनो वागेव दर्शो ददृश ऽइव हीयं वाक्तदेतावध्यात्मम्प्रत्यक्षन्दर्शपूर्ण्णमासौ स यदुपवसथे व्व्रतोपायनीयमश्नाति तेनैतावध्यात्मम्प्रत्यक्षन्दर्शपूर्ण्णमासौ प्प्रीणाति यज्ञेन प्प्रातर्हैवो ॥७॥ तदाहुः । यन्न पूर्ण्णमासायेति हविर्ग्गृह्यते न दर्शायेति हविर्ग्गृह्यते न पूर्ण्णमासायानुब्ब्रूहि न दर्शायानुब्ब्रूहि न पूर्ण्णमासं यज न दर्श

ऽयजेत्त्यथ केनास्य दर्शपूर्ण्णमासाविष्टौ भवत ऽइति स यम्मनस ऽआघारयति मनो वै पूर्ण्णमास्तेन पूर्ण्णमासं ऽयजत्यथ यं वाच ऽआघारयति वाग्वै दर्शस्तेनो दर्शं ऽयजत्येतेनो हास्य दर्शपूर्ण्णमासाविष्टौ भवतः ॥ ८ ॥ तद्धैके । चरू निर्व्वपन्ति पौर्ण्णमास्याᳬ सरस्वतेऽमावास्यायाᳬ सरस्वत्त्या ऽएतत्प्रत्यक्षन्दर्शपूर्ण्णमासौ यजामह ऽइति व्वदन्तस्तदु तथा न कुर्य्यान्मनो वै सरस्वान्वाक्सरस्वती स यदेवैतावाघारावाघारयति तदेवास्य दर्शपूर्ण्णमासाविष्टौ भवतस्तस्मादेतौ चरू न निर्व्वपेत् ॥ ९ ॥ तदाहुः । आगूर्त्ती वा ऽएष भवति यो दर्शपूर्ण्णमासाभ्यां ऽयजते पौर्ण्णमासेन हीष्ट्वा व्वेदामावास्येन यक्ष्य ऽइत्त्यामावास्येनेष्ट्वा व्वेद पुनः पौर्ण्णमासेन यक्ष्य ऽइति स ऽआगूर्त्त्यैवामुँल्लोकमेति यदामुँल्लोकमेति कथमनागूर्त्ती भवतीति स यदेवैता ऽउभयत्राघारावाघारयति तदेवास्य दर्शपूर्ण्णमासौ सन्तिष्ठेते स सᳬस्थितयोरेव दर्शपूर्ण्णमासयोरथामुँल्लोकमेति तथानागूर्त्ती भवति ॥ १० ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ ११९ ॥

---

[ दर्शपूर्णमासयोरश्वमेधात्मना स्तुतिः ]

अपि ह वा ऽएतर्हि । देवेभ्योऽश्वमेधमालभन्ते तदाहुः प्राकृतोऽश्वमेध ऽइतीतर ऽइन्नूनः स तद्वा ऽएष

ऽएवाश्श्वमेधो यच्चन्द्रमाः ॥ १ ॥ तदाहुः । पदे पदेऽश्श्वस्य मेद्ध्यस्याहुतिञ्जुह्वतीति स यत्सायम्प्रातरग्निहोत्रञ्जुहोति द्वे सायमाहुती जुहोती द्वे प्प्रातस्ताश्चतस्र ऽआहुतयश्चतुष्प्पाद्वा ऽअश्श्वस्तदस्य पदे पद ऽएवाहुतिर्हुता भवति ॥ २ ॥ तदाहुः । विवृत्तेऽश्श्वस्येष्टिन्निर्वपतीत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष ऽएताᳬ रात्रिन्न पुरस्तान्न पश्चाद्ददृशे तदिमँल्लोकमागच्छति सोऽस्मिमँल्लोके विवर्त्तते ॥ ३ ॥ स यदामांवास्येन यजते । विवृत्त ऽएवास्यैतदिष्टिन्निर्वपत्यथ यत्पौर्ण्णमासेन यजतेऽश्श्वमेधमेवैतदालभते तमालब्भ्य देवेब्भ्यः प्प्रयच्छति सँवत्सरे वा ऽइतरमश्श्वमेधमालभन्त ऽएष वै मासः परिप्प्लवमानः सँवत्सरङ्करोति तदस्य सँवत्सरे सँवत्सर ऽएवाश्श्वमेध ऽआलब्धो भवति ॥ ४ ॥ तं वा ऽएतम् । मासि मास्येवाश्श्वमेधमालभन्ते स यो हैवं विद्वानग्निहोत्रञ्च जुहोति दर्शपूर्ण्णमासाब्भ्याञ्च यजते मासि मासि हैवास्याश्श्वमेधेनेष्ट्टम्भवत्त्येतदु हास्याग्निहोत्रञ्च दर्शपूर्ण्णमासौ चाश्श्वमेधमभिसम्पद्येते ॥ ५ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रणीतादीनां यज्ञशरीरावयवत्वेन सम्पत्तिकथनम् ]

शिरो ह वा ऽएतद्यज्ञस्य यत्प्रणीताः । स यत्प्रणीताः प्प्रणयति शिर ऽएवैतद्यज्ञस्य संस्करोति स

विद्याच्छिर ऽएव म ऽएतत्संस्क्रियत ऽइति ॥ १ ॥ प्राण ऽएवास्येद्ध्मः । प्प्राणेन हीदꣳ सर्व्वमिद्धं ऽयत्प्राणभृन्निमिषद्यदेजति स विद्यादहमेवैष ऽइद्ध्म ऽइति ॥ २ ॥ अनूकमेवास्य सामिधेन्न्यः । तस्म्मात्ता ऽब्ब्रूयात्सन्तन्न्वन्निव मेऽनुब्ब्रूहीति सन्ततमिव हीदमनूकम्मनश्च्चैवास्य वाक्च्चाघारौ सरस्वाँश्च्च सरस्वती च स विद्यान्मनश्च्चैव मे वाक्च्चाघारौ सरस्वाँश्च सरस्वती चेति ॥ ३ ॥ पञ्च प्प्रयाजाः । इम ऽएवास्य ते शीर्षण्ण्याः पञ्च प्प्राणा मुखमेवास्य प्प्रथमः प्प्रयाजो दक्षिणा नासिका द्वितीयः सव्व्या नासिका तृतीयो दक्षिणः कर्ण्णश्च्चतुर्थः सव्व्यः कर्ण्णः पञ्चमोऽथ यच्चतुर्त्थे प्प्रयाजे समानयति तस्म्मादिदꣳ श्रोत्रमन्तरतः सन्तृण्णञ्चक्षुषी ऽआज्यभागौ स विद्याच्चक्षुषी ऽएव म ऽएताविति ॥ ४ ॥ अथ य ऽआग्न्नेयः पुरोडाशः । अयमेवास्य स दक्षिणोऽर्द्धो हृदयमेवास्योपाꣳशुयाजः स यत्तेनोपाꣳशु चरन्ति तस्म्मादिदङ्गुहेव हृदयम् ॥ ५ ॥ अथ योऽग्नीषोमीयः पुरोडाशः । अयमेवास्य स ऽउत्तरोऽर्द्ध ऽऐन्द्रं वा सान्नाऽय्यमन्तराꣳ समेवास्य स्विष्टकृद्दिषम्प्राशित्रम् ॥ ६ ॥ स यत्प्राशित्रमवद्यति । यथैव तत्प्रजापतेराविद्धन्निरकृन्तन्नेवमेवैतस्यैतद्यद्वेष्ट्टितं ऽयद्ग्रथितं ऽयद्दरुण्ण्यन्तन्निष्क्कृन्तन्ति स विद्याद्यथैव तत्प्रजापतेराविद्धन्निरकृन्तन्नेवमेव म ऽइदं ऽयद्वेष्ट्टितं ऽयद्ग्रथितं ऽयद्दरुण्ण्यन्तन्निष्क्कृन्तन्तीति ॥ ७ ॥ उदरमेवास्येडा ।

तद्यथैवाद ऽइडायाᳬं समवद्यन्त्येवमेवेदं विश्वरूपमन्न-मुदरे समवधीयते ॥ ८ ॥ त्रयोऽनुयाजाः । इम ऽएवास्य तेऽवाञ्चस्त्रयः प्प्राणा बाहू ऽएवास्य सूक्तवाकश्च शंय्योर्वाकश्च चत्वारः पत्नीसंय्याजाश्चतस्रो वै प्प्रतिष्ठा ऽऊरू द्वावष्ठीवन्तौ द्वौ पादावेवास्य समिष्टयजुः ॥ ९ ॥ ता ऽएकविᳬंशतिराहुतयः । द्वावाघारौ पञ्च प्प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषोमीय ऽउपांᳬशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनुयाजाः सूक्तवाकश्च शंय्योर्वाकश्चाथ यद्देवादः पत्नीसंय्याजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ १० ॥ ता ऽएकविᳬंशतिराहुतयः । द्वादश वै मासाः सँवत्सरस्य पञ्चऽर्त्तवस्त्रयो लोकास्तद्विᳬंशतिरेष ऽएवैकविᳬंशो य ऽएष तपति सैषा गतिरेषा प्प्रतिष्ठा तदेतांगतिमेताम्प्रतिष्ठाङ्गच्छति ॥ ११ ॥ तद्ध स्मैतदारुणिराह । अर्द्धमासशो वा ऽअहममुनादित्येन स लोको भवामि तामहन्दर्शपूर्णमासयोः सम्पदं वेदेति ॥ ११ ॥ तदाहुः । आत्मयाजी श्रेयाँ३न्देवयाजी३ इत्यात्मयाजीति ह ब्रूयात्स ह वा ऽआत्मयाजी यो वेदेदम्मेऽनेनाङ्गᳬं संस्क्रियत ऽइदम्मेऽनेनाङ्गमुपधीयत ऽइति स यथाहिस्त्वचो निर्म्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्म्मुच्यते स ऽऋङ्मयो यजुर्म्मयः साममय ऽआहुतिमयः स्वर्ग्गँल्लोकमभिसम्भवति ॥ १३ ॥ अथ ह स देवयाजी यो वेद । देवानेवाहमिदं यजे देवान्त्सपर्य्यामीति स यथा श्रेयसे

पापीयान्बलिᳬ हरेद्वैश्यो वा राज्ञे बलिᳬ हरेदेवᳬ स स ह न तावन्तँल्लोकञ्जयति यावन्तमितरᳬ ॥ १४ ॥

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



[ दर्शपूर्णमासयागस्य विशिष्टफलसाधनताप्रतिपादनम् ]

सँवत्सरो यज्ञः । स यो ह वै सँवत्सरो यज्ञ ऽइति वेदान्ते हैवास्य सँवत्सरस्येष्टम्भवत्यथो यत्किञ्च सँवत्सरे क्रियते सर्वᳬ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ १ ॥ ऋतव ऽऋत्विजᳬ । स यो ह वा ऽऋतव ऽऋत्विज ऽइति वेदान्ते हैवास्यऽर्तूनामिष्टम्भवत्यथो यत्किञ्चऽर्त्तुषु क्रियते सर्वᳬ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ २ ॥ मासा हवीᳬषि । स यो ह वै मासा हवीᳬषीति वेदान्ते हैवास्य मासानामिष्टम्भवत्यथो यत्किञ्च मासेषु क्रियते सर्वᳬ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ३ ॥ अर्द्धमासा हविष्पात्राणि । स यो ह वा ऽअर्द्धमासा हविष्पात्राणीति वेदान्ते हैवास्यार्द्धमासानामिष्टम्भवत्यथो यत्किञ्चार्द्धमासेषु क्रियते सर्वᳬ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ४ ॥ अहोरात्रे परिवेष्ट्री । स यो ह वा ऽअहोरात्रे परिवेष्ट्री ऽइति वेदान्ते हैवास्याहोरात्रयोरिष्टम्भवत्यथो यत्किञ्चाहोरात्रयोᳬ क्रियते सर्वᳬ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ५ ॥ इयमेव प्रथमा सामिधेनी । अग्निर्द्वितीया वायु-

स्तृतीयान्तरिक्षञ्चतुर्थी द्यौष्पञ्चम्म्यादित्यः षष्ठी चन्द्रमाः सप्तमी मनोऽष्टमी वाङ्नवमी तपो दशमी ब्रह्मैकादश्येता हि वा ऽइदꣳ सर्वꣳ समिन्धत ऽएताभिरिदꣳ सर्वꣳ समिद्धन्तस्मात्सामिधेन्यो नाम ॥ ६ ॥ स वै त्रिः प्प्रथमामन्वाह । स यत्प्रथममन्वाह प्प्राचीन्तेन दिशञ्जयति यद्द्वितीयन्दक्षिणान्तेन दिशञ्जयति यत्तृतीयमूर्द्ध्वामेव तेन दिशञ्जयति ॥ ७ ॥ त्रिर्वैवोत्तमामन्वाह । स यत्प्रथममन्वाह प्प्रतीचीन्तेन दिशञ्जयति यद्द्वितीयमुदीचीन्तेन दिशञ्जयति यत्तृतीयमिमामेव तेन प्प्रतिष्ठाञ्जयत्येवमु हाभिरिमाँल्लोकाञ्जयत्येता दिशः ॥ ८ ॥ ऋतमेव पूर्वं ऽआघारः । सत्यमुत्तरोऽव ह वा ऽऋतसत्ये रुन्द्धेऽथो यत्किञ्चऽर्त्तसत्याभ्याञ्जय्यꣳ सर्वꣳ हैव तज्जयति ॥ ९ ॥ त्विषिरेव प्प्रथमः प्प्रयाजः । अपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसञ्चतुर्थोऽन्नाद्यम्पञ्चमः ॥ १० ॥ स प्प्रथमम्प्रयाजमनुमन्त्रयेत । त्विषिमान्भूयासमित्यपचितिमान्भूयासमिति द्वितीयं यशस्वी भूयासमिति तृतीयम्ब्रह्मवर्चसी भूयासमिति चतुर्थमन्नादो भूयासमिति पञ्चमन्त्विषिमान्ह वा ऽअपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नादो भवति य ऽएवमेतद्वेद ॥ ११ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः कꣳ स्विद्देवापरीषु महनागमिवाभिसꣳसारन्दिदृक्षितारो य ऽएवमेतत्प्रयाजानां यशो वेदितेति ॥ १२ ॥ भूतमेव पूर्वं ऽआज्यभागः । भविष्यदुत्तरोऽव ह वै भूतञ्च भविष्यच्च

रुन्द्धेऽथो यत्किञ्च भूतेन च भविष्यता च जय्यꣳ
सर्वꣳ हैव तज्जयति ॥ १३ ॥ ब्रह्माग्नेयः पुरोडाशः ।
स यो ह वै ब्ब्रह्माग्नेयः पुरोडाश ऽइति वेदाव ह ब्ब्रह्म
रुन्द्धेऽथो यत्किञ्च ब्ब्रह्मणा जय्यꣳ सर्वꣳ हैव तज्जयति
॥ १४ ॥ क्षत्रमुपाꣳशुयाजः । स यो ह वै क्षत्रमुपाꣳ-
शुयाज ऽइति व्वेदाव ह क्षत्रꣳ रुन्द्धेऽथो यत्किञ्च क्षत्रेण
जय्यꣳ सर्वꣳ हैव तज्जयति तद्यदुपाꣳशुयाजङ्कुर्वन्त्येके
नैके तस्मादुच्चैश्चोपाꣳशु च क्षत्रायाचक्षते ॥ १५ ॥
व्विडुत्तरः पुरोडाशः । स यो ह वै व्विडुत्तरः पुरो-
डाश ऽइति व्वेदाव ह व्विशꣳ रुन्द्धेऽथो यत्किञ्च
व्विशा जय्यꣳ सर्वꣳ हैव तज्जयति तद्यदाग्नेयश्च पुरोडाश
ऽउपाꣳशुयाजश्च पूर्वौ भवतस्तस्मादुभे ब्ब्रह्म च क्षत्रञ्च
व्विशि प्प्रतिष्ठिते ॥ १६ ॥ राष्ट्रꣳ सान्नाय्यम् । स यो ह व्वै
राष्ट्रꣳ सान्नाय्यमिति व्वेदाव ह राष्ट्रꣳ रुन्द्धेऽथो यत्किञ्च
राष्ट्रेण जय्यꣳ सर्वꣳ हैव तज्जयति तद्यत्सन्नयन्त्येके
नैके तस्माद्राष्ट्रꣳ सच्चैति व्वि च ॥ १७ ॥ तपः स्विष्ट-
कृत् । स यो ह वै तपः स्विष्टकृदिति व्वेदाव ह तपो रुन्द्धेऽ-
थो यत्किञ्च तपसा जय्यꣳ सर्वꣳ हैव तज्जयति
॥ १८ ॥ लोकः प्प्राशित्रम् । स यो ह वै लोकः प्प्राशि-
त्रमिति व्वेदाव ह लोकꣳ रुन्द्धेऽथो यत्किञ्च लोकेन जय्यꣳ
सर्वꣳ हैव तज्जयति नो ह लवेन लोकाद्व्यथते लवेन ह
वा ऽअमुष्मिँल्लोके लोकाद्व्यथन्तेऽथ य ऽएवं व्वेद न ह
बहु चन पापङ्कृत्वा लोकाद्व्यथते ॥ १९ ॥ श्रद्धेडा ।

स यो ह वै इश्रद्धेडेति वेदाव ह इश्रद्धाᳬ रुन्द्धेऽथो यत्किञ्च इश्रद्धया जय्यᳬ सर्व्वᳬ हैव तज्जयति ॥ २० ॥ अशनिरेव प्प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीय ऽउल्कुषी तृतीयः ॥२१॥ स प्प्रथममनुयाजमनुमन्त्रयेत । अशन्न्यमुञ्जहीति यन्द्विष्ष्याद्ध्रादुन्न्यमुञ्जहीति द्वितीयमुल्कुष्ष्यमुञ्जहीति तृतीयम् ॥ २२ ॥ स य ऽएष क्षिप्प्रम्म्रियते । अशनिर्ह तमनुयाजो हन्त्यथ यो विस्रवन्न्मिइश्र ऽइव ह्रादुनिर्ह तमनुयाजो हन्त्यथ योऽभ्युष्टमिइश्र ऽइवोल्मकुषी ह तमनुयाजो हन्ति ॥ २३ ॥ सैषा यज्ञमेनिः । एतया वै मेन्न्या देवा ऽअसुरान्न्पराभावयाञ्चक्रुस्तथो ऽएवैवंविद्यजमानः पाप्प्मानन्द्विषन्तम्भ्रातृव्व्यम्पराभावयति ॥ २४ ॥ स यदनुयाजान्तो यज्ञः स्यात् । अशन्न्यन्तः स्याद्ध्रादुन्न्यन्त ऽउल्कुष्ष्यन्तस्तस्माद्वै देवानां यज्ञ ऽइडान्तो वैव शंय्ववन्तो वा ॥ २५ ॥ प्रयाजैर्वै देवाः । स्वर्ग्गँल्लोकमायँस्तानसुरा ऽअन्न्वाजिगाᳬसँस्ताननुयाजैः प्प्रत्यौहँस्तद्यदनुयाजा ऽइज्ज्यन्ते पाप्प्मानमेव तद्द्विषन्तम्भ्रातृव्व्यं यजमानः प्प्रत्त्यूहति ॥ २६ ॥ प्राणा वै प्प्रयाजाः । अपाना ऽअनुयाजास्तस्मात्प्रयाजाः प्प्राञ्चो हूयन्ते तद्धि प्प्राणरूपम्प्रत्त्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्ण्णमासयोरुपसदो यदनुयाजास्तस्मात्त ऽउपसद्रूपेण प्प्रत्त्यञ्चो हूयन्ते ॥ २७ ॥ सᳬस्था सूक्तवाकः । स यो ह वै सᳬस्था सूक्तवाक ऽइति वेदाव ह सᳬस्थाᳬ रुन्द्धेऽथो यत्किञ्च सᳬस्थया जय्यᳬ सर्व्वᳬ हैव तज्जयति गच्छति व्वयसः सᳬस्थाम् ॥ २८ ॥

प्रतिष्ठा शँय्योर्वाकः । स यो ह वै प्रतिष्ठा शँय्योर्वाक इति वेदाव ह प्रतिष्ठाꣳ रुन्द्धेऽथो यत्किञ्च प्रतिष्ठया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति प्रतिष्ठाम् ॥ २९ ॥ ते देवाः । एतान्पत्नीसँय्याजान्पश्चात्पर्य्यौहन्त मिथुनमेवैतदुपरिष्टाददधत प्रजात्यै तद्यत्पत्नीसंय्याजा इज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्रजात्यै देवानाꣳ ह वै प्रजातिमनु प्रजायते मिथुनेन मिथुनेन ह प्रजायते य एवमेतद्वेद ॥ ३० ॥ अन्नꣳ समिष्टयजुः । स यो ह वा अन्नꣳ समिष्टयजुरिति वेदाव हान्नꣳ रुन्द्धेऽथो यत्किञ्चान्नेन जय्यꣳ सर्वꣳ हैव तज्जयति ॥ ३१ ॥ सँवत्सरो यजमानः । तमृतवो याजयन्ति वसन्त आग्नीध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपङ्ग्रीष्मोऽध्वर्य्युस्तप्त इव वै ग्रीष्मस्तप्तमिवाध्वर्य्युर्न्निष्क्रामति वर्षा उद्गाता तस्माद्यदा बलवद्वर्षति साम्न इवोपब्दिः क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यम्पच्यते ब्रह्मण्यवत्यः प्रजा इत्याहुर्हेमन्तो होता तस्माद्धेमन्न्वषट्कृताः पशवः सीदन्त्येता ह वा एनन्देवता याजयन्ति स यद्येनमैषावीरा याजयेयुरेता एव देवता मनसा ध्यायेदेता हैवैनन्देवता याजयन्ति ॥ ३२ ॥ अथ हैषैव तुला । यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत तुलायाꣳ ह वा अमुष्मिँल्लोक आदधति यतरद्यꣳस्यति तदन्वेष्यति यदि साधु वासाधु वेत्यथ य एवं वेदास्मिन्हैव लोके

तुलामारोहत्यत्यमुष्मिँल्लोके तुलाधानम्मुच्यते साधुकृत्या हैवास्य यच्छति न पापकृत्या ॥ ३३ ॥ [ अर्धे प्रपाठकः ५२ ]

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अग्निहोत्रावयवोपासनाप्रकारः ]

वाग्घ वा ऽएतस्याग्निहोत्रस्याग्निहोत्री * । मन ऽएव वत्सस्तदिदम्मनश्च वाक्च समानमेव सन्नानेव तस्मात्समान्न्या रज्ज्वा वत्सञ्च मातरञ्चाभिदधति तेज ऽएव श्रद्धा सत्यमाज्यम् ॥ १ ॥ तद्धैतज्जनको वैदेहः । याज्ञवल्क्यम्पप्रच्छ वेत्थाग्निहोत्रं याज्ञवल्क्या३ ऽइति वेद सम्राडिति किमिति पय ऽएवेति ॥ २ ॥ यत्पयो न स्यात् । केन जुहुया ऽइति व्रीहियवाभ्यामिति यद्व्रीहियवौ न स्याता-ङ्केन जुहुया ऽइति या ऽअन्या ऽओषधय ऽइति यदन्न्या ऽओषधयो न स्युः केन जुहुया ऽइति या ऽआरण्या ऽओषधय ऽइति यदारण्या ऽओषधयो न स्युः केन जुहुया ऽइति वानस्पत्येनेति यद्वानस्पत्यन्न स्यात्केन जुहुया ऽइत्यद्भिरिति यदापो न स्युः केन जुहुया ऽइति ॥ ३ ॥ स होवाच । न वा ऽइह तर्हि किञ्चनासीदथैतदहूयतैव सत्यꣳ श्रद्धायामिति वेत्थाग्निहोत्रं याज्ञवल्क्य धेनुशत-न्ददामीति होवाच ॥ ४ ॥ तदप्येते श्लोकाः । किꣳ

* अग्निहोत्रमिति कर्मनामधेयम् । अग्नये होत्रं होमोऽस्मिन्निति तद्व्युत्पत्तिः । उपचारात् तदर्थं पयोऽप्यग्निहोत्रम्, तस्य दोग्ध्री धेनुरप्यग्निहोत्रीत्युच्यते ।

स्विद्विद्वान्प्रवसत्त्यग्निहोत्त्री गृहेब्भ्यः कथꣳ स्विदस्य काव्व्यङ्कथꣳ सन्ततो ऽअग्निभिरिति कथꣳ स्विदस्यानपप्प्रोषितम्भवतीत्त्येवैतदाह ॥ ५ ॥ यो जविष्ठो भुवनेषु । स विद्वान्प्रवसन्न्विदे तथा तदस्य काव्यन्तथा सन्ततो ऽअग्निभिरिति मन ऽएवैतदाह मनसैवास्यानपप्प्रोषितम्भवतीति ॥ ६ ॥ यत्त्स दूरम्परेत्त्य । अथ तत्र प्प्रमाद्यति कस्म्मिन्त्सास्य हुताहुतिर्ग्गृहे यामस्य जुह्वतीति यत्त्स दूरम्परेत्त्याथ तत्र प्प्रमाद्यति कस्म्मिन्नस्य साहुतिर्हुता भवतीत्त्येवैतदाह ॥ ७ ॥ यो जागार भुवनेषु । विश्श्वा जातानि योऽबिभः तस्म्मिन्त्सास्य हुताहुतिर्ग्गृहे यामस्य जुह्वतीति प्प्राणमेवैतदाह तस्म्मादाहुः प्प्राण ऽएवाग्निहोत्रमिति ॥ ८ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अग्निहोत्रे मिथुनत्वदर्शनम् ]

यो ह वा ऽअग्निहोत्त्रे । षण्मिथुनानि वेद मिथुनेन मिथुनेन ह प्प्रजायते सर्वाभिः प्प्रजातिभिर्य्यजमानश्च पत्त्नी च तदेकम्मिथुनन्तस्म्मादस्य पत्त्नीवदग्निहोत्रꣳ स्यादेतन्मिथुनमुपाप्प्नवानीति वत्त्सश्चाग्निहोत्त्री च तदेकम्मिथुनन्तस्म्मादस्य पुँवत्त्साग्निहोत्त्री स्यादेतन्मिथुनमुपाप्प्नवानीति स्थाली चाङ्गाराश्च तदेकम्मिथुनꣳ स्रुक्च स्रुवश्च तदेकम्मिथुनमाहवनीयश्च समिच्च तदेकम्मिथुनमाहुतिश्च स्वाहाकारश्च तदेकम्मिथुनमेतानि ह वा

ऽअग्निहोत्रे षण्मिथुनानि तानि य ऽएवं वेद मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः ॥ १ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ प्रसङ्गतः आख्यायिकया ब्रह्मचारिधर्मप्रतिपादनम् ]

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग ऽइति यामेव रात्रिꣳ समिधन्नाहराता ऽइति तस्माद्यां रात्रिम्ब्रह्मचारी समिधन्नाहरत्यायुष ऽएव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ १ ॥ दीर्घसत्रं वा ऽएष ऽउपैति । यो ब्रह्मचर्यमुपैति स यामुपयन्त्समिधमादधाति सा प्रायणीया याꣳ स्नास्यन्त्सोदयनीयाथ या ऽअन्तरेण सत्या ऽएवास्य ता ब्राह्मणो ब्रह्मचर्यमुपयन् ॥ २ ॥ चतुर्धा भूतानि प्रविशति । अग्निम्पदा मृत्युम्पदाचार्यम्पदात्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥ ३ ॥ स यदग्नये समिधमाहरति । य ऽएवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ४ ॥ अथ यदात्मानन्दरिद्रीकृत्येव । अह्रीर्भूत्वा भिक्षते य ऽएवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ५ ॥ अथ यदाचार्यवचसङ्करोति । यदाचार्याय कर्म्म करोति य ऽएवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते

स ऽएनमाविशति ॥ ६ ॥ न ह वै स्नात्वा भिक्षेत। अप ह वै स्नात्वा भिक्षाञ्जयत्यप ज्ञातीनामशनायामप पितृणाꣳ स ऽएवं विद्वान्यस्या ऽएव भूयिष्ठꣳ श्लाघेत ताम्भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्यामभिक्षितव्यान्न विन्देदुपि स्वामेवाचार्यजायाम्भिक्षेताथो स्वाम्मातरन्नैनꣳ सप्तम्यभिक्षितातीयात्तमेवं विद्वाꣳसमेवञ्चरन्तꣳ सर्वे वेदा ऽआविशन्ति यथा ह वा ऽअग्निः समिद्धो रोचत ऽएवꣳ ह वै स स्नात्वा रोचते य ऽएवं विद्वान्ब्रह्मचर्यञ्चरति ॥ ७ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ आख्यायिकया दर्शपूर्णमासयोः सर्वोत्पत्तिहेतुत्वकथनम् ]

उद्दालको हारुणिः। उदीच्यान्वृतो धावयाञ्चकार तस्य निष्क ऽउपाहित ऽआसैतद्ध स्म वै तत्पूर्वेषां वृतानान्धावयतामेकधनमुपाहितम्भवत्युपवल्हाय बिभ्यतान्ताꣳहोदीच्यानाम्ब्राह्मणान्भीर्विवेद ॥ १ ॥ कौरुपाञ्चालो वा ऽअयम्ब्रह्मा ब्रह्मपुत्रः। यद्वै नोऽयमर्द्धन्न पर्यादुदीत हन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति केन वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायन ऽआस ॥ २ ॥ ते होचुः। स्वैदायन त्वया वीरेणेमम्प्रतिसंयतामहा ऽइति स होवाचोपान्न खलु रमताहुन्वेनं वेदानीति तꣳ हाभिप्रपेदे तꣳ हाभिप्रपन्नमभ्युवाद स्वैदायना३ ऽइति हो३ गौतमस्य पुत्रे-

तीतरः प्प्रतिशुश्राव तद्ध ह तत ऽएव प्प्रष्टुन्दध्रे ॥ ३ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यो दर्शपूर्ण्णमासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मध्यतो हविर्भागान्षट् प्राजापत्यानष्टा ऽउपरिष्टादाज्यभागान् ॥ ४ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्व्विद्याद्यस्मादिमाः प्प्रजा ऽअदन्तका जायन्ते यस्मादासाञ्जायन्ते यस्मादासाम्प्रभिद्यन्ते यस्मादासाᳬं सन्तिष्ठन्ते यस्मादासाम्पुनरुत्तमे व्वयसि सर्व्वे ऽएव प्प्रभिद्यन्ते यस्मादधर ऽएवाग्ग्रे जायन्तेऽथोत्तरे यस्मादणीयाᳬंस ऽएवाधरे प्प्रथीयाᳬंस ऽउत्तरे यस्मादᳬंष्ट्रा व्वर्षीयाᳬंसो यस्मात्समा ऽएव जम्भ्याः ॥ ५ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्व्विद्याद्यस्मादिमाः प्प्रजा लोमशा जायन्ते यस्मादासाम्पुनरिव श्मश्रूण्युपपक्ष्याणि दुर्व्वीरिणानि जायन्ते यस्माच्छीर्षण्येवाग्ग्रे पलितो भवत्यथ पुनरुत्तमे व्वयसि सर्व्व ऽएव पलितो भवति ॥ ६ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्व्विद्याद्यस्मात्कुमारस्य रेतः सिक्तन्न सम्भवति यस्मादस्य मध्यमे व्वयसि सम्भवति यस्मादस्य पुनरुत्तमे व्वयसि न सम्भवति ॥ ७ ॥ यो गायत्रीᳬं हरिणीम् । ज्योतिष्प्पक्षां य्यजमानᳬं स्वर्ग्गँल्लोकमभिवहन्तीं विद्यादिति तस्मै ह निष्कम्प्रददावनूचानः स्वैदायनासि सुवर्ण्णं वाव सुवर्ण्णविदे ददतीति तद्ध होपगुह्य निश्चक्राम तद्ध ह पप्प्रच्छुः

किमिवैष गौतमस्य पुत्रोऽभूदिति ॥ ८ ॥ स होवाच । यथा ब्रह्मा ब्रह्मपुत्रो मूर्द्धास्य विपतेद्य एनमुपवल्हेतेति ते ह तत एव विप्रेयुस्तह ह तत एव समित्पाणिः प्रतिचक्रम उप त्वायानीति किमद्ध्येष्ष्यमाण इति यानेव मा प्प्रश्नानप्राक्षीस्तानेव मे विब्रूहीति स होवाचानुपेतायैव त एनान्ब्रवाणीति ॥ ९ ॥ तस्मा उ हैतदुवाच । द्वावाघारौ पञ्च प्रयाजा आग्नेय आज्यभागोऽष्टम एतेऽष्टौ पुरस्तदाज्यभागाः सौम्य आज्यभागो हविर्भागाणाम्प्रथमो हविर्हि सोम आग्नेयः पुरोडाशो[1]ऽग्नीषोमीय उपाᳫंशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदेते पञ्च मद्ध्यतो हविर्भागाः ॥१०॥ [2]प्राशित्रञ्चेडा च । यच्चाग्नीध आदधाति ब्रह्मभागो यजमानभागोऽन्वाहार्य एते षट् प्राजापत्यास्त्रयोऽनुयाजाश्चत्वारः पत्नीसँयाजाः† समिष्टयजुरष्टममेतेऽष्टा उपरिष्टादाज्यभागाः ॥ ११ ॥ अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति । तस्मादिमाः प्रजा अदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवीᳫंषि भवन्ति तस्मादासाञ्जायन्तेऽथ यदपुरोऽनुवाक्यका अनुयाजा भवन्ति तस्मादासाम्प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसँयाजा भवन्ति तस्मादासाᳫं सन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्यकः

---

(१) उपांशु इज्यते इति उपांशुयाजः । एवमुपांशुजपश्च "जिह्वोष्ठौ चालयेत् किञ्चिद् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशु स जपः स्मृतः ॥" इति स्मृत्युक्तः

(२) प्राशित्रं ब्रह्मणो भागः ।

† पत्नीदेवताका दर्शपूर्णमासाङ्गभूताश्चत्वारो यागविशेषाः पत्नीसंयाजाः ।

समिष्टयजुर्भवति तस्मादासाम्पुनरुत्तमे व्वयसि सर्व्व ऽएव प्प्रभिद्यन्ते ॥ १२ ॥ * अथ यदनुवाक्क्यामनूच्च्य । याज्ज्यया यजति तस्मादधर ऽएवाग्ग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्च्य त्रिष्टुभा यजति तस्माद्गणीयाᳬंस ऽएवाधरे प्प्रथीयाᳬंस ऽउत्तरेऽथ यत्प्राश्श्वावाघारावाघारयति तस्माद्दᳬंष्ट्रा व्वर्षीयाᳬंसोऽथ यत्सच्छन्दसावेव संयाज्ज्ये भवतस्तस्मात्समा ऽएव जम्भ्याः ॥ १३ ॥ अथ यद्बर्हिस्तृणाति । तस्मादिमाः प्प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्प्रस्तरᳬं[A] स्तृणाति तस्मादासाम्पुनरिव श्म्मश्श्रूण्ण्यौपपक्ष्याणि दुर्व्वीरिणानि जायन्तेऽथ यत्केवलमेवाग्ग्रे प्प्रस्तरमनुप्प्रहरति तस्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्त्यथ यत्सर्व्वमेव बर्हिरनुप्प्रहरति तस्मात्पुनरुत्तमे व्वयसि सर्व्व ऽएव पलितो भवति ॥ १४ ॥ अथ यदाज्ज्यहविषः प्प्रयाजा भवन्ति । तस्मात्कुमारस्य रेतः सिक्तन्न सम्भवत्त्युदकमिवैव भवत्त्युदकमिव ह्याज्ज्यमथ यन्मद्ध्ये यज्ञस्य दद्ध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मद्ध्यमे व्वयसि सम्भवति द्रप्प्सीवैव भवति द्रप्प्सीव हि रेतोऽथ यदाज्ज्यहविष ऽएवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे व्वयसि न सम्भवत्त्युदकमिवैव भवत्त्युदकमिव ह्याज्ज्यम् ॥ १५ ॥ व्वेदिरेव गायत्री । तस्यै येऽष्टौ पुरस्तादाज्ज्यभागाः स दक्षिणः पक्षो येऽष्टा ऽउपरिष्टादाज्ज्यभागाः स

* शतम् ५७०० ।

(A) प्रस्तरः कुशमुष्टिः ।

ऽउत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानꣳ स्वर्गँल्लोकमभिवहति य ऽएवमेतद्वेद ॥ १६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्रुगादानप्रकारः ]

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतन्न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्रतिप्रतिन्न्वा ऽअयमध्वर्युर्यजमानस्य द्विषन्तम्भ्रातृव्यमकःप्रत्युद्यामिनमितीश्वरो ह तथैव स्यात् ॥ १ ॥ इत्थमेव कुर्य्यात् । उभाभ्यामेव पाणिभ्याञ्जुहूम्परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्यमायुष्यन्ते ऽअसꣳशिञ्जयन्नाददीत ते * यत्सꣳशिञ्जयेदयोगक्षेमो यजमानमृच्छेत्तस्मादसꣳशिञ्जयन्नाददीत ॥ २ ॥ अथातोऽतिक्रमणस्य । वज्रेण ह वा ऽअन्योऽध्वर्युर्यजमानस्य पशून्विधमति वज्रेण हास्मा ऽअन्य ऽउपसमूहत्येष ह वा ऽअध्वर्युर्वज्रेण यजमानस्य पशून्विधमति य ऽआश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा ऽएष ऽउपसमूहति य ऽआश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेनाश्राव्यैष हास्मा ऽउपसमूहति ॥ ३ ॥ अथातो धारणस्य । तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयाच्छूलौ न्वा ऽअयमध्व-

* 'ग' 'ज' पुस्तकयोः 'ते' इति नास्ति ।

र्ध्वबाहू ऽअकृत शूलबाहुर्भविष्यतीतीश्वरो ह तथैव स्यादथ हैष मध्यमः प्राणस्तस्मादु तमुपन्न्यच्येवैव धारयेत् * ॥ ४ ॥ अथात ऽआश्रावणस्य। षड्ढ वा ऽआश्रावितानि न्न्यक्तिर्य्यगूर्द्ध्वङ्कृपणम्बहिःश्रयन्तःश्रि ॥ ५ ॥ एतद्ध वै न्न्यक् । योऽयमुच्चैरादाय शनैर्न्निदधाति स यमिच्छेत्पापीयान्त्स्यादिति तस्योच्चैरादाय शनैर्न्निदध्यात्तेन स पापीयान्भवति ॥ ६ ॥ अथ हैतत्तिर्य्यक् । योऽयं यावतैवादत्ते तावता निदधाति स यमिच्छेन्नैव श्रेयान्त्स्यान्न पापीयानिति तस्य यावतैवाददीत तावता निदध्यात्तेन स नैव श्रेयान्न पापीयान्भवति ॥ ७ ॥ अथ हैतदूर्द्ध्वम् । योऽयꣳ शनैरादायोच्चैर्न्निदधाति स यमिच्छेच्छ्रेयान्त्स्यादिति तस्य शनैरादायोच्चैर्न्निदध्यात्तेन स श्रेयान्भवति ॥ ८ ॥ अथ हैतत्कृपणम् । योऽयमणु दीर्घमस्वरमाश्रावयति यो हैनन्तत्र ब्रूयात्कृपणन्न्वा ऽअयमद्ध्वर्य्युर्य्यजमानमकद्विषतो भ्रातृव्यस्योपावसायिनमितीश्वरो ह तथैव स्यात् ॥ ९ ॥ अथ हैतद्बहिःश्रि । योऽयमपव्यादायौष्ठा ऽउच्चैरस्वरमाश्रावयति श्रीर्वै स्वरो बाह्यत ऽएव तच्छ्रियन्धत्तेऽशनायुको भवति ॥ १० ॥ अथ हैतदन्तःश्रि । योऽयꣳ सन्धायौष्ठा ऽउच्चैः स्वरवदाश्रावयति श्रीर्वै स्वरोऽन्तरत ऽएव तच्छ्रियन्धत्तेऽन्नादो भवति ॥ ११ ॥ स वै मन्द्रमिवोरसि । परास्तभ्योभयतो बार्हतमुच्चैरन्ततो निदध्यात्तस्य नोपमीमाꣳ-

---

* तथा चोक्तं सूत्रकृता "नाभिदेशे धारणम्" ( का० श्रौ० सू० ३. २. १ )।

सास्ति तत्पशव्व्यमायुष्ष्यम् ॥ १२ ॥ अथातो होमस्य ।
तद्धैतदेके कुशला मन्न्यमानाः प्प्राचीꣳ स्स्रुचमुपावहृत्य
हुत्वा पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्य्याद्यो
हैनन्तत्र ब्ब्रूयादनुयुवन्न्वा ऽअयमद्ध्वर्य्युर्य्यजमानमकद्वि-
षतो ब्भ्रातृव्व्यस्यान्न्ववसायिनमितीश्श्वरो ह तथैव स्यात्
॥ १३ ॥ पार्श्वत ऽउ हैके । स्स्रुचमुपावहृत्य हुत्वा
पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र
ब्ब्रूयादुतीर्त्थेन न्न्वा ऽअयमद्ध्वर्य्युराहुतीः प्प्रारौत्सीत्सं वा
शरिष्ष्यते घुणिर्व्वा भविष्ष्यतीतीश्श्वरो ह तथैव स्यात्
॥ १४ ॥ इत्थमेव कुर्य्यात् । प्राचीमेव स्स्रुचमुपावहृत्य
हुत्वा तेनैवाधिहृत्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳ-
सास्ति तत्पशव्व्यमायुष्ष्यम् ॥ १५ ॥ प्रदग्ग्धाहुतिर्ह वा
ऽअन्न्योऽद्ध्वर्य्युः । आहुतीर्हान्न्यः सन्तर्प्पयत्त्येष ह वै
प्प्रदग्ग्धाहुतिरद्ध्वर्य्युर्य्योऽयमाज्यꣳ हुत्वावदानानि जुहो-
त्त्येतꣳ ह वै तदुदृश्श्यमाना व्वागब्भ्युवाद प्प्रदग्ग्धाहुतिर्व्वा
ऽअयमद्ध्वर्य्युरित्त्यथ हैना ऽएष सन्तर्प्पयति योऽयमाज्यꣳ
हुत्वावदानानि जुहोत्त्यथ पुनरन्तत ऽआज्येनाभिजुहोत्त्येष
हैनाः सन्तर्प्पयति तासाꣳ सन्तृप्तानान्देवा हिरण्णमयाँश्च-
मसान्न्पूरयन्ते ॥ १६ ॥ तदु होवाच याज्ञवल्क्यः । यद्वा
ऽउपस्तीर्य्यावदायाभिघारयति तदेवैनाः सन्तर्प्पयति
तासाꣳ सन्तृप्तानान्देवा हिरण्णमयाँश्चमसान्न्पूरयन्तेऽय-
स्स्थूणगृहपतीनाꣳ ह वै शौल्ल्बायनोऽद्ध्वर्य्युरास ॥ १७ ॥ स

(१) "नां वै" इति 'ग' 'ज' पुस्तकयोः पाठः ।

होवाच । इदमहेदꣳ सत्रङ्कुशपश्श्वल्पाज्यमथायङ्गृहपतिरस्मीति मन्न्यत ऽइति ॥ १८ ॥ स होवाच । अद्ध्वर्य्यवा वै नोऽक्कुक्ष ऽएते वै ते स्रुचौ ये त्वꣳ सँवत्सरन्नाशक ऽआदातुं य्यद्वै त्वाहमेतयोरनुशिष्ष्याम्प्र प्प्रजया पशुभिर्ज्जायेथा ऽअभि स्वर्ग्गँल्लोकं व्वहेरिति ॥ १९ ॥ स होवाच । उप त्वयानीति स होवाचात्र वाव खल्ल्वर्हसि यो नꣳ सँवत्सरेऽद्ध्वर्य्युरभूरनुपेतायैव त ऽएनेद्व्रवाणीति तस्स्मा ऽउ हैतदेव स्रुचोरादानमुवाच यदेतद्व्याख्याम तस्स्मादेवंव्विदमेवाद्ध्वर्य्युङ्कुर्वीत नानेवंविदम् ॥ २० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या १०४ ॥



[ मित्रविन्देष्टिः ]

प्रजापतिर्व्वै प्प्रजाꣳ सृजमानोऽतप्प्यत । तस्स्माच्छ्रान्तात्तेपानाच्छ्रीरुदक्क्रामत्सा दीप्प्यमाना भ्भ्राजमाना लेलायन्त्यतिष्ठन्तान्दीप्प्यमानाम्भ्राजमानाँल्लेलायन्तीन्देवा ऽअभ्भ्यद्ध्यायन् ॥ १ ॥ ते प्प्रजापतिमब्ब्रुवन् । हनामेमामेदमस्या ददामहा ऽइति स होवाच स्त्री वा ऽएषा यच्छ्रीर्न्न वै स्त्रियङ्घ्नन्त्युत त्वा ऽअस्या जीवन्त्या ऽएवाददत ऽइति ॥ २ ॥ तस्या ऽअग्निरन्नाद्यमादत्त । सोमो राज्यं व्वरुणꣳ साम्म्राज्यम्मित्रꣳ क्षत्रमिन्द्रो बलम्बृहस्पति-

(१) 'ग' 'ज' पुस्तकयोः 'एतद्व०' इति पाठ उपलभ्यते ।

ब्ब्रह्मवर्च्चसꣳ सविता राष्ट्रम्पूषा भगꣳ सरस्वती पुष्टिन्त्वष्टा रूपाणि ॥ ३ ॥ सा प्प्रजापतिमब्ब्रवीत् । आ वै म ऽइदुमदिषतेति स होवाच यज्ञेनैनाꣳपुनर्य्याचस्वेति ॥ ४ ॥ सैतान्दुशहविषमिष्टिमपश्श्यत् । आग्नेयमष्टाकपालम्पुरोडाशꣳ सौम्म्यश्चरुं व्वारुणन्दुशकपालम्पुरोडाशम्मैत्रश्चरुमैन्द्रमेकादशकपालम्पुरोडाशम्बार्हस्पत्त्यश्चरुꣳ सावित्रन्द्वादशकपालं व्वाष्टाकपालं व्वा पुरोडाशम्पौष्णश्चरुꣳ सारस्वतश्चरुन्त्वाष्ट्रन्दुशकपालम्पुरोडाशम् * ॥ ५ ॥ तानेतयानुवाक्क्यया याज्ज्यवदत् । अग्निꣳ सोमो व्वरुणो मित्र ऽइन्द्रो बृहस्पतिꣳ सविता यꣳ सहस्री ॥ पूषा नो गोभिरवसा सरस्वती त्त्वष्टा रूपाणि समनक्तु यज्ञैरिति ते प्प्रत्त्युपातिष्ठन्त ॥ ६ ॥ तानेतया याज्ज्यया । परस्तात्प्रतिलोमम्प्रत्त्यैत्त्वष्टा रूपाणि ददती सरस्वती पूषा भगꣳ सविता मे ददातु ॥ बृहस्पतिर्द्ददिन्द्रो बलम्मे मित्रꣳ क्षत्रं व्वरुणꣳ सोमो ऽअग्निरिति ते पुनर्द्दानायाद्ध्रियन्त ॥ ७ ॥ सैतानुपहोमानपश्श्यत् । अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादायाग्निरुदक्क्रामत्पुनरस्या ऽअन्नाद्यमददात् ॥ ८ ॥ सोमो राजा राजपतिꣳ । राज्ज्यमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सोम ऽउदक्क्रामत्पुनरस्यै राज्ज्यमददात् ॥ ९ ॥ व्वरुणꣳ सम्म्राट् सम्म्राट्पतिꣳ साम्म्राज्ज्यमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय व्वरुण ऽउदक्क्रामत्पुनरस्यै साम्म्रा-

* का० श्रौ० सू० अ० ५ कं० १२ सू० ३ ।

ज्ज्यमददात् ॥ १० ॥ मित्रः क्षत्रं क्षत्रपतिः । क्षत्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय मित्र ऽउदक्क्रामत्पुनरस्यै क्षत्रमददात् ॥ ११ ॥ इन्द्रो बलम्बलपतिः । बलमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादयेन्द्र ऽउदक्क्रामत्पुनरस्यै बलमददात् ॥ १२ ॥ बृहस्पतिर्ब्ब्रह्म ब्ब्रह्मपतिः । ब्रह्मवर्च्चसमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय बृहस्पतिरुदक्क्रामत्पुनरस्यै ब्ब्रह्मवर्च्चसमददात् ॥ १३ ॥ सविता राष्ट्रꣳ राष्ट्रपतिः । राष्ट्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सवितोदक्क्रामत्पुनरस्यै राष्ट्रमददात् ॥ १४ ॥ पूषा भगम्भगपतिः । भगमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय पूषोदक्क्रामत्पुनरस्यै भगमददात् ॥ १५ ॥ सरस्वती पुष्टिम्पुष्टिपतिः । पुष्टिमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सरस्वत्त्युदक्क्रामत्पुनरस्यै पुष्टिमददात् ॥ १६ ॥ त्त्वष्टा रूपाणाꣳ रूपकृद्रूपपतिः । रूपेण पशूनस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय[2] त्त्वष्टोदक्क्रामत्पुनरस्यै रूपेण पशूनददात् ॥ १७ ॥ ता वा ऽएताः । दश देवता दश हवीꣳषि दशाहुतयो दश दक्षिणा[3] दशन्दशिनी विराट् श्रीर्व्विराट् श्रियाꣳ हैतद्विराज्ज्यन्नाद्ये प्प्रातितिष्ठति ॥ १८ ॥ तस्यै पञ्चदश सामिधेन्न्यो भवन्ति । उपाꣳशु देवता यजति पञ्च प्प्रयाजा भवन्ति त्रयोऽनुयाजा ऽएकꣳ समि-

(१) का० श्रौ० सू० ५. १२. १ । (२) का० श्रौ० सू० ५. १३. १ । (३) का० श्रौ० सू० ५. १३. ४ ।

ष्टयजुः * पुष्टिमन्तावाज्यभागा'वग्निना रयिमश्नवत्पोषमेव दिवे दिवे। यशसं वीरवत्तमम्' ॥ 'गयस्फानो ऽअमीवहा वसुवित्पुष्टिवर्द्धनः। सुमित्रः सोम नो भवे'ति सहस्रवत्यौ सँय्याज्ये 'नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम्' ॥ 'उत नो ब्रह्मन्नविष ऽउक्थेषु देवहूतमः। शन्नः शोचा मरुद्वृधोऽग्ने सहस्रसातम' ऽइति ॥ १९ ॥ ताᳫं हैताङ्गोतमो राहूगणः। विदाञ्चकार सा ह जनकं वैदेहम्प्रत्युत्ससाद ताᳫं हाङ्गजिद्ब्राह्मणेष्वन्विवियेष तामु ह याज्ञवल्क्ये विवेद स होवाच सहस्रम्भो याज्ञवल्क्य दद्मो यस्मिन्मन्वयन्त्वयि मित्रविन्दामन्वविदामेति विन्दते मित्रᳫं राष्ट्रमस्य भवत्यप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवं विद्वानेतयेष्ट्या यजते यो वै तदेवं वेद ॥ २० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ २ ॥



[ हविषः समृद्धिः ]

अथातो हविषः समृद्धिः। षड्ढ वै ब्रह्मणो द्वारोऽग्निर्वायुरापश्चन्द्रमा विद्युदादित्यः ॥ १ ॥ स य ऽउपदग्धेन हविषा यजते। अग्निना ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽग्निना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यᳫं सलोकताञ्जयति ॥ २ ॥ अथ यो

---

* प्रधानयागादौ सम्यग् इष्टा देवता इज्यन्ते अनेन स होमः मन्त्रश्च समिष्टयजुः।

( १ ) ऋ० सं० १. १. १। ( २ ) ऋ० सं० १. ६. २१। ( ३ ) ऋ० सं० ३. १. १३। ( ४ ) ऋ० सं० ३. १. १३।

विपतितेन हविषा यजते । वायुना ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स वायुना ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ३ ॥ अथ योऽश्रृतेन हविषा यजते । अग्निर्ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते सोऽग्निर्ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ४ ॥ अथ य ऽउपरक्तेन हविषा यजते । चन्द्रमसा ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स चन्द्रमसा ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति ॥ ५ ॥ अथ यो लोहितेन हविषा यजते । विद्युता ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स विद्युता ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति ॥ ६ ॥ अथ यः सुश्रृतेन हविषा यजते । आदित्येन ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स ऽआदित्येन ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति सैषा हविषः समृद्धिः स यो हैवमेताꣳ हविषः समृद्धिं वेद सर्व्वसमृद्धेन हैवास्य हविषेष्टम्भवति ॥ ७ ॥ अथातो यज्ञस्य समृद्धिः । यद्वै यज्ञस्य न्न्यूनम्प्रजननमस्य तदुथ यदतिरिक्तम्पशव्व्यमस्य तदुथ यत्सङ्कसुकꣳ श्श्रिया ऽअस्य तदुथ यत्सम्पन्नꣳ स्वर्ग्ग्यमस्य तत् ॥ ८ ॥ स यदि मन्न्येत । न्न्यूनम्मे यज्ञेऽभूदिति प्प्रजननम्म ऽएतत्प्रजनिष्ष्य ऽइत्त्येव तदुपासीत ॥ ९ ॥ अथ यदि मन्न्येत । अतिरिक्तम्मे यज्ञेऽभूदिति पशव्व्यम्म ऽएतत्पशुमान्भविष्ष्यामीत्त्येव तदुपासीत ॥१०॥ अथ यदि मन्न्येत । सङ्कसुकम्मे यज्ञेऽ-

भूदिति श्रियै म ऽएतद्वा मा श्रीस्तेजसा यशसा ब्रह्मवर्च्चसेन परिवृता गमिष्यतीत्येव तदुपासीत ॥ ११ ॥ अथ यदि मन्येत। सम्पन्नम्मे यज्ञेऽभूदिति स्वर्ग्यम्म ऽएतत्स्वर्ग्गलोको भविष्यामीत्येव तदुपासीत सैषा यज्ञस्य समृद्धिः स यो हैवमेतां यज्ञस्य समृद्धिं वेद सर्व्वसमृद्धेन हैवास्य यज्ञेनेष्टम्भवति ॥ १२ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

[ अरण्योरश्वत्थविकृतित्वविधानमाख्यायिकया ]

उर्व्वशी हाप्सराः। पुरूरवसमैडञ्चकमे तं ह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन * दण्डेन हतादकामां स्म मा निपद्यासै मो स्म त्वा नग्नन्दर्शमेष वै न स्त्रीणामुपचार ऽइति ॥ १ ॥ सा हास्मिञ्ज्योगुवास। अपि हास्माद्गर्भिण्यास तावज्ज्योग्घास्मिन्नुवास ततो ह गन्धर्वाः समूदिरे ज्योग्वा ऽइयमुर्व्वशी मनुष्येष्ववात्सीदुपजानीत यथेयम्पुनरागच्छेदिति तस्यै हाविद्ध्युरणा शयन ऽउपबद्धास ततो ह गन्धर्वा ऽअन्यतरमुरणम्प्रमेथुः ॥ २ ॥ सा होवाच। अवीर ऽइव बत मेऽजन ऽइव पुत्रं हरन्तीति द्वितीयम्प्रमेथुः सा ह तथैवोवाच ॥ ३ ॥ अथ हायमीक्षाञ्चक्रे। कथन्नु तद-

* वैतस इति पुंस्प्रजननस्य नाम। तथाहि "शेपो वैतस इति पुंस्प्रजननस्य" वैतसो वितस्तं भवति, ( निरु० अ० ३ पा० ४ ख० २१ )।

वीरङ्कथमजनᳪ स्याद्यत्राहᳪ स्यामिति स नग्न ऽएवानूत्पपात चिरन्तन्मेने यद्वासः पर्य्यधास्यत ततो ह गन्धर्वा विद्युतञ्जनयाञ्चक्रुस्तं यथा दिवैवन्नग्नन्ददर्श ततो हैवेयन्तिरोबभूव पुनरैमीत्त्येत्तिरोभूताᳪ स ऽआद्ध्या जल्पन्कुरुक्षेत्रᳪ समया चचारान्न्यतः प्प्लक्षेति बिसवती तस्यै हाद्ध्यन्तेन वव्राज तद्ध ता ऽअप्प्सरस ऽआतयो भूत्त्वा परिपुप्प्लुविरे ॥ ४ ॥ तᳪ हेयं ज्ञात्त्वोवाच । अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा ऽआविरसामेति तथेति तस्मै हाविरासुः ॥ ५ ॥ ताᳪ हायं ज्ञात्त्वाभिपरोवाद । 'हये[1] जाये मनसा तिष्ठ घोरे वचाᳪसि मिश्रा कृणवावहै नु ॥ न नौ मन्त्रा ऽअनुदितास ऽएते मयस्करन्न्परतरे चनाहन्नि'त्युप नु रम सन्नु वदावहा ऽइति हैवैनान्तदुवाच ॥ ६ ॥ तᳪ हेतरा प्प्रत्युवाच । 'किमेता[2] वाचा कृणवा तवाहम्प्राक्रमिषमुषसामग्रियेव ॥ पुरूरवः पुनरस्तम्परेहि दुरापना वात ऽइवाहमस्मी'ति न वै त्त्वन्तदकरोर्य्यदहमब्रवन्दुरापा वा ऽअहन्त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनन्तदुवाच ॥ ७ ॥ अथ हायम्परिद्यून ऽउवाच । 'सुदेवो[3] ऽअद्य प्प्रपतेदनावृत्परावतम्परमाङ्गन्तवा ऽउ ॥ अधा शयीत निर्ऋतेरुपस्थेऽधैनं व्वृका रभसासो ऽअद्यु'रिति सुदेवोऽद्योद्बा बद्ध्नीत प्प्रवा पतेत्तदेनं व्वृका वा श्वानो वाद्युरिति तदुवाच ॥ ८ ॥ तᳪ हेतरा प्प्रत्युवाच । 'पुरूरवो[4]

(१) ऋ० सं० अष्ट० ८ अ० ५ व० १। (२) ऋ० सं० अष्ट० ८ अ० ५ व० १।
(३) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३। (४) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३।

मा मृथा मा प्प्रपप्तो मा त्त्वा व्वृकासो ऽअशिवास ऽउ-क्षन् ॥ न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणाᳬं हृदयान्न्येते’ति मैतदादृथा न वै स्त्रैणᳩ सख्यमस्ति पुनर्ग्गृहा-निहीति हैवैनन्तदुवाच ॥ ९ ॥ ‘यद्विरूपाचरम् । मर्त्त्येष्ष्व-वसᳩ रात्रीᳩ शरदश्च्चतस्रᳩ ॥ घृतस्य स्तोकᳩ सकृदह्न ऽआश्श्नान्तादेवेदुन्तातृपाणा चरामी’ति तदेतदुक्तप्प्रत्त्यु-क्तम्पञ्चदशर्च्चं बह्वृचाᳩ प्प्राहुस्तस्यै ह हृदयमाव्व्ययाञ्चकार ॥ १० ॥ सा होवाच । सँव्वत्त्सरतमीᳬं रात्रिमा-गच्छतात्तन्म ऽएकाᳬं रात्रिमन्ते शयितासे जात ऽउ ते-ऽयन्तर्हि पुत्रो भवितेति स ह सँव्वत्त्सरतमीᳬं रात्रिमाज-गामेद्धिरण्यविमितानि ततो हैनमेकमूचुरेतत्प्रपद्यस्वेति तद्धास्म्मै तामुपप्प्रजिग्घ्युᳩ ॥ ११ ॥ सा होवाच । गन्धर्व्वा वै ते प्प्रातर्व्वरन्दातारस्तं व्वृणासा ऽइति तं वै मे त्त्वमेव व्वृणीष्ष्वेति युष्म्माकमेवैकोऽसानीति ब्रूतादिति तस्म्मै ह प्प्रातर्ग्गन्धर्व्वा व्वरन्ददुᳩ स होवाच युष्म्माकमेवैकोऽ-सानीति ॥ १२ ॥ ते होचुᳩ । न वै सा मनुष्ष्येष्ष्वग्ग्ने-र्य्यज्ञिया तनूरस्ति ययेष्ट्वास्म्माकमेकᳩ स्यादिति तस्म्मै ह स्त्थाल्ल्यामोप्प्याग्ग्निम्प्रददुरनेनेष्ट्वास्म्माकमेको भवि-ष्ष्यसीति तञ्च ह कुमारञ्चादायावव्राज सोऽरण्य ऽएवा-ग्ग्निन्निधाय कुमारेणैव ग्ग्राममेयाय पुनरैमीत्त्येत्तिरोभूतं य्यो ऽग्ग्निरश्वत्त्थन्तं य्या स्त्थाली शमीन्ताᳬं स ह पुन-र्ग्गन्धर्व्वानेयाय ॥ १३ ॥ ते होचुᳩ । सँव्वत्त्सरञ्चातुष्प्राश्श्य-

---

( १ ) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ४ ।

मोदनम्पच स एतस्यैवाश्वत्थस्य तिस्रस्तिस्रः समिधो घृतेनाक्त्वाज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १४ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्व शमीमयीमधरारणिः स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १५ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्वाश्वत्थीमधरारणिः स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥१६॥ स ऽआश्वत्थीमेवोत्तरारणिञ्चक्रे । आश्वत्थीमधरारणिः स यस्ततोऽग्निर्जज्ञे स ऽएव स ऽआस तेनेष्ट्वा गन्धर्वाणामेक ऽआस तस्मादाश्वत्थीमेवोत्तरारणिङ्कुर्वीताश्वत्थीमधरारणिः स यस्ततोऽग्निर्जायते स ऽएव स भवति तेनेष्ट्वा गन्धर्वाणामेको भवति ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ चातुर्मास्ययाजिनो द्वैविध्यं दर्शयितुं तत्रत्यैर्यागैः शरीरावयवकल्पनम् ]

प्रजापतिर्ह चातुर्म्मास्यैरात्मानं विदधे । स ऽइममेव दक्षिणम्बाहुं वैश्वदेवꣳ हविरकुरुत तस्यायमेवाङ्गुष्ठ ऽआग्नेयꣳ हविरिदꣳ सोम्यमिदꣳ सावित्रम् ॥ १ ॥ स वै वर्षिष्ठः पुरोडाशो भवति । तस्मादियमासां वर्षिष्ठेदꣳ सारस्वतमिदम्पौष्णमथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तन्मारुतमिदं वैश्वदेवन्द्यावापृथिवीयन्तद्वा

"अश्वत्थशमीगर्भारणी प्रयच्छति" ( का० श्रौ० सू० ४. ७. २० )

ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ २ ॥ अयमेव दक्षिण ऽऊरुर्वरुणप्प्रघासाः । तस्य यानि पञ्च हवीꣳषि समायीनि * ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नꣳ हविस्तद्वै द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदं वारुणमिदम्मारुतमनूकङ्कायस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ३ ॥ मुखमेवास्यानीकवतीष्टिः । मुखꣳ हि प्प्राणानामनीकमुरः सान्तपनीयोरसा हि समिव तप्प्यत ऽउदरङ्गृहमेधीया प्प्रतिष्ठा वा ऽउदरम्प्रतिष्ठित्या ऽएव शिश्नान्न्येवास्य क्रैडिनꣳ हविः शिश्नैर्हि क्क्रीडतीवायमेवावाङ् प्राण ऽआदित्येष्टिः ॥ ४ ॥ अयमेवोत्तर ऽऊरुर्म्महाहविः तस्य यानि पञ्च हवीꣳषि समायीनि ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नꣳ हविस्तद्वै द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदम्माहेन्द्रमिदं वैश्वकर्म्मणन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तमथ यदिदमन्तरुदरे तत्पितृयज्ञस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ५ ॥ अयमेवोत्तरो बाहुः शुनासीरीयम् । तस्य यानि पञ्च हवीꣳषि समायीनि ता ऽइमाः पञ्चाङ्गुलयोऽथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तच्छुनासीरीयमिदं वायव्व्यन्दोः सौर्य्यन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ६ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि † त्रिषन्धीनि ‡ द्विसमस्तानि तस्मादि-

* पर्वचतुष्टयसञ्चारीणि ।

† चतुर्षु चतुर्षु मासेषु क्रियमाणानि चातुर्मास्यानि वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयाख्यानि चत्वारि पर्वाणि ।

‡ त्रयः सन्धयोऽन्तरालकालाश्चत्वारो मासा येषु तानि त्रिषन्धीनि ।

मानि पुरुषस्याङ्गानि त्रिषन्धीनि द्विसमस्तानि तेषां वै चतुर्णान्द्वयोस्त्रीणि त्रीणि हवीᳬंष्यनिरुक्तानि भवन्ति द्वे द्वे द्वयोः ॥७॥ [अर्धः प्रपाठकः ॥५६॥] तेषां वै चतुर्ष्वग्निम्मन्थन्ति। तस्माच्चतुर्भिरङ्गैरायुते द्वयोः प्प्रणयन्ति तस्माद्द्वाभ्यामेत्येवमु ह प्प्रजापतिश्चातुर्म्मास्यैरात्मानं विदधे तथो ऽएवैवंविद्यजमानश्चातुर्म्मास्यैरात्मानं विधत्ते ॥८॥ तदाहुः सर्वं गायत्रं वैश्वदेवᳬं हविः स्यात्सर्वं त्रैष्टुभं वरुणप्प्रघासाः सर्वं जागतम्महाहविः सर्वानुष्टुभᳬं शुनासीरीयश्चतुष्टोमस्याप्प्त्या ऽइति तदु तथा न कुर्य्याद्यत्वा ऽएतान्यभिसम्पद्यन्ते तेनैवास्य स काम ऽउपाप्प्तो भवति ॥ ९ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि द्वाषष्टानि त्रीणि शतानि बृहत्यः सम्पद्यन्ते तदेभिः सँवत्सरश्च महाव्रतश्चाप्प्नोत्यथो द्विप्प्रतिष्ठो वा ऽअयं र्व्यजमानो यजमानमेवैतत्स्वर्ग्गे लोक ऽआयातयति प्प्रतिष्ठापयति ॥ १० ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ प्रश्नप्रतिवचनैरग्निहोत्रहोमस्य सर्वदेवतृप्तिकरत्वप्रतिपादनम् ]

शौचेयो ह प्प्राचीनयोग्ग्यः । उद्दालकमारुणिमाजगाम ब्ब्रह्मोद्यमग्निहोत्रं विविदिषिष्यामीति[1] ॥ १ ॥ स होवाच । गौतम का तेऽग्निहोत्री को वत्सः किमुपसृष्टा किᳬं संर्व्योजनङ्किन्दुह्यमानङ्किन्दुग्धङ्किमाह्रियमाणङ्किमधिश्रितङ्किमवज्ज्योत्यमानङ्किमद्भिः प्रत्यानीतङ्किमुद्वास्यमानङ्किमुद्वा-

( १ ) 'ग' 'ज' पुस्तकयोः "विविदिषामीति" इति पाठो दृश्यते ।

सितङ्किमुन्नीयमानङ्किमुन्नीतङ्किमुह्यतङ्किᳯं ह्रियमाणङ्किन्निगृहीतम् ॥ २ ॥ काᳯं समिधमादधासि का पूर्वाहुतिः किमुपासीषदः किमपैक्षिष्ठाः कोत्तराहुतिः ॥ ३ ॥ किᳯं हुत्वा प्प्रकम्पयसि । किᳯं स्रुचम्परिमृज्य कूर्चे न्न्यमार्ज्जीः किन्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीषदः किम्पूर्वम्प्राशीः किन्द्वितीयङ्किमुरस्पृप्प्यापाः किᳯं स्रुच्च्यप ऽआनीय निरौक्षीः किन्द्वितीयङ्किन्तृतीयमेतान्दिशमुदौक्षीः किञ्चघनेनाहवनीयमपो न्न्यनैषीः किᳯं समतिष्ठिपो यदि वा ऽएतद्विद्वानग्निहोत्रमहौषीरथ ते हुतं यद्यु वा ऽअविद्वानहुतमेव त ऽइति ॥ ४ ॥ स होवाच । इडैव मे मानव्व्यग्निहोत्री वायव्व्यो वत्सः सजूरुपसृष्टा विराट् संयोजनमाश्श्विनन्दुह्यमानं वैश्श्वदेवन्दुग्गधं वायव्व्यमाह्रियमाणमाग्नेयमधिश्श्रितमैन्द्राग्गनमवज्ज्योत्यमानं वारुणमद्भिः प्प्रत्यानीतं वायव्व्यमुद्वास्यमानन्द्यावापृथिव्व्यमुद्वासितमाश्श्विनमुन्नीयमानं वैश्श्वदेवमुन्नीतम्महादेवायोह्यतं वायव्व्यᳯं ह्रियमाणं वैष्णवन्निगृहीतम् ॥ ५ ॥ अथ याᳯं समिधमादधामि । आहुतीनाᳯं सा प्प्रतिष्ठा या पूर्वाहुतिर्देवाँस्तयाप्प्रैषं यदुपासीषदम्बार्हस्पत्यन्तद्यदपैक्षिषीमञ्चामुञ्च लोकौ तेन समिधां योत्तराहुतिर्म्मान्तया स्वर्गे लोकेऽधाम् ॥६॥ अथ यद्धुत्वा प्प्रकम्पयामि । वायव्व्यन्तद्यत्स्रुचम्परिमृज्य कूर्चे न्न्यमार्ज्जिषमोषधिवनस्पतीँस्तेनाप्प्रैषं यद्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीषदम्पितृँस्तेनाप्प्रैषं यत्पूर्वम्प्राशिषम्मान्तेनाप्प्रैषं यद्द्वि-

तीयम्प्रजान्तेनाथ यदुत्स्सृप्प्यापाम्पशूँस्तेनाप्प्रैषं यत्स्स्रुच्च्यप ऽआनीय निरौक्षिषं सर्प्पदेवजनाँस्तेनाप्प्रैषं यद्द्वितीय-ङ्गन्धर्व्वाप्प्सरसस्तेनाथ यत्तृतीयमेतान्दिशमुदौक्षिषं स्व-र्ग्गस्य लोकस्य तेन द्वारं व्व्यवारिषं यज्जघनेनाहवनीय-मपो न्यनैषमस्म्मै लोकाय तेन व्वृष्टिमदां यत्समति-ष्ठिपं यत्पृथिव्व्या ऽऊनन्तत्तेनापूपुरमित्येतन्नौ भगवन्त्स-हेति होवाच ॥ ७ ॥ शौचेयो ज्ञप्तः । प्प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यस्मिम-न्न्काल ऽउद्धृतास्तेऽग्नयः स्युरुपावहृतानि पात्राणि होष्य-न्त्स्या ऽअथ त ऽआहवनीयोऽनुगच्छेद्वेत्थ तद्भयं यदुत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य ज्येष्ठः पुत्रो म्म्रियेत यस्यैतदविदितं स्याद्विद्याभिस्त्वेवाहमता-रिषमिति किं व्विदितङ्का प्प्रायश्चित्तिरिति प्प्राण ऽउदान-मप्प्यगादिति गार्हपत्त्य ऽआहुतिञ्जुहुयात्सैव प्प्राय-श्चित्तिर्न्न तदागः कुर्व्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ८ ॥ शौचेयो ज्ञप्तः । प्प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले गार्हपत्त्योऽनुगच्छेद्वेत्थ तद्भयं यदुत्र जुह्वतो भव-तीति वेदेति होवाच पुरा चिरादस्य गृहपतिर्म्म्रियेत यस्यैतदविदितं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं व्विदितङ्का प्प्रायश्चित्तिरित्युदानः प्प्राणमप्प्यगादित्याहव-नीय ऽआहुतिञ्जुहुयात्सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वी-येत्येतन्नौ भगवन्त्सहेति होवाच ॥ ९ ॥ शौचेयो ज्ञप्तः ।

प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्म्मिन्नेव कालेऽन्न्वाहार्य्यपचनोऽनुगच्छेद्द्रथ तद्भयं य्यदुत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य सर्व्वे पशवो म्म्रियेरन्न्यस्यैतदविदितर्थ्ठं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति व्यान ऽउदानमप्प्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयाथ्ठं सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्त्येतन्नो भगवन्त्सहेति होवाच ॥ १० ॥ शौचेयो ज्ञप्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्म्मिन्नेव काले सर्व्वेऽग्ग्नयोऽनुगच्छेयुर्व्वेत्थ तद्भयं य्यदुत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्यादायादङ्कुलर्थ्ठं स्याद्यस्यैतदविदितर्थ्ठं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति पुरा चिरादग्ग्निम्मथित्त्वा यान्दिशं व्वातो व्वायात्तान्दिशमाहवनीयमुद्धृत्त्य व्वायव्व्यामाहुतिञ्जुहुयार्थ्ठं स व्विद्यार्थ्ठं समृद्धम्मेऽग्ग्निहोत्रङ्ग सर्व्वदेवत्त्यं व्वायुर्थ्ठं ह्येव सर्व्वाणि भूतान्न्यपियन्ति व्वायोः पुनर्व्विसृज्ज्यन्ते सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्त्येतन्नो भगवन्त्सहेति होवाच ॥ ११ ॥ शौचेयो ज्ञप्प्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैवं प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्म्मिन्नेव काले निवाते सर्व्वेऽग्ग्नयोऽनुगच्छेयुर्व्वेत्थ तद्भयं य्यदुत्र जुह्वतो भवतीति वेदेति होवाचाप्प्रियमेवास्म्मिँल्लोके पश्श्येताप्प्रियममुष्म्मिन्न्यस्यैतदविदितर्थ्ठं स्याद्विद्या-

भिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा प्प्राञ्चमाहवनीयमुद्धृत्य जघनेनाहवनीयमुपविश्श्याहमेवैनत्पिबेयꣳ स विद्याथ्ठं समृद्धम्मेऽग्निहोत्रꣳ सर्वदेवत्यम्ब्राह्मणथ्ठं ह्येव सर्वाणि भूतान्यपियन्ति ब्ब्राह्मणात्पुनर्विसृज्ज्यन्ते सैव प्प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्यथ वा ऽअहमेतन्नावेदिषमिति होवाच ॥ १२ ॥ शौचेयो ज्ञप्तः । इमानि समित्काष्ठान्न्युपायानि भगवन्तमिति स होवाच यदेवन्नावक्ष्यो मूर्द्धा ते व्व्यपतिष्ष्यदेह्युपेहीति तथेति तꣳ होपनिन्न्ये तस्म्मै हैताथ्ठं शोकतरां व्व्याहृतिमुवाच यत्सत्यन्तस्म्मादु सत्यमेव वदेत् ॥ १३ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ उपनयनधर्मनिरूपणम् ]

ब्रह्मचर्य्यमागामित्याह । ब्ब्रह्मण ऽएवैतदात्मानन्निवेदयति ब्ब्रह्मचार्य्यसानीत्याह ब्ब्रह्मण ऽएवैतदात्मानम्परिददात्यथैनमाह को नामासीति प्प्रजापतिर्वै कः प्प्राजापत्यमेवैनन्तत्कृत्वोपनयते ॥ १ ॥ अथास्य हस्तङ्गृह्णाति । इन्द्रस्य ब्ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासाविन्त्येते वै श्श्रेष्ठे बलिष्ठे देवते ऽएताब्भ्यामेवैनथ्ठं श्रेष्ठाभ्याम्बलिष्ठाब्भ्यान्देवताब्भ्याम्परिददाति तथा हास्य ब्ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं व्वेद ॥ २ ॥ अथैनम्भूतेब्भ्यः परिददाति । प्प्रजापतये त्वा परिददामि

देवाय त्वा सवित्रे परिददामीत्येते वै श्रेष्ठे वर्षिष्ठे देवते ऽएताभ्यामेवैनꣳ श्रेष्ठाभ्यां वर्षिष्ठाभ्यान्देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ३ ॥ अद्भ्यस्त्वौषधीभ्यः परिददामीति । तदेनमद्भ्यश्चौषधिभ्यश्च परिददाति द्यावापृथिवीभ्यान्त्वा परिददामीति तदेनमाभ्यान्द्यावापृथिवीभ्याम्परिददाति ययोरिदꣳ सर्वमधि विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या ऽइति तदेनꣳ सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥४॥ * ब्रह्मचार्य्यसीत्याह । ब्रह्मण ऽएवैनन्तत्परिददात्यपोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह कर्म्म कुर्विति वीर्य्यं वै कर्म्म वीर्य्यं कुर्वित्येवैनन्तदाह समिधमाधेहीति समित्स्वात्मानन्तेजसा ब्रह्मवर्चसेनेत्येवैनन्तदाह मा सुषुप्था ऽइति मा मृथा ऽइत्येवैनन्तदाहापोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ५ ॥ अथास्मै सावित्रीमन्वाह[†] । ताꣳ ह स्मैताम्पुरा सँवत्सरेऽन्वाहुः सँवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दध्म ऽइति ॥ ६ ॥ अथ षट्सु मासेषु । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वा-

* अत्रशतम् ५८०० ।
† पा० गृ० सू० २. ३. १ ।

चन्दद्ध्म ऽइति ॥ ७ ॥ अथ चतुर्विंꣳशत्यहे । चतुर्विंꣳशतिर्वै सँवत्सरस्यार्द्धमासाः सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ८ ॥ अथ द्वादशाहे । द्वादश वै मासा सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ९ ॥ अथ षडहे । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ १० ॥ अथ त्र्यहे । त्रयो वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥११॥ तदपि श्लोकङ्गायन्ति । आचार्य्यो गर्भी भवति हस्तमाधाय दक्षिणन्तृतीयस्याꣳ स जायते सावित्र्या सह ब्ब्राह्मण ऽइति सद्यो ह त्वाव ब्ब्राह्मणायानुब्ब्रूयादाग्नेयो वै ब्ब्राह्मणः सद्यो वा ऽअग्निर्ज्जायते तस्मात्सद्य ऽएव ब्ब्राह्मणायानुब्ब्रूयात् ॥ १२ ॥ ताꣳ हैतामेके । सावित्रीमनुष्टुभमन्वाहुर्वाग्वा ऽअनुष्टुप्तदस्मिन्वाचन्दद्ध्म ऽइति न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयादा न्वा ऽअयमस्य व्वाचमदित मूको भविष्यतीतीश्वरो ह तथैव स्यात्तस्मादेताङ्गायत्रीमेव सावित्रीमनुब्ब्रूयात् ॥ १३ ॥ अथ हैके दक्षिणतः । तिष्ठते वासीनाय वान्वाहुर्न्न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयाद्बुल्बन्न्वा ऽअयमिममजीजनत बुल्बो भविष्यतीतीश्वरो ह तथैव स्यात्तस्मात्पुरस्तादेव प्प्रतीचे समीक्षमाणायानुब्ब्रूयात् ॥ १४ ॥ तां वै पच्छोऽन्वाह । त्रयो वै

प्राणाः प्राण ऽउदानो व्यानस्तानेवास्मिँस्तद्दधात्यथा-र्द्धर्चशो द्वौ वा ऽइमौ प्राणौ प्राणोदानावेव प्राणोदानावे-वास्मिँस्तद्दधात्यथ कृत्स्नामेको वा ऽअयम्प्राणः कृत्स्न ऽएव प्राणमेवास्मिँस्तत्कृत्स्नन्दधाति ॥ १५ ॥ तदाहुः । न ब्राह्मणम्ब्रह्मचर्य्यमुपनीय मिथुनञ्चरेद्गर्भो वा ऽएष भवति यो ब्रह्मचर्य्यमुपैति नेदिमम्ब्राह्मणं विषिक्ताद्रेतसो जनया-नीति ॥ १६ ॥ तदु वा ऽआहुः । काममेव चरेद्द्वय्यो वा ऽइमाः प्रजा दैव्यश्चैव मानुष्यश्च ता वा ऽइमा मानुष्यः प्रजाः प्रजननात्प्रजायन्ते च्छन्दाᳬसि वै दैव्यः प्रजास्तानि मुखतो जनयते तत ऽएतञ्जनयते तस्मादु काममेव चरेत् ॥ १७ ॥ तदाहुः । न ब्रह्मचारी सम्मध्वश्नीयादोषधीनां वा ऽएष परमो रसो यन्मधु नेदन्नाद्यस्यान्तङ्गच्छानीत्यथ ह स्माह श्वेतकेतुरारुणेयो ब्रह्मचारी सन्मध्वश्नँस्त्रय्यै वा ऽएतद्विद्यायै शिष्टं यन्मधु स तु रसो यस्येदृक्किशष्टमिति यथा ह वा ऽऋचं वा यजुर्वा साम वाभिव्याहरेत्तादृक्तद्य ऽएवं विद्वान्ब्रह्मचारी सन्मध्वश्नाति तस्मादु काममेवाश्नीयात् ॥ १८ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ शतातिरात्राख्यसत्रविधानमाख्यायिकया ]

देवान्वा ऽऊर्द्ध्वान्त्स्वर्ग्गँल्लोकं यतः । असुरास्तमसा-न्तरदधुस्ते होचुर्न्न वा ऽअस्यान्न्येन सत्रादपघातोऽस्ति हन्त सत्रमासामहा ऽइति ॥ १ ॥ ते शताग्निष्टोमाः

सत्रमुपेयुः । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाघ्नन्तैवमेव शतोक्थ्येन यावत्तिष्ठन्नपरापश्श्येत्तावतस्तमोऽपाघ्नत ॥ २ ॥ ते होचुः । अप वाव तमो हन्महे न त्वेव सर्वमिव हन्त प्प्रजापतिम्पितरम्प्रत्ययामेति ते प्प्रजापतिम्पितरम्प्रतीत्योचुरसुरा वै नो भगव ऽऊर्द्ध्वान्त्स्वर्ग्गँल्लोकं यतस्तमसान्तरदधुः ॥ ३ ॥ ते शताग्निष्टोमꣳ सत्रमुपैम । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाहन्महेवमेव शतोक्थ्येन यावत्तिष्ठन्नपरापश्श्येत्तावतस्तमोऽपाहन्महि प्प्र नो भगवञ्छाधि यथासुराँस्तमोऽपहत्त्य सर्वम्पाप्प्मानमपहत्त्य स्वर्ग्गँल्लोकम्प्रज्ञास्याम ऽइति ॥ ४ ॥ स होवाच । असर्वक्क्रतुभ्यां वै यज्ञाभ्यामगन्त यदग्निष्टोमेन चोक्थ्येन च शतातिरात्रꣳ सत्रमुपेत तेनासुराँस्तमोऽपहत्त्य सर्वम्पाप्प्मानमपहत्त्य स्वर्ग्गँल्लोकम्प्रज्ञास्यथेति ॥ ५ ॥ ते शतातिरात्रꣳ सत्रमुपेयुः । तेनासुराँस्तमोऽपहत्त्य सर्वम्पाप्प्मानमपहत्त्य स्वर्ग्गँल्लोकम्प्रजज्ञुस्तेषामर्वाक्त्रपश्चाशेष्ष्वेवाहःस्वहरभि रात्रिसामानि परीयू रात्रिमभ्यहःसामानि ॥ ६ ॥ ते होचुः । अमुह्याम वै न प्प्रजानीमो हन्त प्प्रजापतिमेव पितरम्प्रत्ययामेति ते प्प्रजापतिमेव पितरम्प्रतीत्योचुरहन्नो रात्रिसामानि रात्र्यामहन्नो भवन्ति नः ॥ विपश्चिद्यज्ञान्मुग्धान्विद्वान्धीरोऽनुशाधि न ऽइति ॥ ७ ॥ तान्हैतदुपजगौ । महाहिमिव वै ह्रदाद्धलीयानन्ववेत्त्य ॥ अनुत्त स्वादास्थानात्ततः सत्रन्न तायत ऽइति ॥ ८ ॥ आश्विनं वै वः शस्यमानम् । प्रातरनुवाकमास्थानादनुत्त

यमास्स्थानादनुद्धन्धीराः सन्तो ऽअधीरवत् ॥ प्रशास्त्रा तमुपेत शनैरप्प्रतिशङ्सतेति ॥ ९ ॥ ते होचुः । कथन्नु भगवः शस्तङ्कथमप्प्रतिशस्तमिति स होवाच यत्र होताश्विनङ् शङ्सन्नाग्नेयस्य क्रतोर्ग्गायत्रस्य च्छन्दसः पारङ्गच्छात्त-त्प्रतिप्प्रस्स्थाता वसतीवरीः परिहृत्य मैत्रावरुणस्य हविर्द्धानयोः प्प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शङ्सति शनैरितरो जञ्जप्प्यमान ऽइवान्न्वाह तन्न वाचा वाचम्प्रत्येति न च्छन्दसा च्छन्दः ॥ १० ॥ परिहिते प्प्रातरनुवाके । यथायतनमेवोपाᳬशवन्तर्य्यामौ हुत्वा द्रोणकलशे पवित्रम्प्रपीड्य निदधाति तिरोह्ययैश्चरित्त्वा प्प्रत्यञ्चः प्प्रतिपरेत्त्य तिरोह्ययानेव भक्षयाद्धा ऽअथानुपूर्व्वं य्यज्ञपुच्छङ् सᳬस्थाप्प्य य ऽऊर्द्ध्वा ऽअन्तर्य्यामाद्ग्रहास्तान्न्गृहीत्वा विप्प्रुषाᳬ होमङ्[२] हुत्वा सन्तनिञ्च बहिष्प्पवमानेन स्तुत्वाहरेव प्प्रतिपद्याद्धा ऽइति ॥ ११ ॥ तदेतेऽभि श्श्लोकाः । चतुर्भिः सैन्धवैर्य्युक्तैर्द्धीरा व्व्यजहुस्तमः ॥ विद्वाᳬसो ये शतक्रतुदेवाः सत्रमतन्न्वतेति ॥ १२ ॥ चत्वारो ह्यत्र युक्ता भवन्ति । द्वौ होतारौ द्वावद्ध्वर्य्यू पवेन्नु शक्वेव हनूनि कल्प्पयन्नहन्नोरन्तौ व्व्यतिषजन्त धीराः ॥ न दानवा यजियन्तन्तुमेषां विजानीमो विततम्मोहयन्ति नः ॥ पूर्वस्याह्नः परिशिङ्षन्ति कर्म्म तदुत्तरेणाभिवितन्वतेऽह्ना ॥ दुर्व्विज्ञान-

(१) "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥ (कर्मप्र०)
"कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ" ( का० श्रौ० सू० २. ३. ३० )

(२) अभिषवे ग्रहणे च पतितानां गोमबिन्दूनां ग्रहणाशक्यत्वात् तत्प्रत्यवायपरिहाराय घृतहोमस्य विप्रुड्ढोम इति संज्ञा ।

ङ्गाऽव्यन्देवतानाᳬं सोमाः सोमैऽर्य्यतिषक्ताः पप्लवन्ते ॥ समानान्त्सदमुक्षन्ति हयान्काष्ठभृतो यथा ॥ पूर्ण्णान्परिस्रुतः कुम्भाञ्जनमेजयसादन ऽइत्त्यसुररक्षसान्न्यपेयुः ॥१३॥

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ पञ्चमहायज्ञानां महासत्रत्वप्रतिपादनम् ]

पञ्चैव महायज्ञाः * । तान्न्येव महासत्राणि भूतयज्ञो मनुष्ष्ययज्ञः पितृयज्ञो देवयज्ञो ब्ब्रह्मयज्ञ ऽइति ॥ १ ॥ अहरहर्ब्भूतेब्भ्यो बलिᳬं हरेत् । तथैतम्भूतयज्ञᳬं समाप्नोत्त्यहरहर्द्दद्यादोदपात्रात्तथैतम्मनुष्ष्ययज्ञᳬं समाप्नोत्त्यहरहः स्वधाकुर्य्यादोदपात्रात्तथैतम्पितृयज्ञᳬं समाप्नोत्त्यहरहः † स्वाहाकुर्य्यादाकाष्ठात्तथैतन्देवयज्ञᳬं समाप्नोति ॥२॥ अथ ब्ब्रह्मयज्ञः । स्वाद्ध्यायो वै ब्ब्रह्मयज्ञस्तस्य वा ऽएतस्य ब्ब्रह्मयज्ञस्य वागेव जुहूर्म्मन ऽउपभृच्चक्षुर्द्ध्रुवा मेधा स्रुवः सत्त्यमवभृथः स्वर्ग्गो लोक ऽउदयनं य्यावन्तᳬं ह वा ऽइमाम्पृथिवीं वित्तेन पूर्ण्णान्ददँल्लोकञ्जयति त्रिस्तावन्तञ्जयति भूयाᳬंसञ्चाक्षय्यं य्य ऽएवं विद्वानहरहः स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ३ ॥ पय ऽआहुतयो ह वा ऽएता देवानाम् । यदृचः स य ऽएवं विद्वानृचोऽहरहः स्वाद्ध्यायमधीते पय ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त

* "अथातः पञ्च महायज्ञाः" पा० गृ० सू० का० २ क० ९ सू० १ ।

† "अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात्" पा० गृ० सू० २. ९. १६ ।

ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ४ ॥ आज्याहुतयो ह वा ऽएता देवानाम् । यद्यजूꣳषि स य ऽएवं विद्वान्यजूꣳष्यहरहः स्वाध्यायमधीत ऽआज्याहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ५ ॥ सोमाहुतयो ह वा ऽएता देवानाम् । यत्सामानि स य ऽएवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते सोमाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ६ ॥ मेद ऽआहुतयो ह वा ऽएता देवानाम् । यदथर्व्वाङ्गिरसः स य ऽएवं विद्वानथर्व्वाङ्गिरसोऽहरहः स्वाध्यायमधीते मेद ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥७॥ मध्वाहुतयो ह वा ऽएता देवानाम् । यदनुशासनानि * विद्या † वाकोवाक्यमितिहासपुराणङ्गाथा

* अनुशिष्यन्ते—व्युत्पाद्यन्ते एभिरित्यनुशासनानि-व्याकरणनिरुक्तादीनि षडङ्गानि ।

† न्यायमीमांसादयः ।

( १ ) उक्तिप्रत्युक्तिरूपं प्रकरणं वाकोवाक्यम् ।

नाराशꣳस्यः स य ऽएवं विद्वाननुशासनानि विद्या वाकोवाक्क्यमितिहासपुराणङ्गाथा नाराशꣳसीरित्त्यहरहः स्वाद्ध्यायमधीते मद्ध्वाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्प्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ८ ॥ तस्य वा ऽएतस्य ब्ब्रह्मयज्ञस्य । चत्त्वारो व्वषट्कारा यद्वातो व्वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्ज्जति तस्मादेवंविद्वाते व्वाति विद्योतमाने स्तनयत्त्यवस्फूर्ज्जत्त्यधीयीतैव व्वषट्काराणामच्छम्बट्कारायाति ह व्वै पुनर्म्मृत्युम्मुच्च्यते गच्छति ब्ब्रह्मणः सात्मताꣳ स चेदपि प्प्रबलमिव न शक्क्नुयादप्प्येकन्देवपदमधीयीतैव तथा भूतेब्भ्यो न हीयते ॥ ९ ॥

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ११२ ॥



[ स्वाध्यायप्रशंसा ]

अथातः स्वाद्ध्यायप्प्रशꣳसा । प्प्रिये स्वाद्ध्यायप्प्रवचने भवतो युक्तमना भवत्त्यपराधीनोऽहरहरर्त्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्त्सक ऽआत्मनो भवतीन्द्रियसंय्यमश्चैकारामता च प्प्रज्ञावृद्धिर्य्यशो लोकपक्तिः प्प्रज्ञा व्वर्द्धमाना चतुरो धर्म्मान्ब्राह्मणमभिनिष्प्पादयति ब्ब्राह्मण्ण्यम्प्रतिरूपचर्य्यां य्यशो लोकपक्तिँल्लोकः पच्च्यमान-

श्चतुर्भिर्द्धर्म्मैर्ब्राह्मणम्भुनक्त्यर्च्चया च दानेन चाज्येयतया चावद्ध्यतया च ॥ १ ॥ ये ह वै के च श्रमाः । इमे द्यावापृथिवी ऽअन्तरेण स्वाद्ध्यायो हैव तेषाम्परमता काष्ठा य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्यः ॥ २ ॥ यद्यद्ध वा ऽअयञ्छन्दसः । स्वाद्ध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टम्भवति य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्यः ॥ ३ ॥ यदि ह वा अप्प्यभ्यक्तः । अलङ्कृतः सुहितः सुखे शयने शयानः स्वाद्ध्यायमधीत ऽआ हैव स नखाग्ग्रेभ्यस्तप्प्यते य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्यः ॥ ४ ॥ मधु ह वा ऽऋचः । घृतꣳ ह सामान्यमृतं यजूꣳषि यद्ध वा ऽअयं वाकोवाक्क्यमधीते क्षीरौदनमाꣳसौदनौ हैव तौ ॥ ५ ॥ मधुना ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वानृचोऽहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ६ ॥ घृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्त्सामान्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ७ ॥ अमृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्यजूꣳष्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥८॥ क्षीरौदनमाꣳसौदनाभ्याꣳ ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्वाकोवाक्क्यमितिहासपुराणमित्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वै-

र्भोगैः ॥ ९ ॥ यन्ति वा ऽआपः । एत्यादित्य ऽएति चन्द्रमा यन्ति नक्षत्राणि यथा ह वा ऽएता देवता नेयुर्न्न कुर्य्युरेवꣳ हैव तदहर्ब्राह्मणो भवति यदहः स्वाद्ध्यायन्ना-धीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्यस्तस्म्माद्प्यृचं वा यजु-र्वा साम वा गाथां वा कुंव्यां वाभिव्याहरेद्व्रतस्याव्य-वच्छेदाय ॥ १० ॥

पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ आख्यायिकया व्याहृत्युत्पत्तिकथनम् ]

प्रजापतिर्वा ऽइदमग्र ऽआसीत् । एक ऽएव सोऽका-मयत स्याम्प्रजायेयेति सोऽश्राम्म्यत्स तपोऽतप्यत तस्म्माच्छ्रान्तात्तेपानात्त्रयो लोका ऽअसृज्यन्त पृथिव्यन्त-रिक्षन्द्यौः ॥ १ ॥ स ऽइमाꣳस्त्रीꣳल्लोकानभितताप । तेभ्य-स्तप्तेभ्यस्त्रीणि ज्योतीꣳष्यजायन्ताग्निर्योऽयम्पवते सूर्य्यः ॥ २ ॥ स ऽइमानि त्रीणि ज्योतीꣳष्यभितताप । तेभ्य-स्तप्तेभ्यस्त्रयो वेदा ऽअजायन्ताग्नेर्ऋग्वेदो वायोर्यजु-र्वेदः सूर्य्यात्सामवेदः ॥ ३ ॥ स इमाꣳस्त्रीन्वेदानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्यृग्वेदा-द्भुव ऽइति यजुर्वेदात्स्वरिति सामवेदात्तदृग्वेदेनैव होत्रम-कुर्वत यजुर्वेदेनाद्ध्वर्य्यवꣳ सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रन्तेन ब्रह्मत्वमथोच्चक्राम ॥ ४ ॥ ते देवाः प्रजापतिमब्रुवन् । यदि न ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्केनैनम्भिषज्येमेति ॥ ५ ॥ स होवाच ।

यद्यृक्तो भूरिति चतुर्ग्गृहीतमाज्यङ्गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव ऽइति चतुर्ग्गृहीतमाज्यङ्गृहीत्वाग्नीध्रीये जुहवथान्वाहार्य्यपचने†वा हविर्यज्ञे यदि सामतः स्वरिति चतुर्ग्गृहीतमाज्यङ्गृहीत्वाहवनीये जुहवथ यद्यु ऽअविज्ञातमसस्सर्वाण्यनुद्रुत्याहवनीये जुहवथ तदृग्वेदेनैवऽर्ग्वेदम्भिषज्यति यजुर्वेदेन यजुर्वेदꣳ सामवेदेन सामवेदꣳ स यथा पर्वणा पर्व सन्दध्यादेवꣳ हैव स सन्दधाति य ऽएताभिर्ब्भिषजयत्यथ यो ह्यतोऽन्येन भिषज्यति यथा शीर्ण्णेन शीर्ण्णꣳ सन्धित्सेद्यथा वा शीर्ण्णे गरमभिनिदध्यादेवन्तत्तस्मादेवंविदमेव ब्रह्माणङ्कुर्वीत नानेवंविदम् ॥ ६ ॥ तदाहुः । यदृचा होत्रङ्क्रियते यजुषाध्वर्य्यवꣳ साम्नोद्गीथोऽथ केन ब्रह्मत्वमित्यनया त्रय्या विद्ययेति ह ब्रूयात् ॥ ७ ॥

पञ्चमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



[ अंश्वदाभ्ययोर्ग्रहयोरात्मवागादिरूपतया समुच्चित्यानुष्ठानम् ]

प्रजापतिर्ह वा ऽएष यदꣳशुः । सोऽस्यैष ऽआत्मैवात्मा ह्ययम्प्रजापतिर्व्वागेवादाभ्यः स यदꣳशुङ्गृहीत्वादाभ्यङ्गृह्णात्यात्मानमेवास्यैतत्संस्कृत्य तस्मिन्नेतां व्वाचम्प्रतिष्ठापयति ॥ १ ॥ अथ मनो ह वा ऽअꣳशुः । व्वागदाभ्यः प्प्राण ऽएवाꣳशुरुदानोऽदाभ्यश्चक्षुरेवाꣳशुः श्रोत्रमदा-

† अन्वाहार्यपचने—दक्षिणाग्नौ

ब्भ्यस्तद्यदेतौ ग्ग्रहौ गृह्णन्ति सर्व्वत्त्वायैव कृत्स्नतायै ॥ २ ॥ अथ देवाश्च ह वा ऽअसुराश्च । उभये प्प्राजापत्त्या ऽअस्प्पर्द्धन्त त ऽएतस्म्मिन्नेव यज्ञे प्प्रजापतावस्प्पर्द्धन्ता-स्म्माकमयꣳ स्यादस्म्माकमयꣳ स्यादिति ॥ ३ ॥ ततो देवाः । अर्च्चन्तः श्राम्म्यन्तश्चेरुस्त ऽएतच्छन्दद्दृशुरेत-मदाब्भ्यन्तमगृह्णत ते सवनानि प्प्रावृहन्त ते सर्व्वं य्यज्ञꣳ समवृञ्जतान्तरायन्नसुरान्न्यज्ञात् ॥ ४ ॥ ते होचुः । अदभाम वा ऽएनानिति तस्म्मादुदाब्भ्यो न वै नोऽदभन्निति तस्म्मा-दुदाब्भ्यो वाग्ग्वा ऽअदाब्भ्यः सेयमदब्धा वाक्तस्म्मा-द्द्वेवादाब्भ्य ऽएवꣳ ह वै द्द्विषतो ब्भ्रातृव्व्यस्य सर्व्वं य्यज्ञꣳ संव्वृङ्क्त ऽएवन्द्द्विषन्तम्भ्रातृव्व्यꣳ सर्व्वस्म्माद्यज्ञा-न्निर्ब्भजति बहिर्द्धा करोति य ऽउ ऽएवमेतद्वेद ॥ ५ ॥ स येनैव पात्रेणाꣳशुङ्गृह्णाति । तस्म्मिन्नेव पात्त्रे निग्ग्राब्भ्या-ब्भ्योऽप ऽआनीय तस्म्मिन्नेतानꣳशून्न्गृह्णाति A ॥६॥ 'उपयाम[2]-गृहीतोऽसि । अग्ग्नये त्त्वा गायत्रच्छन्दसङ्गृह्णामी'ति गायत्र-म्प्रातःसवनन्तत्प्रातःसवनम्प्रवृहन्ती'न्द्राय[3] त्त्वा त्रिष्टुप्प्छन्द-सङ्गृह्णामी'ति त्रैष्टुभम्माद्ध्यन्दिनꣳ सवनन्तन्माद्ध्यन्दिनꣳ सवनम्प्रवृहति 'विश्श्वेब्भ्यस्त्वा देवेब्भ्यो जगच्छन्दसङ्-गृह्णामी'ति जागतन्तृतीयसवनन्तत्तृतीयसवनम्प्रवृहत्त्य'नुष्टु[4]-प्पोऽभिगर' ऽइति यद्वा ऽऊर्द्ध्वꣳ सवनेब्भ्यस्तदानुष्टुभन्त-

(१) अभिषोतव्यस्य सोमस्य सेवनीया आपो निग्राभ्या उच्यन्ते ।

(A) का० श्रौ० सू० अ० १२ क० ५ सू० १६ ।

(२) शु० य० वे० सं० अ० ८ क० ४७ । (३) शु० य० वे० सं० अ० ८ क० ४७ । (४) शु० य० वे० सं० अ० ८ क० ४७ । (५) शु० य० वे० सं० अ० ८ क० ४७ ।

दुवैतत्प्रवृहति तन्नाभिषुणोति वृज्रो वै ग्ग्रावा वागदाब्भ्यो नेद्वज्रेण वाचꣳ हिनसानीति ॥ ७ ॥ अꣳशूनेवाधूनोतिB । 'व्वेशीनान्त्वा[1] पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि भन्दुनानान्त्वा पत्मन्नाधूनोमि मदिन्तमानान्त्वा पत्मन्नाधूनोमि मधुन्तमानान्त्वा पत्मन्नाधूनोमी'त्येता वै दुवीरापस्तद्याश्चैव दुवीरापो याश्चेमा मानुष्ष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसन्दधाति ॥ ८ ॥ 'शुक्रन्त्वा[2] शुक्र ऽआधूनोमी'ति। शुक्रꣳ ह्येतच्छुक्र ऽआधूनो'त्यह्नो रूपे सूर्य्यस्य[3] रश्मिमष्ष्वि'ति तदुह्नश्चैवैनमेतद्रूपे सूर्य्यस्य च रश्मिमष्ष्वाधूनोति ॥ ९ ॥ 'ककुभꣳ[4] रूपं व्वृषभस्य रोचते बृहदि'ति । एतद्वै ककुभꣳ रूपं व्वृषभस्य रोचते बृहद्य ऽएष तपति 'शुक्रः[5] शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगा' ऽइति तच्छुक्रमेवैतच्छुक्रस्य पुरोगाङ्करोति सोमꣳ सोमस्य पुरोगां 'यत्ते[6] सोमादाब्भ्यन्नाम जागृवि तस्मै त्वा गृह्णामी'त्येतद्ध वा ऽअस्यादाब्भ्यन्नाम जागृवि यद्वाक्तद्वाचमेवैतद्वाचे गृह्णाति ॥ १० ॥ अथोपनिष्क्रम्म्य जुहोति* । 'तस्मै[7] ते सोम सोमाय स्वाहे'ति तत्सोममेवैतत्सोमाय जुहोति तथो वाचमग्नौ न प्प्रवृणक्त्यथ हिरण्यमभिव्व्यनित्य-

(B) का० श्रौ० सू० १२. ५. १९ ।

( १ ) शु० य० वे० सं० अ० ८ क० ४८ । ( २ ) शु० य० वे० सं० अ० ८ क० ४८ ।
( ३ ) शु० य० वे० सं० अ० ८ क० ४८ । ( ४ ) शु० य० वे० सं० अ० ८ क० ४९ ।
( ५ ) शु० य० वे० सं० अ० ८ क० ४९ । ( ६ ) शु० य० वे० सं० अ० ८ क० ४९ ।

* "तस्मै त इति जुहोति" का० श्रौ० सू० १२. ५. २ ।

(७) शु० य० वे० सं० अ० ८ क० ४९ ।

सावेव बन्धुस्तस्य तावतीरेव दक्षिणा यावतीरꣳशोः *॥ ११ ॥ अथाꣳशूँन्पुनरप्यर्जति †। 'उशिक्त्वन्देव सोमाग्नेः प्प्रियम्पाथोऽपीहि वशी त्त्वन्देव सोमेन्द्रस्य प्प्रियम्पाथोऽपीह्यस्म्मत्सखा त्त्वन्देव सोम विश्श्वेषान्देवानाम्प्रियम्पाथोऽपीही'ति सवनानि वा ऽअदः प्प्रवृहति तान्न्येवैतत्पुनराप्प्याययत्त्ययातयामानि करोति तैरयातयामैरुर्यज्ञन्तन्न्वते ॥ १२ ॥

पञ्चमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ आख्यायिकया समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्ति-साधनताकथनम् ]

भृगुर्ह वै व्वारुणिः। व्वरुणम्पितरं व्विद्ययातिमेने तद्ध व्वरुणो विद्वाञ्चकारातिवै मा विद्यया मन्न्यत ऽइति ॥ १ ॥ स होवाच । प्राङ् पुत्रक व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वा दक्षिणा व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वा प्प्रत्यग्व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वोदग्व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वैतयोः पूर्वयोरुत्तरमन्न्ववान्तरदेशं व्रजतात्तत्र यत्पश्श्येस्तन्न्म ऽआचक्षीथा ऽइति ॥ २ ॥ स ह तत ऽएव प्प्राङ् प्रवव्राज । इदु पुरुषैः पुरुषान्न्पर्वाण्ण्येषाम्पर्वशः संव्व्रश्च्यम्पर्वशो विभजमानानिदन्तवेदम्म-

* "अꣳशुवद्दक्षिणा" का० श्रौ० सू० १२. ५. २२।

† का० श्रौ० सू० १२. ५. २१।

( १ ) शु० य० वे० सं० अ० ८ क० ५०।

मेति स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषाः पर्वाण्ण्येषाम्पर्वशः संव्वृश्च्यम्पर्वशो ऽव्यभक्षतेति ते होचुरित्थं व्वा ऽइमेऽस्म्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रित्त्यस्तीति काति पिता ते व्वेदेति ॥ ३ ॥ स ह तत ऽएव दक्षिणा प्प्रवव्राज । इदु पुरुषैः पुरुषान्न्पर्वाण्ण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो विभजमानानिदन्तवेदम्ममेति स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषाः पर्वाण्ण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो ऽव्यभक्षतेति ते होचुरित्थं व्वा ऽइमेऽस्म्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रित्त्यस्तीति काति पितैव ते व्वेदेति ॥ ४ ॥ स ह तत ऽएव प्प्रत्यङ् प्रवव्राज । इदु पुरुषैः पुरुषाँस्तूष्ण्णीमासीनाँस्तूष्ण्णीमासीनैरद्यमानान्त्स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषास्तूष्ण्णीमासीनाँस्तूष्ण्णीमासीना ऽअदन्तीति ते होचुरित्थं व्वा ऽइमेऽस्म्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रित्त्यस्तीति काति पितैव ते व्वेदेति ॥ ५ ॥ स ह तत ऽएवोदङ् प्रवव्राज । इदु पुरुषैः पुरुषानाक्क्रन्दयत ऽआक्क्रन्दयद्भिरद्यमानान्त्स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषा ऽआक्क्रन्दयत ऽआक्क्रन्दयन्तोऽदन्तीति ते होचुरित्थं व्वा ऽइमेऽस्म्मानमु-

१ ) 'ग' 'ज' पुस्तकयोः 'एदु' इति पाठ उपलभ्यते ।

ष्मिमँल्लोकेऽसचन्त तान्वयमिदमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्तीश्रिर्त्त्यस्तीति काति पितैव ते वेदेति ॥ ६ ॥ स ह तत ऽएवैतयोः पूर्वयोः। उत्तर-मन्ववान्तरदेशम्प्रवव्राजेदु स्त्रियौ कल्ल्याणीश्चातिकल्ल्या-णीश्च ते ऽअन्तरेण पुरुषः कृष्णणः पिङ्गाक्षो दण्डपाणि-स्तस्थौ तꣳ हैनन्दृष्ट्वा भीर्विवेद स हेत्त्य संविवेश तꣳ ह पितोवाचाधीष्ष्व स्वाद्ध्यायङ्कस्म्मान्नु स्वाद्ध्यायन्नाधीष ऽइति स होवाच किमद्ध्येष्ष्ये न किञ्चनास्तीति तद्ध व्वरुणो विदाञ्चकाराद्ध्येग्ग्वा ऽइति ॥ ७ ॥ स होवाच। यान्वै-तत्प्राच्च्यान्दिश्श्यद्राक्षीः पुरुषैः पुरुषान्न्पर्वाण्ण्येषाम्पर्वशः संव्वृश्चम्पर्वशो विभजमानानिदन्तवेदम्ममेति व्वनस्प्पतयो वै ते ऽअभूवन्त्स यद्वनस्प्पतीनाꣳ समिधमादधाति तेन व्वनस्प्पतीनवरुन्द्धे तेन व्वनस्प्पतीनाँल्लोकञ्जयति ॥ ८ ॥ अथ यानेतद्दक्षिणायान्दिश्श्यद्राक्षीः। पुरुषैः पुरुषान्न्पर्वा-ण्ण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो विभजमानानिदन्तवेदम्म-मेति पशवो वै ते ऽअभूवन्त्स यत्पयसा जुहोति तेन पशूनवरुन्द्धे तेन पशूनाँल्लोकञ्जयति ॥ ९ ॥ अथ यानेतत्प्रती-च्च्यान्दिश्श्यद्राक्षीः। पुरुषैः पुरुषाँस्तूष्ष्णीमासीनाँस्तूष्ष्णी-मासीनैरद्ध्यमानानोषधयो वै ता ऽअभूवन्त्स यत्तृणेनाव-ज्ज्योतयति तेनौषधीरवरुन्द्धे तेनौषधीनाँल्लोकञ्जयति ॥ १० ॥ अथ यानेतदुदीच्च्यान्दिश्श्यद्राक्षीः। पुरुषैः पुरुषानाक्क्र-न्दयत ऽआक्क्रन्दयद्भिरद्ध्यमानानापो वै ता ऽअभूवन्त्स

(१) 'घ्र' इत्यस्य स्थाने 'द्रा' इति 'ग' 'ज' पुस्तकयोः।

यदपः प्प्रत्यानयति तेनापोऽवरुन्द्धे तेनापाँल्लोकञ्जयति ॥ ११ ॥ अथ ये ऽएते । स्त्रियावद्राक्षीः कल्ल्याणीञ्चाति-कल्ल्याणीञ्च सा या कल्ल्याणी सा श्श्रद्धा स यत्पूर्वा-माहुतिञ्जुहोति तेन श्श्रद्धामवरुन्द्धे तेन श्श्रद्धाञ्जयत्यथ यातिकल्ल्याणी साऽश्श्रद्धा स यदुत्तरामाहुतिञ्जुहोति तेनाश्श्रद्धामवरुन्द्धे तेनाश्श्रद्धाञ्जयति ॥१२॥ अथ य ऽएने । सोऽन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिरस्त्था-त्क्रोधो वै सोऽभूत्स यत्स्रुच्च्यप ऽआनीय निनयति तेन क्क्रोधमवरुन्द्धे तेन क्क्रोधञ्जयति स य ऽएवं विद्वान-ग्निहोत्रञ्जुहोति तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ १३ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ आख्यायिकयाग्निहोत्राहुतिप्राशस्त्यप्रतिपादनम् ]

जनको ह वै वैदेहः । ब्ब्राह्मणैर्द्धावयद्भिः समाजगाम श्श्वेतकेतुनारुणेयेन सोमशुष्ष्मेण सात्त्ययज्ञिना याज्ञ-वल्क्येन तान्होवाच कथङ्कथमग्निहोत्रञ्जुहुथेति ॥ १ ॥ स होवाच । श्श्वेतकेतुरारुणेयो घर्म्माविव सम्म्राडहमजस्त्रौ यशसा विष्प्पन्दमानावन्न्योऽन्न्यस्मिञ्जुहोमीति कथन्त-दित्यादित्त्यो वै घर्म्मस्तः सायमग्नौ जुहोम्म्यग्निर्वै घर्म्म-स्तम्प्रातरादित्त्ये जुहोमीति किः स भवति य ऽएवञ्जुहोत्त्य-जस्त्र ऽएव श्श्रिया यशसा भवत्त्येतयोश्च देवतयोः सायुज्यः सलोकताञ्जयतीति ॥ २ ॥ अथ होवाच सोमशुष्ष्मः सात्त्य-यज्ञिः । तेज ऽएव सम्म्राडहन्तेजसि जुहोमीति कथन्त-

(१) 'विष्यन्द' इति 'ग' 'ज' पुस्तकयोः ।

दित्यादित्यो वै तेजस्तꣳ सायमग्नौ जुहोम्यग्निर्वै तेजस्तम्प्रातरादित्ये जुहोमीति किꣳ स भवति य ऽएवञ्जुहोतीति तेजस्वी यशस्व्यन्नादो भवत्येतयोश्चैव देवतयोः सायुज्यꣳ सलोकताञ्जयतीति ॥ ३ ॥ अथ होवाच याज्ञवल्क्यः । यदहमग्निमुद्धराम्यग्निहोत्रमेव तदुद्यच्छाम्यादित्यं वा ऽअस्तं यन्तꣳ सर्वे देवा ऽअनुयन्ति ते म ऽएतमग्निमुद्धृतन्दृष्ट्वोपावर्त्तन्तेऽथाहम्पात्राणि निर्णिज्योपवाप्याग्निहोत्रीन्दोहयित्वा पश्यन्पश्यतस्तर्प्पयामीति त्वन्नेदिष्ठं याज्ञवल्क्याग्निहोत्रस्यामीमाꣳसिष्ठा धेनुशतन्ददामीति होवाच न त्वेवैनयोस्त्वमुत्क्रान्तिन्न गतिन्न प्रतिष्ठान्न तृप्तिन्न पुनरावृत्तिन्न लोकम्प्रत्युत्थायिनमित्युक्त्वा रथमास्थाय प्रधावयाञ्चकार ॥ ४ ॥ ते होचुः । अति वै नोऽयꣳ राजन्यबन्धुरवादीद्धन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति स होवाच याज्ञवल्क्यो ब्राह्मणा वै वयꣳ स्मो राजन्यबन्धुरसौ यद्यमुं वयञ्जयेम कमजैष्मेति ब्रूयामाथ यद्यसावस्माञ्जयेद्ब्राह्मणान्राजन्यबन्धुरजैषीदिति नो ब्रूयुर्म्मेदमाद्दृमिति तद्धास्य जज्ञुरथ ह याज्ञवल्क्यो रथमास्थायानुप्रधावयाञ्चकार तꣳ हान्वाजगाम स होवाचाग्निहोत्रं याज्ञवल्क्य वेदितू३मित्यग्निहोत्रꣳ सम्राडिति ॥ ५ ॥ ते वा ऽएते ऽआहुती हुते ऽउत्क्रामतः । ते ऽअन्तरिक्षमाविशतस्ते ऽअन्तरिक्षमेवाहवनीयङ्कुर्वाते वायुꣳ समिधम्मरीचीरेव शुक्रामाहुतिन्ते ऽअन्तरिक्षन्तर्प्पयतस्ते तत ऽउत्क्रामतः ॥ ६ ॥ ते दिवमाविशतः । ते दिवमेवा-

हवनीयङ्कुर्व्वाते ऽआदित्यꣳ समिधश्चन्द्रमसमेव शुक्रामाहुतिन्ते दिवन्तर्प्पयतस्ते तत ऽआवर्त्तेते ॥ ७ ॥ ते ऽइमामाविशतः । ते ऽइमामेवाहवनीयङ्कुर्व्वाते ऽअग्निꣳ समिधमोषधीरेव शुक्रामाहुतिन्ते ऽइमान्तर्प्पयतस्ते तत ऽउत्क्रामतः ॥ ८ ॥ ते पुरुषमाविशतः । तस्य मुखमेवाहवनीयङ्कुर्व्वाते जिह्वाꣳ समिधमन्नमेव शुक्रामाहुतिन्ते पुरुषन्तर्प्पयतः स य ऽएवं विद्वानश्नात्यग्निहोत्रमेवास्य हुतम्भवति ते तत ऽउत्क्रामतः ॥९॥ [अर्धः प्रपाठकः ॥५१॥] ते स्त्रियमाविशतः । तस्या ऽउपस्थमेवाहवनीयङ्कुर्व्वाते धारकाꣳ समिधन्धारका ह वै नामैषैतया ह वै प्प्रजापतिः प्प्रजा धारयाञ्चकार रेत ऽएव शुक्रामाहुतिन्ते स्त्रियन्तर्प्पयतः स य ऽएवं विद्वान्मिथुनमुपैत्यग्निहोत्रमेवास्य हुतम्भवति यस्ततः पुत्रो जायते स लोकः प्प्रत्युत्थाय्येतदग्निहोत्रं ऽयाज्ञवल्क्य नातः परमस्तीति होवाच तस्मै ह याज्ञवल्क्यो व्वरन्ददौ स होवाच कामप्प्रश्न ऽएव मे त्वयि याज्ञवल्क्यास दिति ततो ब्ब्रह्मा[1] जनक ऽआस ॥ १० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ आख्यायिकयाऽग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्त्वतः प्राणशब्दाभिधेयपरमात्मरूपताप्रतिपादनम् ]

जनको ह व्वैदेहः । बहुदक्षिणेन यज्ञेनेजे स ह गवाꣳ सहस्रमवरुन्धन्नुवाचैता वो ब्ब्राह्मणा यो ब्ब्रह्मिष्ठः स ऽउदजतामिति ॥ १ ॥ स होवाच याज्ञवल्क्यः ।

( १ ) ब्रह्मिष्ठः ।

अर्वाचीरेता ऽइति ते होचुस्त्वꣳ स्विन्नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ ऽइति स होवाच नमोऽस्तु ब्रह्मिष्ठाय गोकामा ऽएव वयꣳ स्म ऽइति ॥ २ ॥ ते होचुः । को न ऽइमम्प्रक्ष्यतीति स होवाच विदग्धः शाकल्ल्योऽहमिति तꣳ ह प्रतिख्यायोवाच त्वाꣳ स्विच्छाकल्ल्य ब्राह्मणा ऽउल्म्मुकावक्षयणमक्रता३ ऽइति[1] ॥ ३ ॥ स होवाच । कति देवा याज्ञवल्क्येति त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति त्रय ऽइत्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति द्वावि-त्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येत्त्यद्ध्यर्द्ध ऽइत्त्यो-मिति होवाच कत्त्येव देवा याज्ञवल्क्येत्त्येक ऽइत्त्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सह-स्रेति ॥ ४ ॥ स होवाच । महिमान ऽएवैषामेते त्रयस्त्रिꣳ-शत्त्वेव देवा ऽइति कतमे ते त्रयस्त्रिꣳशदित्त्यष्टौ वसव ऽएकादश रुद्रा द्वादशादित्त्यास्त ऽएकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ ५ ॥ कतमे वसव ऽइति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चादित्त्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव ऽएते हीदꣳ सर्वं वासयन्ते ते यदिदꣳ सर्वं वासयन्ते तस्माद्वसव ऽइति ॥ ६ ॥ कतमे रुद्रा ऽइति । दशेमे पुरुषे प्राणा-ऽआत्मैकादशस्ते यदास्माच्छरीरादुत्क्रामन्त्यथ रोद-

(१) अर्धदग्धकाष्ठमुल्मुकम्—तस्य वहिर्निरसनमवक्षयणम् ।

यन्ति तद्यद्रोदयन्ति तस्म्मादुद्रा ऽइति ॥ ७ ॥ कतम ऽआदित्त्या ऽइति । द्वादश मासाः सँव्वत्सरस्यैत ऽआदित्त्या ऽएते हीदꣳ सर्व्वमाददाना यन्ति ते यदिदꣳ सर्व्वमाददाना यन्ति तस्म्मादादित्त्या ऽइति ॥ ८ ॥ कतम ऽइन्द्रः कतमः प्प्रजापतिरिति । स्तनयित्त्नुरेवेन्द्रो यज्ञः प्प्रजापतिरिति कतम स्तनयित्त्नुरित्त्यशनिरिति कतमो यज्ञ ऽइति पशव ऽइति ॥ ९ ॥ कतमे ते त्रयो देवा ऽइति । इम ऽएव त्रयो लोका ऽएषु हीमे सर्व्वे देवा ऽइति कतमौ तौ द्वौ देवावित्त्यन्नञ्चैव प्प्राणश्चेति कतमोऽद्ध्यर्द्ध ऽइति योऽयम्पवत ऽइति [1]यदस्म्मिन्निदꣳ सर्व्वमद्ध्याद्ध्र्नोत्तेनाद्ध्यर्द्ध ऽइति कतम ऽएको देव ऽइति प्प्राण ऽइति ॥ १० ॥ स होवाच । अनतिप्प्रश्न्याम्मा देवतामत्त्यप्राक्षीः पुरेतित्थ्यै मरिष्ष्यसि न तेऽस्त्थीनि चन गृहान्प्प्राप्प्स्यन्तीति स ह तथैव ममार तस्य हाप्प्यन्न्यन्म्मन्न्यमानाः परिमोषिणोऽस्त्थीन्न्युपजह्रुस्तस्म्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति ॥ ११ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥



[ पशुबन्धप्रशंसा ]

पशुबन्धेन*यजते । पशवो वै पशुबन्धः स यत्पशुबन्धेन यजते पशुमानसानीति तेन गृहेषु † यजेत

( १ ) 'यदस्म्मिन्निदꣳ सर्व्वमद्ध्याध्र्नोत्तेनाद्ध्यर्द्ध ऽइति' इति पाठः 'ग' 'ज' पुस्तकयोर्नास्ति ।

* पशुर्बध्यते यज्ञार्थं यस्मिन्कर्मणि स पशुबन्धाख्यो यागः ।
उद्भिदा यजेतेतिवद्यजिसमानाधिकृतत्वाद्यागनामधेयम् ॥

† का० श्रौ० सू० ६. १. ३. ।

पशून्बध्ना ऽइति तेन सुयवसे (A) यजेत सुयवसे पशून्बध्ना इति जीर्ष्यन्ति ह वै जुह्वतो यजमानस्याग्नयोऽग्नीञ्जीर्ष्यतोऽनु यजमानो यजमानमनु गृहाश्च पशवश्च ॥ १ ॥ * स यत्पशुबन्धेन यजते । अग्नीनेवैतत्पुनर्णवान्कुरुतेऽग्नीनाम्पुनर्णवतामनु यजमानो यजमानमनु गृहाश्च पशवश्चायुष्यो ह वा ऽअस्यैष ऽआत्मनिष्क्रयणो भवति माᳬंसीयन्ति (B) ह वै जुह्वतो यजमानस्याग्नयस्ते यजमानमेव ध्यायन्ति यजमानᳬं सङ्कल्पयन्ति पचन्ति वा ऽअन्येष्वग्निषु व्वृथा माᳬंसमथैतेषान्नातोऽन्या माᳬंसाशा विद्यते यस्यो चैते भवन्ति ॥ २ ॥ स यत्पशुबन्धेन यजते । आत्मानमेवैतन्निष्क्रीणीते वीरेण वीरं वीरो हि पशुर्व्वीरो यजमान ऽएतदु ह वै परममन्नाद्यं यन्माᳬंसᳬं स परमस्यैवान्नाद्यस्यात्ता भवति तं वै सँव्वत्सरो नानीजानमतीयादायुर्व्वै सँव्वत्सर आयुरेवैतदमृतमात्मन्धत्ते ॥ ३ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पशुबन्धस्येष्टिविधत्वम्, सोमविधत्वञ्च ]

हविर्यज्ञविधो ह वा ऽअन्यः पशुबन्धः । सवविधोऽन्यः स हैष हविर्यज्ञविधो (1) यस्मिन्व्रतमुपनयति

(A) शोभनानि यवसानि तृणानि यस्मिन्नृतौ स कालः सुयवसः ।

* शतम् ५९०० ।

(B) मांसीयन्ति = मांसं खादितुमिच्छन्ति ।

(1) "व्रतोपायन-प्रणीताज्यभाग-भागावदान-पूर्णपात्र-विष्णुक्रमान् कुर्याद्धविर्यज्ञविधे" (का० श्रौ० सू० ६. २. ४)

यस्मिन्नपः प्रणयति यस्मिन्पूर्णपात्रन्निनयति यस्मिन्विष्णुक्रमान्क्रमयत्यथ हैष सर्वविधो यस्मिन्नेतानि न क्रियन्ते ॥ १ ॥ तदाहुः । इष्टिः पशुबन्धा३ महायज्ञा३ ऽइति महायज्ञ ऽइति ह ब्रूयादिष्टिं वै तर्हि पशुबन्धमकर्त्त्येनमकृक्षथा ऽइत्येनम्ब्रूयात् ॥ २ ॥ तस्य प्रयाजा ऽएव प्रातःसवनम् । अनुयाजास्तृतीयसवनम्पुरोडाश ऽएव माध्यन्दिनः सवनम् ॥ ३ ॥ तद्धैके । वपायाᳬं हुतायान्दक्षिणा नयन्ति तदु तथा न कुर्याद्यो हैनन्तत्र ब्रूयाद्बर्हिर्द्धा इवा ऽअयम्प्राणेभ्यो दक्षिणा ऽअनैषीन्न प्राणानदक्षदन्धो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्यात् । पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेदैन्द्रो वा ऽअयम्मध्यतः प्राण ऽइममेवैतदैन्द्रम्मध्यतः प्राणन्दक्षिणाभिर्दक्षयत्यैन्द्रं वै माध्यन्दिनः सवनम्माध्यन्दिने वै सवने दक्षिणा नीयन्ते तस्मात्पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेत् ॥ ५ ॥ तदाहुः । अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमदिदीक्ष ऽइत्यावभृथादनूदृहेयुरध्वर्युश्च प्रतिप्रस्थाता च होता च मैत्रावरुणश्च ब्रह्मा चाग्नीध्रश्चैतैर्वा ऽएष षड्ढोता * तमनुद्रुत्य षड्ढोतारञ्जुहोत्येकामाहुतिङ्कृत्वा पञ्च वाज्या "द्यौष्पृष्ठमन्तरिक्षमात्मा-ङ्गैर्यज्ञम्पृथिवीᳬं शरीरैः । वाचस्पतेऽच्छिद्रया वाचा-

* षट् होतारो होमनिष्पादका यस्मिन् स षड्ढोता ।

( १ ) "षड्ढोतारं पञ्चगृहीतं मनसानुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा" ( का० श्रौ० सू० ६. १. १३ )

च्छिद्रया जुह्वा दिवि देवावृधꣳ होत्रामैरयत्स्वाहे'ति सैव दीक्षा ॥ ६ ॥ तदाहुः । अद्धुर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमवभृथमवनेष्यसीति स यद्धृदयशूलेन चरन्ति स हैवैतस्यावभृथः ॥ ७ ॥ मधुको ह स्माह पैङ्ग्यः । विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके दिवि वै सोम ऽआसीत्तङ्गायत्री वयो भूत्वाहरत्तस्य यत्पर्ण्णमच्छिद्यत तत्पर्ण्णस्य पर्ण्णत्त्वमिति न्वा ऽएतद्ब्राह्मणमुच्यते विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके स हैष विसोमेन पशुबन्धेन यजते योऽन्न्यम्पालाशाद्यूपङ्कुरुतेऽथ हैष ससोमेन पशुबन्धेन यजते यः पालाशं य्यूपङ्कुरुते तस्म्मात्पालाशमेव यूपङ्कुर्वीत[1] ॥ ८ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ बहुसारस्य यूपस्य पशुविरोधित्वम्, अल्पसारस्य पशुसमृद्धिकरत्वञ्च ]

स य ऽएष बहुसारः । स हापशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपन्न कुर्वीताथ य ऽएष फल्गुप्प्रासहः स ह पशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपङ्कुर्वीत ॥ १ ॥ अथ यस्यैतद्वक्क्रस्य सतः । शूल ऽइवाग्ग्रम्भवति स ह कपोती नाम स यो ह तादृशं य्यूपङ्कुरुते पुरा हायुषोऽमुँल्लोकमेति तस्म्मात्तादृशमायुष्क्कामो यूपन्न कुर्वीत ॥ २ ॥ अथ य ऽएष ऽआनतः । उपरिष्टादुपनतो मद्ध्ये सोऽशनायै रूपꣳ स यो ह तादृशं य्यूपङ्कुरुतेऽशनायुका हास्य भार्य्या

(१) का० श्रौ० सू० अ० ६ क० १ सू० ८ ।

भवन्ति तस्मात्तादृशमन्नाद्यकामो यूपन्न कुर्वीताथ य ऽएष ऽआनत ऽउपरिष्टादुपनतो मद्ध्ये सोऽन्नाद्यस्य रूपन्तस्मात्तादृशमन्नाद्यकामो यूपङ्कुर्वीत ॥ ३ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपप्रमाणम् ]

स यत्पशुना यक्ष्यमाणः । एकारत्निं यूपङ्कुरुत ऽइममेव तेन लोकञ्जयत्यथ यद्द्व्यरत्निमन्तरिक्षलोकमेव तेन जयत्यथ यत्र्यरत्निन्दिवमेव तेन जयत्यथ यच्चतुररत्निन्दिश ऽएव तेन जयति स वा ऽएष त्र्यरत्निर्वैव चतुररत्निर्वा * पशुबन्धयूपो भवत्यथ योऽत ऽऊर्द्ध्वः सौम्यस्यैव सोऽद्ध्वरस्य ॥ १ ॥ तदाहुः । यजेदाज्यभागौ ना३ ऽइति यजेदित्याहुश्चक्षुषी वा ऽएते यज्ञस्य यदाज्यभागौ किमृते पुरुषश्चक्षुर्भ्यार्थ्ठं स्यादिति यावद्वै भागिनथ्ठं स्वेन भागधेयेन न निर्भजन्त्यनिर्भक्तो वै स तावन्मन्यतेऽथ यदैव तथ्ठं स्वेन भागधेयेन निर्भजन्त्यथैव स निर्भक्तो मन्यते स यत्रैतद्धोतान्न्वाहास्न्ना रक्षः सःसृजतादिति तदेनथ्ठं स्वेन भागधेयेन निर्भजति ॥ २ ॥ एतद्वै पशोः संज्ञप्यमानस्य । हृदयः शुक्समवैति हृदयाच्छूलन्तद्ये सह हृदयेन पशुथ्ठं श्रपयन्ति पुनः पशुः शुगनुविष्पन्देत पार्श्वेत ऽएवैनत्काष्ठे प्रवृह्य श्रपयेत् † ॥ ३ ॥ उपस्तृणीत ऽआज्यम् । तत्पृथिव्यै रूपङ्करोति हिरण्यशकलमवदधाति तदग्ने रूप-

* "त्र्यरत्निश्चतुररत्निर्वा" का० श्रौ० सू० ६. १. ४।
† का० श्रौ० सू० ६. ७. १४।

ङ्करोति वपामवदधाति तदन्तरिक्षस्य रूपङ्करोति हिरण्यशकलमवदधाति तदादित्यस्य रूपङ्करोत्यथ यदुपरिष्टादभिघारयति तद्दिवो रूपङ्करोति सा वा ऽएषा पञ्चावत्ता वपा भवति पाङ्क्तो यज्ञः [A] पाङ्क्तः पशुः [B] पञ्च ऽऋतवः संवत्सरस्य तस्मात्पञ्चावत्ता वपा भवति ॥ ४ ॥

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ अग्निहोत्रे मह इत्युपस्थानं कर्तव्यमिति विधातुमाख्यायिका ]

तद्यथा ह वै । इदꣳ रथचक्रं वा कौलालचक्रं वा प्प्रतिष्ठितङ्क्रन्देदेवꣳ हैवेमे लोका ऽअध्रुवा ऽअप्प्रतिष्ठिता ऽआसुः ॥ १ ॥ स ह प्प्रजापतिरीक्षाञ्चक्रे । कथन्न्विमे लोका ध्रुवाः प्प्रतिष्ठिताः स्युरिति स ऽएभिश्चैव पर्वतैर्न्नदीभिश्चेमामदृꣳहद्वयोभिश्च मरीचिभिश्चान्तरिक्षञ्जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥ स मह ऽइति व्व्याहरत् । पशवो वै महस्तस्माद्यस्यैते बहवो भवन्ति भूयिष्ठमस्य कुले महीयन्ते बहवो ह वा ऽअस्यैते भवन्ति भूयिष्ठꣳ हास्य कुले महीयन्ते तस्माद्यद्येनमायतनाद्बाधेरन्न्वा प्र वा यापयेयुरग्निहोत्रꣳ हुत्वा मह ऽइत्युपतिष्ठेत प्प्रति प्प्रजया पशुभिस्तिष्ठति नायतनाच्च्यवते ॥ ३ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(A) धानाकरम्भादिपञ्चद्रव्यसाध्यत्वाद्यज्ञः पाङ्क्तः ।
(B) लोमत्वङ्मांसास्थिमज्जाख्यपञ्चधातुमयत्वात्पशुः पाङ्क्तः ।

[ आहितादिभेदेनाग्नेश्चातुर्विध्यम् ]

चत्त्वारो ह वा ऽअग्नयः । आहित ऽउद्धृतः प्प्रहृतो विहृतोऽयमेव लोक ऽआहितोऽन्तरिक्षलोक ऽउद्धृतो द्यौष्प्रहृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृत ऽआदित्त्यः प्प्रहृतश्च्चन्द्रमा विहृतो गार्हपत्त्य ऽएवाहित ऽआहवनीय ऽउद्धृतोऽथ यमेतमाहवनीयात्प्राञ्चम्प्रणयन्ति स प्प्रहृतोऽथ यमेतमुदञ्चम्पशुश्रपणायाहरन्ति यञ्चोपयड्भ्यः स विहृतस्तस्म्मात्प्रहार्य्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ पशोः प्रजापतिः सूर्य इन्द्राग्नीति देवतात्रयप्रतिपादनम् ]

तदाहुः । किन्देवत्त्य ऽएष पशुः स्यादिति प्प्राजापत्त्यः स्यादित्त्याहुः प्प्रजापतिर्व्वा ऽएतमग्ग्रेऽभ्यपश्श्यत्तस्म्मात्प्राजापत्त्य ऽएवैष पशुः स्यादिति ॥ १ ॥ अथो ऽअप्प्याहुः । सौर्य्य ऽएवैष पशुः स्यादिति तस्म्मादेतस्मिम्मन्नस्तमिते पशवो बद्ध्यन्ते बद्ध्नन्त्त्येकाञ्च्यथागोष्ट्ठमेक ऽउपसमायन्ति तस्म्मात्सौर्य्य ऽएवैष पशुः स्यादिति ॥ २ ॥ अथो ऽअप्प्याहुः । ऐन्द्राग्न ऽएवैष पशुः स्यादित्त्येते वै देवते ऽअन्नवन्त्ये देवा यद्यार्त्तो यजते पारयत ऽएव यदि महसा यजते पारयत ऽएव तस्म्मादैन्द्राग्न * ऽएवैष पशुः स्यादिति ॥ ३ ॥ प्राण ऽएव पशुबन्धः । तस्म्माद्यावज्जी-

* "ऐन्द्राग्नः सौर्यः प्राजापत्यो वा यमिच्छेत्" ( का० श्रौ० सू० ६. १. २६ )

वति न्वस्यान्न्यः पशूनामीष्टे बद्धा ह्यस्म्मिन्नेते भवन्ति ॥४॥ स ह प्प्रजापतिरग्निमुवाच। यजै त्वया त्वा लभा ऽइति नेति होवाच वायुम्ब्रूहीति स ह वायुमुवाच यजै त्वया त्वा लभा ऽइति नेति होवाच पुरुषम्ब्रूहीति स ह पुरुषमुवाच यजै त्वया त्वा लभा ऽइति नेति होवाच पशून्ब्रूहीति स ह पशूनुवाच यजै युष्म्माभिरा वो लभा ऽइति नेति होचुश्चन्द्रमसम्ब्रूहीति स ह चन्द्रमसमुवाच यजै त्वया त्वा लभा ऽइति नेति होवाचादित्यम्ब्रूहीति स हादित्यमुवाच यजै त्वया त्वा लभा ऽइति तथेति होवाच य ऽउ त ऽएते नाचीकमन्त किमु म ऽएतेषु स्यादिति यद्यत्कामयेथा ऽइति तथेति तमालभत सोऽस्यायम्पशुरालब्धः संज्ञप्तोऽश्वयत्तमेताभिराप्प्रीभिराप्प्रीणात्तद्यदेनमेताभिराप्प्रीभिराप्प्रीणात्तस्म्मादाप्प्रियो नाम तस्म्मादु पशुः संज्ञप्तम्ब्रूयाच्छेतान्नु मुहूर्त्तमिति स यावन्तमश्वमेधेनेष्ट्वा लोकञ्जयति तावन्तमेनेन[1] जयति॥ ५ ॥ तम्प्राची दिक्। प्राणेत्यनुप्प्राणत्प्राणमेवास्म्मिँस्तदद्धात्तन्दक्षिणा दिग्व्यानेत्यनुप्प्राणद्व्यानमेवास्म्मिँस्तदद्धात्तम्प्रतीची दिगपानेत्यनुप्प्राणदपानमेवास्म्मिँस्तदद्धात्तमुदीची दिगुदानेत्यनुप्प्राणदुदानमेवास्म्मिँस्तदद्धात्तमूर्द्ध्वा दिक्समानेत्यनुप्प्राणत्समानमेवास्म्मिँस्तदद्धात्तस्म्मादु पुत्रञ्जातमकृत्तनाभिम्पञ्च ब्राह्मणान्ब्रूयादित्येनमनुप्प्राणितेति * यद्यु तान्न विन्देदुपि

(१) 'ते' इति 'ग' 'ज' पुस्तकयोः।

* पा० गृ० सू० १. १६. १०।

स्वयमेवानुपरिक्क्रामममनुप्प्राणण्यात्स सर्व्वमायुरेत्त्या हैव जरायै जीवति ॥ ६ ॥ स प्प्राणमेवाग्ग्नेरादत्त । तस्म्मादेष नानुपदूध्मातो नानुपज्ज्वलितो ज्ज्वलत्त्यात्तो ह्यस्य प्प्राण ऽआ ह वै द्विषतो ब्भ्रातृव्व्यस्य प्प्राणन्दत्ते य ऽएवं व्वेद ॥ ७ ॥ रूपमेव व्वायोरादत्त । तस्म्मादेतस्य लेलयत ऽइवैवो-पश्शृण्णवन्ति न त्त्वेनम्पश्श्यन्त्यात्तᳯं ह्यस्य रूपमा ह वै द्विषतो ब्भ्रातृव्व्यस्य रूपन्दत्ते य ऽएवं व्वेद ॥ ८ ॥ चित्त-मेव पुरुषस्यादत्त । तस्म्मादाहुर्द्देवचित्तन्त्वावतु मा मनुष्य-चित्तमित्त्यात्तᳯं ह्यस्य चित्तमा ह वै द्विषतोब्भ्रातृव्व्यस्य चित्तन्दत्ते य ऽएवं व्वेद ॥ ९ ॥ चक्षुरेव पशूनामादत्त । तस्म्मादेते चाकश्श्यमाना ऽइवैव न जानन्त्त्यथ यदैवो-पजिग्घ्रन्त्यथ जानन्त्त्यात्तᳯं ह्येषाञ्चक्षुरा ह वै द्विषतो ब्भ्रातृव्व्यस्य चक्षुर्द्दत्ते य ऽएवं व्वेद ॥ १० ॥ भामेव चन्द्रमस ऽआदत्त । तस्म्मादेतयोᳬ सदृशयोᳬ सतोर्न्नत-राश्चन्द्रमा भात्त्यात्ता ह्यस्य भा ऽआ ह वै द्विषतो ब्भ्रातृव्व्यस्य भान्दत्ते य ऽएवं व्वेद तद्यदादत्त तस्म्मा-दादित्त्यᳬ ॥ ११ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ पशुप्रायश्चित्ततया स्पृत्याख्यहोमविधानम् ]

केशिगृहपतीनामु ह । सम्म्राड्दुघाᳯं शार्द्दूलो जघान स ह ससत्त्रिण आमन्त्रयाञ्चक्क्रे केह प्प्रायश्चित्तिरिति ते होचुर्न्नेह प्प्रायश्चित्तिरस्ति खण्डिक ऽएवौद्धारिरस्य

प्प्रायश्चित्तिं व्वेद स ऽउ त ऽएतादृक्क्चैव कामयतेऽतश्च पापीय ऽइति ॥ १ ॥ स होवाच । सङ्गृहीतर्ठ्ठसुगृधि मे स्यन्त्स्यामि स यद्यह मे व्वक्ष्यति समाप्प्स्यामि यद्यु मा मारयिष्ष्यति यज्ञं व्विकृष्टमनु व्विकृक्ष्य ऽइति ॥ २ ॥ स ह युक्त्वा ययावाजगाम । तर्ठ्ठ ह प्प्रतिख्यायोवाच यन्न्वे- तान्न्येवाजिनानि मृगेषु भवन्त्यथैषाम्पृष्टीरपिशीर्ष्य पचामहे कृष्णाजिनम्मे ग्ग्रीवास्वाबद्धमित्त्येव मेदुमधृषोऽभ्यव- स्यन्तू३ मिति ॥ ३ ॥ नेति होवाच । सम्म्राड्दुघां* व्वै मे भगवर्ठ्ठ शार्दूलोऽवधीत्त्स यद्यह मे व्वक्ष्यसि समाप्प्स्यामि यद्यु मा मारयिष्ष्यसि यज्ञं व्विकृष्टमनु व्विकृक्ष्य ऽइति ॥ ४ ॥ स होवाच । आमन्त्रणीयान्न्वामन्त्रया ऽइति तान्न्हामन्त्र्योवाच यद्यस्म्मै व्वक्ष्याम्म्यमुष्ष्यैवेदम्प्रजा भविष्ष्यति न मम लोकी त्त्वहम्भविष्ष्यामि यद्यु व्वा ऽअस्म्मै न व्वक्ष्यामि ममैवेदम्प्रजा भविष्ष्यति नामुष्ष्य लोकी त्त्वसौ भविष्ष्यतीति ते होचुर्म्मा भगवो व्वोचोऽयं व्वाव क्षत्रियस्य लोक ऽइति स होवाच व्वक्ष्याम्म्येवामूर्व्वै रात्रयो भूयस्य ऽइति ॥ ५ ॥ तस्म्मा ऽउ हैतदुवाच । स्पृतीर्हुत्त्वान्न्यामाजतेति ब्ब्रूतात्त्सा ते सम्म्राड्दुघा स्यादिति चन्द्रात्ते मन स्पृणोमि स्वाहा सूर्य्यात्ते चक्षु स्पृणोमि स्वाहा व्वातात्ते प्प्राणान्त्स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रर्ठ्ठ स्पृणोमि स्वाहाद्भ्यस्ते लोहितर्ठ्ठ स्पृणोमि स्वाहा पृथिव्व्यै ते शरीरर्ठ्ठ स्पृणोमि स्वाहेत्त्यथान्न्यामाजतेति

* प्रवर्ग्यदोहनार्थां गामित्यर्थः ।

ब्ब्रूतात्सा ते सम्म्राड्दुघा स्यादिति ततो हैव स ऽउत्स-
साद कैशिनीरेवेमा ऽअप्प्येतर्हि प्प्रजा जायन्ते ॥ ६ ॥

## अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या॥१०२॥

## इत्यष्टमोऽध्यायः ॥ ८ ॥

अष्टाध्यायीनामैकादशं काण्डं समाप्तम्* ॥ ११ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ॥ ४३७ ॥

# अथ मध्यमनाम द्वादशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—दीक्षाक्रमः, सत्राणि, पृष्ठ्याऽभिप्लु-
स्वरसाम—विषुवन्महाव्रतादिनिरूपणम्' गवामयनम्, अग्निहोत्र-
प्रायश्चित्तम्, मृतकाग्निहोत्रम्, मृतस्यदाहः ]

## [ द्वादशाहे* दीक्षाक्रमः ]

॥ ॐ ॥ अयं वै यज्ञो योऽयम्पवते । तमेत ऽईप्सन्ति ये सँवत्सराय दीक्षन्ते तेषाङ्गृहपतिः प्प्रथमो दीक्षतेऽयं वै लोको गृहपतिरस्मिमन्न्वै लोक ऽइदꣳ सर्वम्प्रतिष्ठित-ङ्गृहपता ऽउ वै ससत्रिणः प्प्रतिष्ठिताः प्प्रतिष्ठायामेवै-तत्प्रतिष्ठाय दीक्षन्ते ॥ १ ॥ अथ ब्ब्रह्माणन्दीक्षयति । चन्द्रमा वै ब्ब्रह्मा सोमो वै चन्द्रमाः सौम्म्या ऽओषधय ऽओषधीस्तदनेन लोकेन सन्दधाति तस्मादेतावन्तरे-णान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेतौषधी-स्तदनेन लोकेन नानाकुर्य्यादुच्छोषुका ह स्युस्तस्मादेता-

---

* द्वादशाहो द्विविधः सत्रात्मकोऽहीनात्मकश्चेति । तयोर्लक्षणं यथा—'आसन उपयन्तीति सत्र-लिङ्गं यजत इत्यहीनस्य' ( का० श्रौ० सू० १२. १. ५. ) इति । यस्य उत्पत्तिवाक्ये आस् धातुः, उपोपसृष्ट इण् धातुर्वा श्रूयते तत् सत्रम् । यथा—'द्वादशाहमृद्धिकामा उपेयुः' 'देवा ह वै सत्रमासत' इति । यजधातुघटितवाक्यविहितत्वमहीनत्वम् । यथा—'द्वादशाहेन प्रजाकामं याजयेत्' इति ।

लक्षणान्तरञ्च—'उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य' ( का० सू० १२. १. ६ ) इति ।

अत्र सत्रे अहीने वा योऽहःशब्दो रात्रिशब्दो वा श्रूयते स सर्वोऽप्यहोरात्रसमुदायवाचकः । तेन द्वादशरात्रो द्वादशाह इति समानार्थक एव ।

( १ ) का० श्रौ० सू० १२. २. १५ ।

वन्तरेणान्न्यो न दीक्षेत ॥ २ ॥ अथोद्गातारन्दीक्षयति । पर्ज्जन्न्यो वा ऽउद्गाता पर्ज्जन्न्यादु वै व्वृष्टिर्ज्जायते व्वृष्टिन्तदोषधिभिः सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत व्वृष्टिन्तदोषधिभिर्न्नानाकुर्य्यादवर्षुको ह स्यात्तस्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ३ ॥ अथ होतारन्दीक्षयति । अग्निर्वै होताधिदेवतं व्वागध्यात्ममन्नं व्वृष्टिरग्निश्च तद्वाचश्चान्नेन सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेताग्निश्च तद्वाचश्चान्नेन नानाकुर्य्यादशनायुका ह स्युस्तस्मादेतावन्तरेणान्न्यो न दीक्षेतैताँश्चतुरोऽध्वर्य्युर्द्दीक्षयति ॥ ४ ॥ अथाध्वर्य्युम्प्रतिप्प्रस्थाता दीक्षयति । मनो वा ऽअध्वर्य्युर्व्वाग्घोता मनश्च तद्वाचश्च सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत मनश्च तद्वाचश्च नानाकुर्य्यात्प्रमायुका ह स्युस्तस्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ५ ॥ अथ ब्ब्रह्मणे ब्ब्राह्मणाच्छꣳसिनन्दीक्षयति । तꣳ हि सोऽन्न्वथोद्गात्रे प्प्रस्तोतारन्दीक्षयति तꣳ हि सोऽन्न्वथ होत्रे मैत्रावरुणन्दीक्षयति तꣳ हि सोऽन्न्वेताँश्चतुरः प्प्रतिप्प्रस्थाता दीक्षयति ॥ ६ ॥ अथाध्वर्य्यवे प्प्रतिप्प्रस्थातारेन्नेष्टारं दीक्षयति । तꣳ हि सोऽन्न्वेतेषां वै नवानाङ्क्लृप्प्तिमन्न्वितरे कल्प्पन्ते नव वै प्प्राणाः प्प्राणानेवैष्वेतद्दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽ-

(१) 'ग' 'ज' पुस्तकयोः 'तदोषधिभ्यः' इति पाठ उपलभ्यते ।
( २ ) का० श्रौ० सू० १२. २. १६ । ( ३ ) का० श्रौ० सू० १२. २. १७

स्म्माल्लोकात्प्रयन्ति ॥ ७ ॥ अथ ब्ब्रह्मणे पोतारन्दीक्ष- यति । तद्धि सोऽन्न्वथोद्गात्त्रे प्प्रतिहर्त्तारन्दीक्षयति तद्धि सोऽन्न्वथ होत्त्रेऽच्छावाकन्दीक्षयति तद्धि सोऽन्न्वेताँश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥ अथाद्ध्वर्य्युर्वे नेष्टारमुन्नेता दीक्षयति । तद्धि सोऽन्न्वथ ब्ब्रह्मण ऽआग्नीद्ध्रन्दीक्षयति तद्धि सोऽन्न्वथोद्गात्त्रे सुब्ब्रह्मण्या- न्दीक्षयति तद्धि सोऽन्न्वथ होत्त्रे ग्ग्रावस्तुतन्दीक्षयति तद्धि सोऽन्न्वेताँश्चतुर ऽउन्नेता दीक्षयति ॥ ९ ॥ अथोन्नेतारम्[2] । स्नातको वा ब्ब्रह्मचारी वान्न्यो वा दीक्षितो दीक्षयति न पूतः पावयेदिति ह्याहुः सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाᳪंसो दीक्षन्ते दीक्षमाणा हैव ते यज्ञ- ङ्कल्प्पयन्ति यज्ञस्य क्लृप्तिमनु सत्त्रिणां य्योगक्षेमः कल्प्पते सत्त्रिणां य्योगक्षेमस्य क्लृप्तिमन्न्वपि तस्यार्द्धस्य योगक्षेमः कल्प्पते यस्मिन्नर्द्धे यजन्ते ॥ १० ॥ तेषां व्वा ऽउन्नेतोत्तमो दीक्षते । प्प्रथमोऽवभृथादुदायतामुदैति प्प्राणो वा ऽउन्नेता प्प्राणमेवैष्वेतदुभयतो दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽस्म्माल्लोकात्प्र- यन्ति सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाᳪंसो दीक्षेरँ- स्तदेव दीक्षेत ॥ ११ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



( १ ) का० श्रौ० सू० १२, २, १८ । ( २ ) का० श्रौ० सू० १२. २. १९ ।

[ द्वादशाहस्याहःक्लृप्तिः ]

श्रद्धाया वै देवाः । दीक्षान्निरमिमतादित्यै प्राय-णीयꣳ * सोमात्क्रयं विष्णोरातिथ्यमादित्यात्प्रवर्ग्यꣳ स्वधाया ऽउपसदोऽग्नीषोमाभ्यामुपवसथमस्माल्लोकात्प्रा-यणीयमतिरात्रम् ॥ १ ॥ सँवत्सराच्चतुर्विꣳशमहः । ब्रह्म-णोऽभिप्लवङ्क्षत्रात्पृष्ठ्यमग्नेरभिजितमद्भ्यः स्वरसाम्न ऽआदित्याद्विषुवन्तमुक्ताः स्वरसामान † ऽइन्द्राद्विश्वजि-तमुक्तौ पृष्ठ्याभिप्लवौ ‡ मित्रावरुणाभ्याङ्गोऽआयुषी वि-श्वेभ्यो देवेभ्यो दशरात्रन्दिग्भ्यो द्वाशरात्रिकम्पृष्ठ्यꣳ षडहमेभ्यो लोकेभ्यश्छन्दोमान् ॥ २ ॥ सँवत्सराद्दशम-महः । प्रजापतेर्म्महाव्रतꣳ § स्वर्ग्गाल्लोकादुदयनीयमति-रात्रन्तदेतत्सँवत्सरस्य जन्म स यो हैवमेतत्सँवत्सरस्य जन्म वेदा हास्माच्छ्रेयाञ्जायते सात्मा भवति सँवत्सरो भवति सँवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ उक्ताहःक्लृप्त्यर्थवादः ]

यद्वै दीक्षन्ते । अग्नाविष्णू ऽएव देवते यजन्तेऽ-ग्नाविष्णू देवते भवन्त्यग्नाविष्णवोः सायुज्यꣳ सलोक-

* प्रकृष्टमयनमारम्भो यत्रेति व्युत्पत्या प्रायणीयशब्दो द्वादशाहस्य प्रथमदिनवाचकः ।

† "यज्ञा यज्ञा" ( ४. ८. १ ) इत्यस्यां योनावुत्पन्नानि चत्वारि स्वरसंज्ञकानि सामानि येषु ते स्वरसामानः । ‡ प्रथमोऽग्निष्टोमः ततश्चत्वार उक्थ्याः, पुनः षष्ठोऽग्निष्टोमः, एवं विधस्याह्नां षट्कस्य अभिप्लव इति संज्ञा ( तै॰ सं॰ सा॰ ७. ४. ११. १७, ऐ॰ ब्रा॰ ४. ३१ ।

§ महाव्रतं यज्ञस्यान्तिममहः । महानवर्तिष्ट अनेन कर्मणा इति महाव्रतम् ( तै॰ ब्रा॰ सा॰ भा॰ १. २. ६ ) ।

ताश्नयन्ति ॥ १ ॥ अथ यत्प्रायणीयेन यजन्ते । अदितिमेव देवताᳬं यजन्तेऽदितिर्द्देवता भवन्त्यदितेः सायुज्यᳬं सलोकताश्नयन्ति ॥ २ ॥ अथ यत्क्रयेण चरन्ति । सोममेव देवताᳬं यजन्ते सोमो देवता भवन्ति सोमस्य सायुज्यᳬं सलोकताश्नयन्ति ॥ ३ ॥ अथ यदातिथ्येन यजन्ते । विष्णुमेव देवताᳬं यजन्ते विष्णुर्द्देवता भवन्ति विष्णोः सायुज्यᳬं सलोकताश्नयन्ति ॥ ४ ॥ अथ यत्प्रवर्ग्येण यजन्ते । आदित्यमेव देवताᳬं यजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यᳬं सलोकताश्नयन्ति ॥ ५ ॥ अथ यदुपसद ऽउपयन्ति । एता ऽएव देवता यजन्ते या ऽएता ऽउपसत्स्वेता देवता भवन्त्येतासान्देवतानाᳬं सायुज्यᳬं सलोकताश्नयन्ति ॥ ६ ॥ अथ यदग्नीषोमीयेण पशुना यजन्ते । अग्नीषोमावेव देवते यजन्तेऽग्नीषोमौ देवते भवन्त्यग्नीषोमयोः सायुज्यᳬं सलोकताश्नयन्ति ॥ ७ ॥ अथ यत्प्रायणीयमतिरात्रमुपयन्ति । अहोरात्रे ऽएव देवते यजन्तेऽहोरात्रे देवते भवन्त्यहोरात्रयोः सायुज्यᳬं सलोकताश्नयन्ति ॥ ८ ॥ अथ यच्चतुर्विᳬंशमहरुपयन्ति । सँवत्सरमेव देवताᳬं यजन्ते सँवत्सरो देवता भवन्ति सँवत्सरस्य सायुज्यᳬं सलोकताश्नयन्ति ॥ ९ ॥ अथ यदभिप्लवᳬं षडहमुपयन्ति । अर्द्धमासाँश्च मासाँश्च देवता यजन्तेऽर्द्धमासाश्च मासाश्च देवता भवन्त्यर्द्धमासानाञ्च मासानाञ्च सायुज्यᳬं सलोकताश्नयन्ति ॥ १० ॥ अथ यत्पृष्ठ्यᳬं षडहमुपयन्ति ।

ऋतूनेव देवता यजन्त ऽऋतवो देवता भवन्त्यृतूनाᳫँ सायुज्यᳫँ सलोकताञ्जयन्ति ॥ ११ ॥ अथ यदभिजितमुपयन्ति । अग्निमेव देवतां ᳫँयजन्तेऽग्निर्देवता भवन्त्यग्नेः सायुज्यᳫँ सलोकताञ्जयन्ति ॥ १२ ॥ अथ यत्स्वरसाम्न ऽउपयन्ति । अप ऽएव देवता यजन्त ऽआपो देवता भवन्त्यपाᳫँ सायुज्यᳫँ सलोकताञ्जयन्ति ॥ १३ ॥ अथ यद्विषुवन्तमुपयन्ति । आदित्यमेव देवतां ᳫँयजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यᳫँ सलोकताञ्जयन्त्युक्ताः स्वरसामानः ॥ १४ ॥ अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवतां ᳫँयजन्त ऽइन्द्रो देवता भवन्तीन्द्रस्य सायुज्यᳫँ सलोकताञ्जयन्त्युक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥ अथ यद्गोऽआयुषी ऽउपयन्ति । मित्रावरुणावेव देवते यजन्ते मित्रावरुणौ देवते भवन्ति मित्रावरुणयोः सायुज्यᳫँ सलोकताञ्जयन्ति ॥ १६ ॥ अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान्देवता * यजन्ते विश्वे देवा देवता भवन्ति विश्वेषान्देवानाᳫँ सायुज्यᳫँ सलोकताञ्जयन्ति ॥ १७ ॥ अथ यद्दाशरात्रिकम्पृष्ठ्यᳫँ षडहमुपयन्ति । दिश ऽएव देवता यजन्ते दिशो देवता भवन्ति दिशाᳫँ सायुज्यᳫँ सलोकताञ्जयन्ति ॥ १८ ॥ अथ यच्छन्दोमानुपयन्ति । इमानेव लोकान्देवता यजन्त ऽइमे लोका देवता भवन्त्येषाँल्लोकानाᳫँ सायुज्यᳫँ सलोकताञ्जयन्ति ॥ १९ ॥ अथ यद्दशममहरुपयन्ति । सँवत्सरमेव देवतां ᳫँयजन्ते

* 'ग' 'ज' पुस्तकयोः 'देवतां' इति पाठ उपलभ्यते ।

सँवत्सरो देवता भवन्ति सँवत्सरस्य सायुज्यꣳ सलोकता-ञ्जयन्ति ॥ २० ॥ अथ यन्महाव्रतमुपयन्ति । प्रजापतिमेव देवतां यजन्ते प्रजापतिर्हैवता भवन्ति प्रजापतेः सायुज्यꣳ सलोकताञ्जयन्ति ॥ २१ ॥ अथ यदुदयनीयमतिरात्रमुपयन्ति । सँवत्सरमेव तदाप्त्वा स्वर्गे लोके प्रतितिष्ठन्ति तान्यदि पृच्छेयुः कामद्य देवतां यजद्ध्वे का देवता स्थ कस्यान्देवतायां वसथेत्यत एवैकतमाम्ब्रूयुर्यस्यै तु नेदिष्ठꣳ स्युरेते ह वै सति सद एते हि सतीषु देवतासु सीदन्तो यन्ति सत्रसदो हैवेतरे स यो हैवं विदुषान्दीक्षितानाम्पापकꣳ सत्रे कीर्त्तयेदेताभ्यस्त्वा देवताभ्य आवृश्चाम इत्येनम्ब्रूयुः स पापीयान्भवति श्रेयाꣳस आत्मना ॥ २२ ॥ स एष सँवत्सरस्त्रिमहाव्रतः । चतुर्विꣳशे महाव्रतं विषुवति महाव्रतम्महाव्रत एव महाव्रतन्तꣳ ह स्मैतम्पूर्व उपयन्ति त्रिमहाव्रतन्ते तेजस्विन आसुः सत्यवादिनः सꣳशितव्रता अथ य उ हैनमप्येतर्हि तथोपेयुर्यथामपात्रमुदक आसिक्ते विम्रियेदेवꣳ हैव ते विम्रियेयुरुपयुपयन्ति तदेषाꣳ सत्येन श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिरवरुद्धम्भवति ॥ २३ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



१ 'ग' 'ज' पुस्तकयोः 'ते' इति ।

[ द्वादशाहस्य संवत्सरात्मना स्तुतिः ]

पुरुषो वै सँव्वत्सरः । तस्य पादावेव प्प्रायणीयोऽतिरात्रः पादाब्भ्याᳬ हि प्प्रयन्ति तयोर्यच्छुक्क्लन्तदह्नो रूपं यत्क्कृष्णन्तद्रात्रेर्न्नखान्येवौषधिवनस्प्पतीनाᳬ रूपमूरू चतुर्व्विᳫशमहरुरोऽभिप्लवः पृष्टम्पृष्ठ्यः ॥ १ ॥ अयमेव दक्षिणो बाहुरभिजित् । इम ऽएव दक्षिणे त्रयः प्प्राणाः स्वरसामानो मूर्द्धा विषुवानिम ऽएवोत्तरे त्रयः प्प्राणाः स्वरसामानः ॥ २ ॥ अयमेवोत्तरो बाहुर्व्विश्वजित् । उक्तौ पृष्ठ्याभिप्लवौ यावन्वाञ्चौ प्प्राणौ ते गोऽआयुषी ऽअङ्गानि दशरात्रो मुखम्महाव्रतᳫ हस्तावेवोदयनीयोऽतिरात्रो हस्ताब्भ्याᳬ ह्युद्यन्ति तयोर्यच्छुक्क्लन्तदह्नो रूपं यत्क्कृष्णन्तद्रात्रेर्न्नखान्येव नक्षत्राणाᳬ रूपᳫ स ऽएष सँव्वत्सरोऽध्यात्मम्प्रतिष्ठितः स यो हैवमेतᳫ सँव्वत्सरमध्यात्मम्प्रतिष्ठितं व्वेद प्प्रतितिष्ठति प्प्रजया पशुभिरस्मिँल्लोकेऽमृतत्त्वेनामुष्मिन् ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ संवत्सरसत्रस्याहःक्लप्तिर्ब्राह्मणद्वयेन ]

समुद्रं व्वा ऽएते प्प्रतरन्ति । ये सँव्वत्सराय दीक्षन्ते तस्य तीर्त्थमेव प्प्रायणीयोऽतिरात्रस्तीर्त्थेन हि प्प्रस्नान्ति तद्यत्प्रायणीयमतिरात्रमुपयन्ति यथा तीर्त्थेन समुद्रम्प्रस्नायुस्तादृक्तत् ॥ १ ॥ गाधमेव प्प्रातिष्ठा चतुर्व्विᳫशमहः ।

यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्म्य प्प्रस्नान्ति प्प्रस्नेयोऽभिप्प्लवः प्प्रस्नेयः पृष्ठ्यः ॥ २ ॥ गाधमेव प्प्रतिष्ठाभिजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्म्योत्क्रामन्त्यूरुदघ्न ऽएव प्प्रथमः स्वरसामा जानुदघ्नो द्वितीयः कुल्फदघ्नस्तृतीयो द्वीपः प्प्रतिष्ठा विषुवान्कुल्फदघ्न ऽएव प्प्रथमोऽर्वाक्सामा जानुदघ्नो द्वितीय ऽऊरुदघ्नस्तृतीयः ॥ ३ ॥ गाधमेव प्प्रतिष्ठा विश्वजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्म्य प्प्रस्नान्ति प्प्रस्नेयः पृष्ठ्यः प्प्रस्नेयोऽभिप्प्लवः प्प्रस्नेये गोऽआयुषी प्प्रस्नेयो दशरात्रः ॥ ४ ॥ गाधमेव प्प्रतिष्ठामहाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्म्योत्स्नान्ति तीर्त्थमेवोदयनीयोऽतिरात्रस्तीर्त्थेन ह्युत्स्नान्ति तद्यदुदयनीयमतिरात्रमुपयन्ति यथा तीर्त्थेन समुद्रम्प्रस्नाय तीर्त्थेनोत्स्नायुस्तादृक्तत् ॥ ५ ॥ तदाहुः । कति सँवत्सरस्यातिरात्राः कत्यग्निष्टोमाः कत्युक्क्थ्याः कति षोडशिनः कति षडहा ऽइति द्वावतिरात्रौ षट्शतमग्निष्टोमा द्वे चत्वारिꣳशे शते ऽउक्क्थ्यानामिति नु य ऽउक्क्थ्यान्त्स्वरसाम्न ऽउपयन्ति ॥ ६ ॥ अथ येऽग्निष्टोमान् । द्वादशशतमग्निष्टोमा द्वे चतुस्त्रिꣳशे शते ऽउक्क्थ्यानान्द्वादश षोडशिनः षष्टिः षडहा ऽइति नु सँवत्सरस्याप्तिः ॥ ७ ॥ द्वादश वै मासाः सँवत्सरस्य । तेषामेतत्तेज ऽइन्द्रियं यत्पृष्ठानि तद्यन्मासि मासि पृष्ठान्न्युपयन्ति मासश ऽएव तत्सँवत्सरस्य तेज ऽआप्नु-

वन्त्यथ कथन्त्रयोदशस्य मासस्य तेज ऽआप्नुवन्तीत्युपरिष्टाद्विषुवतो विश्वजितꣳ सर्वपृष्ठमग्निष्टोममुपयन्त्येवमु त्रयोदशस्य मासस्य तेज ऽआप्नुवन्ति ॥ ८ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः संवत्सराय न्वा ऽअहन्दीक्षिष्य ऽइति तꣳ ह पितोपेक्ष्योवाच वेत्थ न्वायुष्मन्त्संवत्सरस्य गाधप्रतिष्ठा ऽइति वेदेति होवाचैतद्ध तद्विद्वानुवाच ॥ ९ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



तदाहुः । कस्मादुभयतोज्योतिषोऽभिप्लवा भवन्त्यन्यतोज्योतिः पृष्ठ्य ऽइतीमे वै लोका ऽअभिप्लवा ऽउभयतोज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदित्येनामुत ऽऋतवः पृष्ठ्योऽन्यतोज्योतिषो वा ऽऋतव ऽएष ऽएषाञ्ज्योतिर्य ऽएष तपति ॥ १ ॥ देवचक्रे वा ऽएते पृष्ठ्यप्रतिष्ठिते । यजमानस्य पाप्मानन्तृꣳहती परिप्लवेते स यो हैवं विदुषान्दीक्षितानाम्पापकꣳ सत्रे कीर्त्तयत्येते हास्य देवचक्रे शिरश्छिन्तो दशरात्र ऽउद्धिः पृष्ठ्याभिप्लवौ चक्रे ॥ २ ॥ तदाहुः । यत्समे ऽएव चक्रे भवतोऽथैते विषमा स्तोमाः कथमस्यैते समा स्तोमा ऽउपेता भवन्तीति यदेव षडन्यान्यहानि षडन्यानि तेनेति ब्रूयात् ॥ ३ ॥ पृष्ठ्याभिप्लवौ तन्त्रे कुर्वीतेति ह स्माह पैङ्ग्यः । तयो स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति स यत्सञ्चारयति तस्मादिमे प्राणा

रुरस ऽएवास्य हृदयात्त्विषिरस्रवत्स श्श्येनोऽपाष्ट्रिहाभव-द्वयसाᳬं राजा ॥ ६ ॥ नाब्भ्या ऽएवास्य शूषोऽस्रवत् । तत्सीसमभवन्नायो न हिरण्यᳲ रेतस ऽएवास्य रूपमस्र-वत्तत्सुवर्ण्णᳲ हिरण्यमभवच्छिश्नाद्देवास्य रसोऽस्रवत्सा परिस्रुदभवत्स्फिग्गीब्भ्यामेवास्य भामोऽस्रवत्सा सुरा-भवदन्नस्य रसᳲ ॥ ७ ॥ मूत्राद्देवास्यौजोऽस्रवत् । स व्वृकोऽभवदारण्यानाम्पशूनाञ्जूतिरूवध्याद्देवास्य मन्युर-स्रवत्स व्व्याग्घ्रोऽभवदारण्यानाम्पशूनाᳬं राजा लोहिता-द्देवास्य सहोऽस्रवत्स सिᳲहोऽभवदारण्यानाम्पशूनामीशᳲ ॥ ८ ॥ लोमब्भ्य ऽएवास्य चित्तमस्रवत् । ते श्श्यामाका ऽअभवँस्त्वच ऽएवास्यापचितरस्रवत्सोऽश्श्वत्थो व्वनस्प्पति-रभवन्माᳬसेब्भ्य ऽएवास्योर्ग्गस्रवत्स ऽउदुम्बरोऽभवद-स्त्थिब्भ्य ऽएवास्य स्वधास्रवत्स न्न्यग्ग्रोधोऽभवन्मज्जब्भ्य ऽएवास्य भक्षᳲ सोमपीथोऽस्रवत्ते व्व्रीहयोऽभवन्नेवमस्ये-न्द्रियाणि व्वीर्य्याणि व्व्युदक्क्रामन् ॥ ९ ॥ अथ ह वै तर्हि । नमुचिनैवासुरेण सह चचार स ऽऐक्षत नमुचिरपुनर्व्वा ऽअयमभूद्धन्तास्येन्द्रियं व्वीर्य्यᳲ सोमपीथमन्नाद्यᳲ हरा-णीति तस्यैतयैव सुरयेन्द्रियं व्वीर्य्यᳲ सोमपीथमन्नाद्यमह-रत्स ह न्न्यपर्ण्णᳲ शिश्श्ये तन्देवा ऽउपसञ्जग्मिरे श्श्रेष्ठो वै नोऽयमभूत्तमिमम्पाप्प्माविदद्धन्तेमम्भिषज्यामेति ॥ १० ॥ तेऽश्श्विनावब्ब्रुवन् । युवं व्वै ब्ब्रह्माणौ भिषजौ स्त्थो युवमिमम्भिषज्ज्यतमिति तावब्ब्रूतामस्तु नौ भाग ऽइति तेऽब्ब्रुवन्नय ऽएषोऽजᳲ स वाम्भाग ऽइति तथेति तस्म्मा-

दाश्विनो धूम्रो भवति ॥ ११ ॥ ते सरस्वतीमब्रुवन् । त्वं वै भैषज्यमसि त्वमिमम्भिषज्ज्येति साब्रवीदस्तु मे भाग ऽइति तेऽब्रुवन्य ऽएषोऽविः स ते भाग ऽइति तथेति तस्मात्सारस्वतो मेषो भवति ॥ १२ ॥अथाब्रुवन् । एतावद्वा ऽअस्मिन्नेतर्हि यावदयमृषभोऽस्यैवायमस्त्विति तथेति तस्मादैन्द्र ऽऋषभो भवति ॥ १३ ॥ तावश्विनौ च सरस्वती च । इन्द्रियं वीर्य्यन्नमुचेराहृत्य तदस्मिन्पुनरदधुस्तम्पाप्मनोऽत्रायन्त सुत्रातम्बतैनम्पाप्मनोऽत्रास्महीति तद्वाव सौत्रामण्यभवत्तत्सौत्रामण्यै सौत्रामणीत्वन्त्रायते मृत्योरात्मानमप पाप्मानꣳ हते य ऽएवमेतत्सौत्रामण्यै सौत्रामणीत्वं वेद त्रयस्त्रिꣳशद्दक्षिणा भवन्ति त्रयस्त्रिꣳशद्धि तन्देवता ऽअभिषज्यँस्तस्मादाहुर्भैषजन्दक्षिणा ऽइति ॥ १४ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ सुराक्रयादि ]

अप वा ऽएतस्मात् । तेज ऽइन्द्रियं वीर्य्यङ्क्रामति यꣳ सोमोऽतिपवत ऽऊर्ध्वं वा[1]वाश्वं वा ॥ १ ॥ तदाहुः । अन्नं वा ऽएतद्ब्राह्मणस्य यत्सोमो न वै सोमेन ब्राह्मणः सोमवामी स यो वा ऽअलम्भूत्यै सम्भूतिन्न प्राप्नोति यो वालम्पशुभ्यः सन्पशून्न विन्दते स सोमवामी पशवो हि सोम ऽइति ॥ २ ॥ स ऽएतमाश्विनन्धूम्रमालभेत ।

(१) 'ग' 'ज' पुस्तकयोः "चा" इति ।

सारस्वतम्मेषमैन्द्रमृषभमश्विनौ वै देवानाम्भिषजौ ताभ्यामेवैनम्भिषज्यति सरस्वती भेषजन्तयैवास्मै भेषजङ्करोतीन्द्र ऽइन्द्रियं वीर्यन्तेनैवास्मिन्निन्द्रियं वीर्यन्दधाति ॥ ३ ॥ चक्षुर्वा ऽअश्विनौ तेजः । यदाश्विनो भवति चक्षुरेवास्मिँस्तत्तेजो दधात्यथो श्रोत्रं समानं हि चक्षुश्च श्रोत्रञ्च ॥४॥ प्राणः सरस्वती वीर्यम् । यत्सारस्वतो भवति प्राणमेवास्मिँस्तद्वीर्यन्दधात्यथो ऽअपानः समानं हि प्राणश्चापानश्च ॥५॥ [अर्धप्रपाठकः ६०] वागिन्द्रो बलम् । यदैन्द्रो भवति वाचमेवास्मिँस्तद्बलन्दधात्यथो मनः समानं हि वाक्च मनश्च ॥ ६ ॥ आश्विनीरजाः । सारस्वतीरवीरैन्द्रीर्गाव ऽइत्याहुर्यदेते पशव ऽआलभ्यन्त ऽएताभिरेव देवताभिरेतान्पशूनवरुन्द्धे ॥ ७ ॥ वडवानुशिशुर्भवति । यश ऽएवैकशफमवरुन्द्ध ऽआरण्यानाम्पशूनाँल्लोमानि भवन्त्यारण्यानाम्पशूनामवरुद्ध्यै वृकलोमानि भवन्त्योज ऽएव जूतिमारण्यानाम्पशूनामवरुन्द्धे व्याघ्रलोमानि भवन्ति मन्न्युमेव राज्यमारण्यानाम्पशूनामवरुन्द्धे सिंहलोमानि भवन्ति सह ऽएवेशामारण्यानाम्पशूनामवरुन्द्धे ॥ ८ ॥ व्रीहयश्च श्यामाकाश्च भवन्ति । गोधूमाश्च कुवलानि (A) चोपवाकाश्च[1] बदराणि (B) च यवाश्च कर्कन्धूनि च[2] शष्पाणि * च तोक्मानि † चोभयमेव

(A) स्थूलानि बदरीफलानि ।

(१) उपवाका इन्द्रयवाः ।

(B) सूक्ष्मबदरीफलानि ।

(२) 'ग' 'ज' पुस्तकयोः 'च' इति नास्ति ।

* विरूढा व्रीहयः शष्पाणि । † विरूढा यवाः तोक्माः ।

ग्ग्राम्म्यञ्चान्नमारण्यञ्चावरुन्द्धेऽथो ऽउभयेनैवान्नेन यथारूपमिन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ९ ॥ सीसेन शष्पाणि क्क्रीणाति । ऊर्णाभिस्तोक्मानि सूत्रैर्व्रीहीनुभयोर्व्वा ऽएतद्रूपमयसश्च हिरण्यस्य च यत्सीसमुभयᳬ सौत्रामणीष्टिश्च पशुबन्धश्चोभयस्यावरुद्ध्यै ॥ १० ॥ ऊर्णासूत्रेण क्क्रीणाति । तद्वा ऽएतत्स्त्रीणाङ्कर्म्म यदूर्णासूत्रङ्कर्म्म व्वा ऽइन्द्रियं व्वीर्य्यन्तदेतदुत्सन्नᳫँ स्त्रीषु तद्यदेवेन्द्रियं व्वीर्य्यमुत्सन्नᳫँ स्त्रीषु तदेवावरुन्द्धे ॥ ११ ॥ तद्धैतदन्न्येऽध्वर्य्यवᳬ । सीसेन क्क्लीबाच्छष्पाणि क्क्रीणन्ति तत्तदिति न व्वा ऽएष स्त्री न पुमान्न्यत्क्लीबो नेष्टिर्न्न पशुबन्धᳬ सौत्रामणीति व्वदन्तस्तदु तथा न कुर्य्यादुभयं व्वै सौत्रामणीष्टिश्च पशुबन्धश्च ऽऽर्धमु व्वा ऽएतन्मनुष्येषु यत्क्लीबो यज्ञमुख ऽएव ते यज्ञस्य ऽऽर्द्धिन्दधति ये तथा कुर्व्वन्ति सोमविक्क्रयिण ऽएव क्क्रीणीयात्सोमो व्वै सौत्रामणी यज्ञमुख ऽएव तत्सोमरूपङ्करोति यज्ञस्य समृद्ध्यै ॥ १२ ॥ शतातृण्णा कुम्भी भवति । बहुधेव हि स व्यस्रवदथो शतोत्मानो व्वै यज्ञो यज्ञमेवावरुन्द्धे सतम्भवति सदेवावरुन्द्धे चष्यम्भवत्यन्नाद्यस्यैवावरुद्ध्यै पवित्रम्भवति पुनन्ति ह्येनं व्वालो भवति पाप्मनो व्यावृत्त्यै सुवर्णᳬ हिरण्यम्भवति रूपस्यैवावरुद्ध्यै शतमानम्भवति शतायुर्व्वै पुरुषᳬ शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ १३ ॥ आश्वत्थम्पात्रम्भवति । अपचितिमेवावरुन्द्ध ऽऔदुम्बरम्भवत्यूर्जमेवावरुन्द्धे नैयग्ग्रोधम्भवति स्वधामेवा-

वरुन्द्धे स्स्थाल्ल्यो भवन्ति पृथिव्व्या ऽएवान्नाद्यमवरुन्द्धे ॥ १४ ॥ पालाशान्न्युपशयानि भवन्ति । ब्ब्रह्म वै पलाशो ब्ब्रह्मणैव स्वर्ग्गँल्लोकञयत्त्यपाष्ट्ठिहुस्य पत्त्रे भवतस्त्विषिमेव राज्ज्यं व्वयसामवरुन्द्धे षट्त्रिंशदेतानि भवन्ति षट्त्रिंशदक्षरा वै बृहती बार्हताः पशवो बृहत्त्यैवास्म्मै पशूनवरुन्द्धे ॥१५॥ तदाहुः । अन्न्यदेवत्त्याः पशवो भवन्त्यन्न्यदेवत्त्याः पुरोडाशा व्विलोमैतत्क्रियते कथमेतत्सलोम भवतीत्त्यैन्द्रः पशूनामुत्तमो भवत्त्यैन्द्रः पुरोडाशानाम्प्रथम ऽइन्द्रियं वै व्वीर्र्यमिन्द्र ऽइन्द्रियेणैवास्म्मा ऽइन्द्रियं व्वीर्र्यं सन्दधातीन्द्रियेणेन्द्रियं व्वीर्र्यमवरुन्द्धे ॥ १६ ॥ सावित्त्रः पुरोडाशो भवति । सवितृप्प्रसूततायै व्वारुणो भवति व्वरुणो वा ऽएतङ्गृह्णाति यः पाप्प्मना गृहीतो भवति व्वरुणेनैवैनं व्वरुण्ण्यात्मुञ्चत्त्यन्त्त्यो भवत्त्यन्तत ऽएवैनं वरूणपाशात्प्रमुञ्चति ॥ १७ ॥ एकादशकपाल ऽऐन्द्रो भवति । एकादशाक्षरा वै त्रिष्ट्टुबिन्द्रियमु वै व्वीर्र्यन्त्रिष्ट्टुबिन्द्रियस्यैव व्वीर्र्यस्यावरुद्ध्यै ॥ १८ ॥ द्वादशकपालः सावित्त्रो भवति । द्वादश वै मासाः सँव्वत्सरस्य सँव्वत्सरं व्वा ऽअन्नाद्यमन्न्वायत्तं सँव्वत्सरादेवास्म्मा ऽअन्नाद्यमवरुन्द्धे ॥ १९ ॥ दशकपालो व्वारुणो भवति । दशाक्षरा वै विराडन्नं व्विराड्वरुणोऽन्नपतिर्व्वरुणेनैवास्म्मा ऽअन्नमवरुन्द्धे मद्ध्यत ऽएतैः पुरोडाशैः प्प्रचरति मद्ध्यं व्वा ऽएतेषां रुषोनिः स्वादेवैनान्न्योनेः प्प्रजनयति ॥ २० ॥ व्वडवानुशिशुर्द्दक्षिणा भवति । उभयं व्वा ऽएषा जनय-

त्यश्श्वश्चाश्श्वतरश्चोभयꣳ सौत्रामणीष्टिश्च पशुबन्धश्चो-
भयस्यैवावरुद्ध्यै ॥ २१ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ सौत्रामणीग्रहग्रहणादि ]

इन्द्रस्येन्द्रियमन्नस्य रसम् । सोमस्य भक्षꣳ सुरया-
सुरो नमुचिरहरत्सोऽश्श्विनौ च सरस्वतीञ्चोपाधावच्छे-
पानोऽस्मि नमुचये न त्वा दिवा न नक्तꣳ हनानि न
दण्डेन न धन्न्वना न पृथेन न मुष्टिना न शुष्क्केण नार्द्रेणाथ
म ऽइदमहार्षीदिदम्म ऽआजिहीर्षथेति ॥ १ ॥ तेऽब्रुवन् ।
अस्तु नोऽत्राप्प्यथाहरामेति सह न ऽएतदथाहरतेत्यब्र-
वीदिति ॥ २ ॥ तावश्श्विनौ च सरस्वती च । अपाम्फेनं
वज्रमसिञ्चन्न शुष्क्को नार्द्र ऽइति तेनेन्द्रो नमुचेरासुरस्य
व्व्युष्टायाꣳ रात्रावनुदित ऽआदित्ये न दिवा न नक्त-
मिति शिर ऽउदवासयत् ॥ ३ ॥ तस्म्मादेतदृषिणाभ्युनू-
क्तम् । 'अपाम्फेनेन नमुचेः शिर ऽइन्द्रोदवर्त्तयः ॥
विश्श्वा यदजय स्पृध' ऽइति पाप्प्मा वै नमुचिः पाप्प्मानं
वाव तद्‌द्विषन्तम्भ्रातृव्व्यꣳ हत्त्वेन्द्रियं वीर्य्यमस्यावृङ्क्त
स यो भ्रातृव्व्यवान्त्स्यात्स सौत्रामण्या यजेत पाप्प्मान-
मेव तद्‌द्विषन्तम्भ्रातृव्व्यꣳ हत्त्वेन्द्रियं वीर्य्यमस्य व्वृङ्क्ते
तस्य शीर्षश्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत्तस्म्मादबी-
भत्सन्त त ऽएतदन्धसोर्विपानमपश्श्यन्न्त्सोमो राजामृतꣳ

(१) शु० य० सं० १९. ७१। (२) शु० य० सं० १९. ७२।

सुत, ऽइति तेनैनꣳ स्वदयित्वात्मन्नदधत ॥४॥ '[1]स्वाद्वीन्त्वा स्वादुने'ति सुराꣳ सन्दधाति । स्वदयत्येवैना'न्तीव्व्रान्ती[2]-व्व्रेणे'तीन्द्रियमेवास्मिन्दधात्य'[3]मृताममृतेने'त्यायुरेवास्मिम-न्दधाति '[4]मधुमतीम्मधुमते'ति रसमेवास्यान्दधाति '[5]सृजामि सꣳ सोमेने'ति सोमरूपमेवैनाङ्करोति ॥ ५ ॥ 'सोमोऽ-[6]स्यश्विभ्याम्पच्च्यस्व । सरस्वत्यै पच्च्यस्वेन्द्राय सुत्राम्णे पच्च्यस्वे'त्येता वा ऽएतन्देवता ऽअग्ग्रे यज्ञꣳ समभरँस्ता-भिरेवैनꣳ सम्भरत्यथो ऽएता ऽएवैतद्देवता भागधेयेन समर्द्धयत्यासुनोति सुत्यायै तिस्रो रात्रीर्व्वसति तिस्रो हि रात्रीः सोमः क्रीतो व्वसति सोमरूपमेवैनाङ्करोति ॥ ६ ॥ द्वे व्वेदी * भवतः । द्वौ वाव लोकावित्याहुर्द्देवलो-कश्चैव पितृलोकश्चेत्युत्तरान्न्या भवति दक्षिणान्न्योत्तरो व्वै देवलोको दक्षिणः पितृलोक ऽउत्तरयैव देवलोकमव-रुन्द्धे दक्षिणया पितृलोकम् ॥ ७ ॥ पयश्च सुरा च भवतः । सोमो वै पयोऽन्नꣳ सुरा पयसैव सोमपीथमव-रुन्द्धे सुरयान्नाद्यं क्षत्रं वै पयो विट् सुरा सुराम्पूत्त्वा पयः पुनाति व्विश ऽएव तत्क्षत्रञ्जनयति व्विशो हि क्षत्रञ्जायते ॥ ८ ॥ '[7]व्वायोः पूतः पवित्त्रेण । प्प्रत्यङ्क्सोमो ऽअतिद्रुत, ऽइति सोमातिपूतस्य † पुनाति यथारूपमेवैनम्पुनाती'[8]न्द्रस्य

(१) शु० य० सं० १९. १ । (२) शु० य० सं० १९. १ । (३) शु० य० सं० १९. १ । (४) शु० य० सं० १९. १ । (५) शु० य० सं० १९. १ । (६) शु० य० सं० १९. १ ।

* का० श्रौ० सू० १९. २. १ ।

(७) शु० य० सं० १९. ३ ।

† मुखेतरच्छिद्रसोमवामिन इत्यर्थः । (८) शु० य० सं० १९. ३ ।

युज्यः सखे'ति यदेवास्य तेनेन्द्रियं वीर्यमतिक्रान्तम्भवति तदस्मिन्पुनर्दधाति ॥ ९ ॥ 'वायोः पूतः पवित्रेण । प्राङ्क्सोमो ऽअतिद्रुत' ऽइति सोमवामिनः पुनाति यथारूपमेवैनम्पुनाती'न्द्रस्य युज्यः सखे'ति यदेवास्य तेनेन्द्रियं वीर्यमतिक्रान्तम्भवति तदस्मिन्पुनर्दधाति ॥ १० ॥ 'पुनाति ते परिस्रुत'मिति । समृद्धिकामस्य पुनाति समृद्ध्यै 'सोमꣳ सूर्यस्य दुहिते'ति श्रद्धा वै सूर्यस्य दुहिता श्रद्धयैष सोमो भवति श्रद्धयैवैनꣳ सोमङ्करोति 'वारेण शश्वता तने'ति वालेन ह्येषा पूयते ॥ ११ ॥ 'ब्रह्म क्षत्रम्पवत' ऽइति पयः पुनाति । ब्रह्मण ऽएव तत्क्षत्रञ्जनयति ब्रह्मणो हि क्षत्रञ्जायते 'तेजँ ऽइन्द्रिय'मिति तेज ऽएवास्मिन्निन्द्रियं वीर्यन्दधाति 'सुरया सोम' ऽइति सुरया हि सोमः 'सुतं ऽआसुत' ऽइत्यासुताद्धि सूयते 'मदाये'ति मदाय वाव सोमो मदाय सुरोभावेव सोममदञ्च सुरामदञ्चावरुन्द्धे 'शुक्रेण देव देवताः पिपृग्धी'ति शुक्रेण देव देवताः प्रीणीहीत्येवैतदाह 'रसेनान्नं यजमानाय धेही'ति रसमेवान्नं यजमाने दधाति पूर्वे पयोग्रहा गृह्यन्तेऽपरे सुराग्रहा विशन्तत्क्षत्रस्यानुवर्त्मानङ्करोति ॥ १२ ॥ 'कुविदङ्ग यवमन्तो यवञ्चि'दिति । पयोग्रहान्गृह्णाति * सोमाꣳशवो वै यवाः सोमः पयः

(१) शु० य० सं० १९. ३। (२) शु० य० सं० १९. ३। (३) शु० य० सं० १९. ४। (४) शु० य० सं० १९. ४। (५) शु० य० सं० १९. ४। (६-१२) शु० य० सं० १९. ५। (१३) शु० य० सं० १९. ६।

* का० श्रौ० सू० १९. २. १४।

सोमेनैवैनꣳ सोमङ्करोत्त्येकया गृह्णात्त्येकधैव यजमाने श्रियन्दधाति श्रीर्हि पयः ॥ १३ ॥ 'नाना[1] हि वान्देवहितꣳ सदस्कृत'मिति। सुराग्ग्रहान्गृह्णाति नाना हि सोमश्च सुरा च देवहितमिति देवहिते ह्येते नाना सदस्कृतमिति द्वे हि वेदी भवतो 'मा[2] सꣳसृक्षाथाम्परमे व्योम'न्निति पाप्मनैवैनं व्यावर्त्तयति 'सुरा[3] त्वमसि शुष्मिणी'ति सुरामेव सुराङ्करोति 'सोम[4] एष' इति सोममेव सोमङ्करोति 'मा[5] मा हिꣳसीः स्वां योनिमाविशन्ती'ति यथायोन्येवैनां व्यावर्त्तयत्त्यात्मनो ऽहिꣳसाया ऽएकया गृह्णात्येकधैव यजमाने यशो दधाति यशो हि सुरा ॥ १४ ॥ क्षत्रं वै पयोग्ग्रहाः विट् सुराग्ग्रहा यदव्यतिषक्तान्गृह्णीयाद्विशं क्षत्राद्व्यवच्छिन्द्यात्क्षत्रं विशः पापवस्यसङ्कुर्याद्यज्ञस्य व्यृद्धिं व्यतिषक्तान्गृह्णाति विशमेव क्षत्रेण सन्दधाति क्षत्रं विशा पापवस्यसस्य व्यावृत्त्यै यज्ञस्य समृद्ध्यै ॥ १५ ॥ प्राणा वै पयोग्ग्रहाः। शरीरꣳ सुराग्ग्रहा यदव्यतिषक्तान्गृह्णीयाच्छरीरम्प्राणेभ्यो व्यवच्छिन्द्यात्प्राणाच्छरीरात्प्रमायुको यजमानः स्याद्व्यतिषक्तान्गृह्णाति शरीरमेव प्राणैः सन्दधाति प्राणाञ्छरीरेणाथो ऽआयुरेवास्मिन्दधाति तस्मात्सौत्रामण्येजानः सर्वमायुरेत्त्यथो य ऽएवमेतद्वेद ॥ १६ ॥ सोमो वै पयोग्ग्रहाः। अन्नꣳ सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्ते सोमपीथञ्चैवान्नाद्यञ्चावरुन्द्धे

(१) शु० य० सं० १९. ७। (२) शु० य० सं० १९. ७। (३) शु० य० सं० १९. ७। (४) शु० य० सं० १९. ७। (५) शु० य० सं० १९. ७।

॥ १७ ॥ पशवो वै पयोग्ग्रहाः । अन्नꣳ सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्ते पशूँश्चैवान्नाद्यञ्चावरुन्द्धे ॥ १८ ॥ ग्राम्म्या वै पशवः पयोग्ग्रहाः । आरण्याः सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्ते ग्ग्राम्म्याँश्चैव पशूनारण्याँश्चावरुन्द्धे ग्ग्राम्म्येण चान्नेनारण्येन च पयोग्ग्रहाञ्छ्रीणाति तस्म्माद्ग्ग्राम्म्याणाम्पशूनाङ्ग्राम्म्यञ्चैवान्नाद्यमारण्यञ्चावरुद्धम् ॥ १९ ॥ तदाहुः । एतस्यै वा ऽएतदघ्न्यायै देवतायै रूपं यदेते घोरा ऽआरण्याः पशवो यदेतेषाम्पशूनाँल्लोमभिः पयोग्ग्रहाञ्छ्रीणीयाद्रुद्रस्यास्ये पशूनपिदध्यादपशुर्य्यजमानः स्याद्यन्न श्रीणीयादनवरुद्धा ऽअस्य पशवः स्यू रुद्रो हि पशूनामीष्ट ऽइति सुराग्ग्रहानेवैतेषाम्पशूनाँल्लोमभिः श्रीणाति सुरायामेव तद्रौद्रन्दधाति तस्म्मात्सुराम्पीत्वा रौद्रमना ऽअथो ऽआरण्येष्वेव पशुषु रुद्रस्य हेतिन्दधाति ग्ग्राम्म्याणाम्पशूनामहिꣳसाया ऽअवरुद्धा ऽअस्य पशवो भवन्ति न रुद्रस्यास्ये पशूनपिदधाति ॥ २० ॥ '[1]या व्व्याघ्रं व्विषूचिका । उभौ व्वृकञ्च रक्षति॥ श्येनम्पतत्रिणꣳ सिꣳहꣳ सेमम्पात्वꣳहसः' ॥ '[2]यदापिपेष मातरम्पुत्रः प्प्रमुदितो धयन्॥ एतत्तदग्ने ऽअनृणो भवाम्म्यहतौ पितरौ मये'ति ॥ २१ ॥ अद्ध्वर्युश्च प्प्रतिप्प्रस्थाता च । जघनेन व्वेदिम्प्प्राञ्चमावृत्तं य्यजमानꣳ श्येनपत्राभ्यामूर्द्ध्वञ्चावाञ्चञ्च पावयतः प्प्राणोदानयोस्तद्रूपम्प्प्राणोदाना-

(१) शु० य० सं० १९. १०। (२) शु० य० सं० १९. ११।

वेवावरुन्द्ध ऽऊर्द्ध्वश्च ह्ययमवाङ् च प्प्राण ऽआत्मानमनु-सञ्चरति 'सम्पृच स्स्थ सम्मा भद्रेण पृङ्क्ते'ति पयोग्ग्रहा-न्त्सम्मृशति श्रियैवैनं य्यशसा समर्द्धयति 'विपृच स्स्थ वि मा पाप्प्मना पृङ्क्ते'ति सुराग्ग्रहान्पाप्प्मनैवैनं व्व्यावर्त्त-यति ॥ २२ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥



[ ग्रहभक्षणसुरापावनादि ]

इन्द्रस्य वै यत्र । इन्द्रियाणि व्वीर्य्याणि व्व्युदक्रा-मँस्तानि देवा ऽएतेनैव यज्ञेन पुनः समदधुर्य्यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्णन्त ऽइन्द्रियाण्ण्येवास्मिँस्तद्वीर्य्याणि पुनः सन्दधत्युत्तरेऽग्ग्नौ पयोग्ग्रहाञ्जुह्वति शुक्रेणैवैनन्तत्सो-मपीथेन समर्द्धयन्ति ॥ १ ॥ स जुहोति 'सुरावन्तम्बर्हिषदꣳ सुवीर'मिति सुरावान्न्वा ऽएष बर्हिषद्यज्ञो यत्सौत्रामणी बर्हिषैवैनं य्यज्ञेन समर्द्धयति 'यज्ञꣳ हिन्न्वन्ति महिषा नमोभि'रित्यृत्विजो वै महिषा यज्ञो नम ऽऋत्विग्भिरेव यज्ञꣳ समर्द्धयति यज्ञेन यजमान'न्दधानाꣳ सोम'मिति सोम-पीथमेवास्मिन्दधति 'दिवि देवतास्वि'ति दिव्व्येवैनन्दे-वतासु दधति 'मदेमेन्द्र'मिति मदाय वाव सोमो मदाय सुरोभावेव सोममदञ्च सुरामदञ्चावरुन्द्धे 'यजमानाः

(३) शु० य० सं० १९. ११। (४) शु० य० सं० १९. ११। (५) शु० य० सं० १९ ३२। (६) शु० य० सं० १९. ३२। (७) शु० य० सं० १९. ३२। (८) शु० य० सं० १९. ३२। (९) शु० य० सं० १९. ३२। (१०) शु० य० सं० १९. ३२।

स्वर्क्का' ऽइत्यर्क्को * वै देवानामन्नमन्नं ऽयज्ञो यज्ञेनैवैनम-न्नाद्येन समर्द्धयति हुत्वा भक्षयन्ति समृद्धमेवास्य तद्वर्द्ध-यन्ति ॥ २ ॥ स भक्षयति । '[1]यमश्विना नमुचेरासुरा-दधी'त्यश्विनौ ह्येतन्नमुचेरध्याहरताᳪं '[2]सरस्वत्यसुनोदि-न्द्रियाये'ति सरस्वती ह्येतमसुनोदिन्द्रियाये'[3]मन्तᳪं शुक्र-म्मधुमन्तमिन्दु'मिति शुक्रो वा ऽएष मधुमानिन्दुर्यत्सोमᳪं '[4]सोमᳪं राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति दक्षिणेऽग्नौ सुराग्रहाञ्जुहति पाप्मनैवैन-न्तद्व्यावर्त्तयन्ति ॥ ३ ॥ स जुहोति । '[5]यस्ते रसः सम्भृत ऽओषधीष्वि'त्यपाञ्च वा ऽएष ऽओषधीनाञ्च रसो यत्सुरापाञ्चै[6]वैनमेतदोषधीनाञ्च रसेन समर्द्धयति '[7]सोमस्य शुष्मᳪं सुरया सुतस्ये'ति य ऽएव सोमे शुष्मो यᳪं सुरायान्तमेवावरुन्द्धे '[8]तेन जिन्व यजमानम्मदेने'ति तेन प्प्रीणीहि यजमानम्मदेनेत्येवैतदाह '[9]सरस्वतीमश्विनावि-न्द्रमग्नि'मिति देवताभिरेव यज्ञᳪं समर्द्धयति देवताभिर्यज्ञेन यजमानᳪं हुत्वा भक्षयन्ति ऽव्यृद्धमेवास्य तत्समर्द्धयन्ति ॥४॥ स भक्षयति । '[10]यदत्र रिप्तᳪं रसिनᳪं सुतस्ये'ति सुता-सुतयोरेव रसमवरुन्द्धे '[11]यदिन्द्रो ऽअपिबच्छचीभि'रितीन्द्रो ह्येतदपिबच्छचीभिर'[12]हन्तदस्य मनसा शिवेने'त्यशिव ऽइव वा

* 'अर्कमन्नं भवत्यर्चति भूतानि' ( निरु० नै० का० ५. ४ ) ।

(१) शु० य० सं १९. ३४ । ( २ ) शु० य० सं० १९. ३४ । ( ३ ) शु० य० सं० १९. ३४ । ( ४ ) शु० य० सं० १९. ३४ । ( ५ ) शु० य० सं० १९. ३३ ।

( ६ ) 'सुरापाञ्चैन०' इति 'ग' 'ज' पुस्तकयोः पाठः ।

( ७ ) शु० य० सं० १९. ३३ ।

( ८ ) शु० य० सं० १९. ३३ । ( ९ ) शु० य० सं० १९. ३३ । ( १० ) शु० य० सं० १९. ३५ । ( ११ ) शु० य० सं० १९. ३५ । ( १२ ) शु० य० सं० १२. ३५ ।

ऽएष भक्षो यत्सुरा ब्ब्राह्मणस्य शिवमेवैनमेतत्कृत्वारम्न्धत्ते 'सोमꣳ राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति ॥ ५ ॥ तद्धैतदुन्न्येऽद्धूर्यवꣳ । राजन्न्यं वा वैश्यं वा परिक्क्रीणन्ति स ऽएतद्भक्षयिष्ष्यतीति तदु तथा न कुर्य्याद्यो ह वा ऽएतद्भक्षयति तस्य हैव-म्पितॄन्न्पितामहानेष सोमपीथोऽन्न्वेति दक्षिणस्यैवाग्नेस्त्री-नङ्गारान्निर्व्वर्त्त्य बहिष्प्परिधि तदेताभिर्व्याहृतिभिर्ज्जुहुयात् ॥ ६ ॥ 'पितृब्भ्यꣳ स्वधायिब्भ्यꣳ स्वधा नम' ऽइति । पितॄनेव पितृलोके स्वधायान्दधाति 'पितामहेब्भ्यꣳ स्वधा-यिब्भ्यꣳ स्वधा नम' ऽइति पितामहानेव पितामहलोके स्वधायान्दधाति 'प्प्रपितामहेब्भ्यꣳ स्वधायिब्भ्यꣳ स्वधा नम' ऽइति प्प्रपितामहानेव प्प्रपितामहलोके स्वधायान्द-धाति ॥ ७ ॥ अप ऽआनीय निनयति । 'अक्षन्न्पितर' ऽइत्यन्नाद्यमेवैषु दधात्य'मीमदन्त पितर' ऽइति मद-यत्त्येवैनान'तीतृपन्त पितर' ऽइति तर्प्पयत्त्येवैना'न्न्पितरꣳ शुन्धद्ध्व'मित्त्यनुपूर्व्वमेवैनान्त्सर्व्वान्न्पावयति पवित्रं वै सौत्रा-मणी ॥ ८ ॥ त्रिभिꣳ पवित्रैꣳ पावयन्ति । त्रयो वा ऽइमे लोका ऽएभिरेवैनँल्लोकैꣳ पुनन्ति ॥ ९ ॥ पावमानीभिꣳ पावयन्ति । पवित्रं वै पावमान्न्यꣳ पवित्रेणैवैनम्पुनन्ति ॥ १० ॥ तिसृभिस्तिसृभिꣳ पावयन्ति । त्रयो वै प्प्राणाꣳ

(१) शु० य० सं० १९. ३५। (२) शु० य० सं० १९. ३६। (३) शु० य० सं० १९. ३६। (४) शु० य० सं० १९. ३६। (५) शु० य० सं० १९. ३६। (६) शु० य० सं० १९. ३६। (७) शु० य० सं० १९. ३६। (८) शु० य० सं० १९. ३६।

प्प्राण ऽउदानो व्व्यानस्तैरेवैनम्पुनन्ति ॥ ११ ॥ नवभिः पावयन्ति । नव वै प्प्राणा प्प्राणैरेवैनम्पुनन्ति प्प्राणेषु पुनः पूतम्प्रतिष्ट्ठापयन्ति ॥ १२ ॥ पवित्त्रेण पावयन्ति । अजाविकस्य वा ऽएतद्रूपं यत्पवित्त्रमजाविकेनैवैनम्पुनन्ति ॥ १३ ॥ वालेन पावयन्ति । गोऽश्श्वस्य वा ऽएतद्रूपं यद्वालो गोऽश्श्वेनैवैनम्पुनन्ति ॥ १४ ॥ हिरण्ण्येन पावयन्ति । देवानां वा ऽएतद्रूपं यद्धिरण्ण्यन्देवाना-मेवैनꣳ रूपेण पुनन्ति ॥ १५ ॥ सुरया पावयन्ति । सुरा हि पूता पूतयैवैनम्पुनन्ति तद्यथा सुरा पूयमाना बल्क्कसेन विविच्च्यत ऽएवमेवैतद्यजमानः सर्व्वस्म्मात्पाप्प्मनो निर्म्मुच्च्यते य ऽएवं विद्वान्त्सौत्रामण्ण्या यजते यो वैतदेवं वेद ॥ १६ ॥ तदाहुः । याजयितव्व्यꣳ सौत्रामण्ण्या३ न याजयितव्व्या३मित्त्यनन्तरायꣳ ह्येवास्य[1] सर्व्वम्पाप्प्मान-मपघ्घ्नन्तीति तदु ह स्म्माह रेवोत्तरा स्त्थपतिः पाटवश्च्चा-क्क्रोऽपि प्प्रदानम्प्रदाय याजयितव्व्यमेवात्त्मा वै यज्ञस्य यज-मानोऽङ्गान्न्यृत्त्विजो यत्र वा ऽआत्त्मा पूतः पूतानि तत्रा-ङ्गान्न्युभय ऽएव पुनत ऽउभये पाप्प्मानमपघ्घ्नते तस्म्मा-दपि प्प्रदानम्प्रदाय याजयितव्व्यमेवेति ॥ १७ ॥ पितृलोकं वा ऽएतेऽन्न्ववयन्ति । ये दक्षिणेऽग्ग्नौ चरन्त्याज्याहुतिं जुहोति यज्ञो वा ऽआज्ज्यं यज्ञादेव यज्ञे प्प्रतितिष्ट्ठन्ति ॥ १८ ॥ स जुहोति । 'ये[2] समानाः समनसः पितरो यम-राज्ज्ये ॥ तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्प्पता'मिति

( १ ) "ह्येवास्मात्" इति 'ग' 'ज' पुस्तकयोः । ( २ ) शु० य० सं० १९. ४५ ।

पितॄनेव यमे परिददात्यथो पितृलोकमेव जयति सर्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्त्ययं वै लोक ऽउत्तरोऽग्निरस्मिन्नेव लोके प्प्रतितिष्ठन्त्याज्याहुतिञ्जुहोति यज्ञो वा ऽआज्यं य्यज्ञादेव यज्ञे प्प्रतितिष्ठन्ति ॥ १९ ॥ स जुहोति । 'ये[1] समानाः समनसो जीवा जीवेषु मामकाः ॥ तेषाᳬं श्रीर्म्मयि कल्पतामस्मिँल्लोके शतᳬं समा' ऽइति स्वानामेव श्रियमवरुन्द्धेऽथो ज्योग्जीवातुमेवैषु दधाति पयः समन्न्वारब्धेषु जुहोति प्प्राणो वा ऽअन्नम्पयः प्प्राण ऽएवान्नाद्येऽन्ततः प्प्रतितिष्ठन्ति ॥२०॥ स जुहोति । 'द्वे[2] सृती ऽअश्शृणवम्पितॄणामह'मिति द्वे वाव सृती ऽइत्याहुर्द्देवानाञ्चैव पितॄणाञ्चेति 'ताब्भ्यामिदं[3] व्विश्श्वमेजत्समेती'ति ताब्भ्याᳬं हीदᳬं सर्व्वमेजत्समेति 'यदन्तरा[4] पितरम्मातरञ्चे'त्यसौ वै पितेयम्माताब्भ्यामेव पितॄन्देवलोकमपिनयत्येकाकी हुतोच्छिष्टम्भक्षयत्येकधैव श्रियमात्मन्धत्ते श्श्रीर्हि पयः ॥ २१ ॥ स भक्षयति । 'इदᳬं[5] हविः प्प्रजननम्मे ऽअस्त्वि'ति प्प्रजननᳬं हि यदि पयो यदि सोमो 'दशवीर'[6]मिति प्प्राणा वै दश व्वीराः प्प्राणानेवात्मन्धत्ते 'सर्व्वगण'मित्यङ्गानि वै सर्व्वे गणा ऽअङ्गान्न्येवात्मन्धत्ते 'स्वस्तय ऽआत्मसनी'त्यात्मानमेव सनोति

(१) शु० य० सं० १९. ४६। (२) शु० य० सं० १९. ४७। (३) शु० य० सं० १९. ४७। (४) शु० य० सं० १९. ४७। (५) शु० य० सं० १९. ४८। (६) शु० य० सं० १९. ४८। (७) शु० य० सं० १९. ४८। (८) शु० य० सं० १९. ४८। (९) शु० य० सं० १९. ४८।

‘(१)प्रजासनी’ति प्रजामेव सनोति ‘प(२)शुसनी’ति पशूनेव सनोति ‘लोक(३)सनी’ति लोकाय वै यजते तमेव जयत्य‘भ(४)यसनी’ति स्वर्गो वै लोकोऽभयꣳ स्वर्ग ऽएव लोकेऽन्ततः प्रतितिष्ठत्य‘ग्निः (५)प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो ऽअस्मासु धत्ते’ति तद्य ऽएवैनमेते याजयन्ति तानेतदाहैतन्म्मयि सर्व्वन्धत्तेति हिरण्येन मार्ज्जयन्तेऽमृतं वै हिरण्यममृत ऽएवान्ततः प्रतितिष्ठन्ति ॥ २२ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या १२० ॥



[ सुरानिर्माणादि ]

प्रजापतिर्य्यज्ञमसृजत । तमाहरत्तेनायजत तेनेष्ट्वा रिरिचान ऽइवामन्न्यत स ऽएतं य्यज्ञक्रतुमपश्यत्सौत्रामणीन्तेनायजत ततो वै स पुनराप्प्यायत रिच्च्यत ऽइव वा ऽएष यः सोमेन यजते वीव ह्यस्य वित्तं व्वेदो हरन्ति ॥ १ ॥ सोमेनेष्ट्वा सौत्रामण्या यजेत । यथा धेनुर्दुग्धा पुनराप्प्यायेतैवꣳ हैव पुनराप्प्यायत ऽआ प्रजया पशुभिः प्प्यायते प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्ग्गँल्लोकञ्जयति य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं व्वेद ॥ २ ॥ तद्धैतत्पप्रच्छ । सुप्प्ला सार्ञ्जयः प्रतीदर्शमैभावतं य्यन्न

(१) शु० य० सं० १९. ४८। (२) शु० य० सं० १९. ४८। (३) शु० य० सं० १९. ४८। (४) शु० य० सं० १९. ४८। (५) शु० य० सं० १९. ४८।

दीक्षयेव दीक्षते न सोमाᳬंशव ऽइव न्न्युप्प्यन्तेऽथ कथᳬं सौत्रामणी सोमयज्ञो भवतीति ॥ ३ ॥ स होवाच । शिरो वा ऽएतद्यज्ञस्य यद्व्रतमात्त्मा दीक्षैतत्त्खलु वै व्रतस्य रूपं ऽयत्सत्त्यमेतद्दीक्षायै यच्छ्रद्धा मनो यजमानस्य रूपं व्वाग्ग्यज्ञस्येति ॥ ४ ॥ स यद्वाचा व्रतमुपैति । आत्त्मन्न्येवैतद्यज्ञस्य शिरᳬ प्प्रतिदधाति सत्त्यᳬं श्रद्धायान्दधाति यजमानं ऽयज्ञे ॥ ५ ॥ तस्म्मादेतस्य यज्ञस्य । व्रतमेव दीक्षा ऽवृषो वै व्रतं ऽयोषा दीक्षा वृषा सत्त्यं ऽयोषा ऽश्रद्धा ऽवृषा मनो योषा व्वाग्ग्वृषा पत्त्न्यै यजमानस्तस्म्माद्यत्रैव पतिस्तत्र जायाथो यज्ञमुख ऽएव तन्न्मिथुनानि करोति प्प्रजात्त्यै ॥ ६ ॥ एते खलु वा ऽएतस्य यज्ञस्य । सोमाᳬंशव ऽइत्त्याहुर्य्यच्छष्प्पाणि तोक्मानि लाजा ऽइति ॥ ७ ॥ प्रातᳬसवनस्यैतद्रूपम् । यच्छष्प्पाण्ण्ययं व्वै लोकᳬ प्प्रातᳬसवनᳬ स ऽआश्विन ऽआश्विनेन पयसा प्प्रथमाᳬं रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण प्प्रातᳬसवनेन समर्द्धयति ॥ ८ ॥ माद्ध्यन्दिनस्यैतत्त्सवनस्य रूपम् । यत्तोक्मान्न्यन्तरिक्षं व्वै माद्ध्यन्दिनᳬ सवनन्तत्त्सारस्वतᳬ सारस्वतेन पयसा द्वितीयाᳬं रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण माद्ध्यन्दिनेन सवनेन समर्द्धयति ॥ ९ ॥ तृतीयसवनस्यैतद्रूपम् । यल्लाजा द्यौर्व्वै तृतीयसवनᳬ सैन्द्र्यैन्द्रेण पयसा तृतीयाᳬं रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण तृतीयसवनेन समर्द्धयति ॥ १० ॥

एकस्यै दुग्धेन । प्रथमाꣳ रात्रिम्परिषिञ्चति द्वयोर्दुग्धेन द्वितीयान्तिसृणान्दुग्धेन तृतीयां यथारूपमेवैनं यथादेवतꣳ सवनैः समर्द्धयति ॥ ११ ॥ 'परीतो षिञ्चता सुत'मिति परिषिञ्चति सुत्यायै 'सोमो य ऽउत्तमꣳ हवि'रित्युत्तमं वा ऽएतद्धविर्यत्सोम ऽउत्तममेवैनꣳ हविष्करोति 'दधन्वा यो नर्यो ऽअप्स्वन्तर'इत्यद्भिश्च ह्येषो ऽन्तरेण च सूयते 'सुषाव सोममद्रिभि'रित्यद्रिभिर्वै सोमः सूयतेऽद्रिभिरेवैनꣳ सुनोति सोमसुत्यायै ॥ १२ ॥ तदाहुः । उभयोर्वा ऽएतद्रूपꣳ सुतस्य चासुतस्य च यत्सौत्रामण्यपामेष ऽओषधीनाꣳ रसो यत्पयस्तत्सुतस्य रूपमन्नस्यैष रसो यत्परिस्रुत्तदासुतस्य रूपमुभाभ्यामेवैनꣳ सवाभ्याꣳ सुनोत्युभाभ्याꣳ सवाभ्यामवरुन्द्धे ॥ १३ ॥ तदाहुः । यद्ग्रावभिः सोमः सूयतेऽथ कथꣳ सौत्रामणीति प्रैषाप्रीभिरिति ब्रूयाद्बार्हता वै प्रैषा बार्हता ग्रावाणो ग्रावभिर्वै सोमः सूयते ग्रावभिरेवैनꣳ सुनोति सोमसुत्यायै ॥ १४ ॥ सर्वे पयस्वन्तो भवन्ति । पयसा हि सूयते सर्वे सोमवन्तो भवन्ति सोमरूपतायै सर्वे परिस्रुन्मन्तो भवन्ति परिस्रुता हि सूयते सर्वे घृतवन्तो भवन्त्येतद्वै प्रत्यक्षाद्यज्ञरूपं यद्घृतम्प्रत्यक्षादेवैनं यज्ञरूपङ्करोति सर्वे मधुमन्तो भवन्त्येतद्वै प्रत्यक्षात्सोमरूपं यन्मधु प्रत्यक्षादेवैनꣳ सोमरूपङ्करोति ॥ १५ ॥ *

(१) शु० य० सं० १९. २। (२) शु० य० सं० १९. २। (३) शु० य० सं० १९. २। (४) शु० य० सं० १९. २।

* शतम् ६३००।

सर्व्वे ऽआश्श्विना भवन्ति । भैषज्याय सर्व्वे सारस्वता ऽअन्नाद्यस्येवावरुद्ध्यै सर्व्वे ऽऐन्द्रा इन्द्रियस्येव व्वीर्य्यस्या-वरुद्ध्यै ॥ १६ ॥ यद्वेव सर्व्वे ऽआश्श्विना भवन्ति । सर्व्वे सारस्वताः सर्व्वे ऽऐन्द्रा ऽएता वा ऽएतन्देवता ऽअग्ग्रे यज्ञꣳ समभरँस्ताभिरेवैनꣳ सम्भरत्यथो ऽएता एवैतद्देवता भागधेयेन समर्द्धयति ॥ १७ ॥ सन्तता याज्यापुरोऽनु-वाक्क्या भवन्ति । समानदेवत्याः प्प्रजानाꣳ सन्तत्या ऽअव्व्यवच्छेदाय सर्व्वा ऽआश्श्विन्न्यो भवन्ति सर्व्वाः सार-स्वत्त्यः सर्व्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १८ ॥ अनुष्टुभ ऽआप्प्रियो भवन्ति । व्वाग्ग्वा ऽअनुष्टुब्व्वाचो वै सोमः सूयते व्वाचैवैनꣳ सुनोति सोमसुत्त्यायै सर्व्वा ऽआश्श्विन्न्यो भवन्ति सर्व्वाः सारस्वत्त्यः सर्व्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १९ ॥ जागता ऽअनुप्प्रैषा भवन्ति । इयं वै जगत्त्यनया वै सोमः सूयतेऽनयैवैनꣳ सुनोति सोमसुत्त्यायै सर्व्वे ऽआश्श्विना भवन्ति सर्व्वे सारस्वताः सर्व्वे ऽऐन्द्राः समानी बन्धुता ॥ २० ॥ स वा ऽएष प्प्रत्त्यक्षात्त्सोमयज्ञ ऽएव यत्त्सौत्रामणी तं ऽयद्ध्येकाकी यजमानो भक्षयेदिष्टिर्वैव स्यात्त्पशुबन्धो वा सर्व्वे ऽऋत्त्विजो भक्षयन्ति सर्व्वे वा ऽऋत्त्विजः सोमम्भक्षयन्ति सोमरूपतायै ॥ २१ ॥ आश्श्विन-नमद्ध्वर्य्यवो भक्षयन्ति । अश्श्विनौ वै देवानामद्ध्वर्य्यू स्वमेवैतद्भागधेयꣳ स्व ऽआयतने भक्षयन्ति ॥ २२ ॥ सारस्वतꣳ होता ब्ब्रह्मा मैत्त्रावरुणः । व्वाग्ग्वै यज्ञस्य होता हृदयम्ब्रह्मा मनो मैत्त्रावरुणः स्वमेवैतद्भागधेयꣳ स्व

ऽआयतने भक्षयन्ति ॥ २३ ॥ ऐन्द्रं ऽयजमानो भक्षयति । ऐन्द्रो वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्वमेवैतद्भागधेयᳪं स्व ऽआयतने भक्षयति ॥२४॥ चक्षुर्वा ऽआश्विनो ग्ग्रहः । प्प्राणः सारस्वतो व्वागैन्द्र ऽआश्विनात्सारस्वतेऽवनयति चक्षुरेवास्य तत्प्राणैः सन्दधाति सारस्वतादैन्द्रे प्प्राणानेवास्य तद्वाचा सन्दधात्यथो प्प्राणानेवास्य तद्वाचि प्प्रतिष्ठापयति तस्मात्सर्वे प्प्राणा व्वाचि प्प्रतिष्ठिताः ॥२५॥ त्रय आश्विनम्भक्षयन्ति । अद्ध्वर्युः प्प्रतिप्प्रस्थाताग्नीद्ध्रस्त्रिवृद्वा ऽइदञ्चक्षुः शुक्लं कृष्णङ्कनीनका यथारूपमेवास्मिँश्चक्षुर्द्दधति[1] ॥२६॥ त्रयः सारस्वतम् । होता ब्ब्रह्मा मैत्रावरुणस्त्रेधाविहितो वा ऽअयम्प्राणः प्प्राण ऽउदानो व्व्यान ऽइति यथारूपमेवास्मिन्प्राणन्दधति ॥ २७ ॥ एकाक्क्यैन्द्रं ऽयजमानो भक्षयति । एकधा वा ऽएषा प्प्राणानाᳪं श्रीर्यद्वागेकधैव व्वाचᳪं श्रियमात्मन्धत्ते तस्मात्सौत्रामण्ण्येजान ऽएकधा स्वानाᳪं श्रेष्ठो भवत्यथो य ऽएवमेतद्वेद ॥ २८ ॥ ऋतवो वा ऽऋत्विजः मासा भक्षाः षडृत्विजो भक्षयन्ति षड्वा ऽऋतव ऽऋत्विग्भिरेवऽर्त्तूनवरुन्द्धे ॥ २९ ॥ द्वादश भक्षा भवन्ति । द्वादश वै[2] मासा भक्षैरेव मासानवरुन्द्धे पुनः पुनरभिनिवर्त्तमृत्विजो भक्षयन्ति तस्मादृतवश्च मासाश्चान्न्योऽन्न्यमभिनिवर्त्तन्ते ॥ ३० ॥ त्रयोदशं ऽयजमानो भक्षयति । यो ह वा ऽएष त्रयोदशो मास ऽएष ऽएव प्प्रत्य-

(१) 'ग' 'ज' पुस्तकयोः 'धा' इति । ( २ ) 'ग' 'ज' पुस्तकयोः "वै" इति नास्ति ।

क्षात्सँवत्सर ऽएतमेवाप्त्वावरुन्द्धे स वा ऽएष सँवत्सर ऽएव यत्सौत्रामणी तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ ३१ ॥ त्रयः पशवो भवन्ति । त्रयो वा ऽइमे लोका ऽइमानेव तैर्ल्लोकानवरुन्द्ध ऽइममेव लोकमाश्श्विनेनान्तरिक्षꣳ सारस्वतेन दिवमैन्द्रेण यथारूपमेव यथादेवतमिमाँल्लोकाञ्जयति चाव च रुन्द्धे ॥ ३२ ॥ त्रयः पुरोडाशा भवन्ति । त्रयो वा ऽऋतव ऽऋतूनेवं[1] तैरवरुन्द्धे ग्ग्रीष्ममेवैन्द्रेण वर्षाः सावित्रेण हेमन्तं वारुणेन यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३३ ॥ षड्ग्रहा भवन्ति । षड्वा ऽऋतव ऽऋतूनेवं[2] तैरवरुन्द्धे वसन्तग्ग्रीष्मावेवाश्श्विनाभ्यां वर्षाशरदौ सारस्वताभ्याꣳ हेमन्तशिशिरावैन्द्राभ्यां ꣳयथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३४ ॥ सन्तता याज्यापुरोऽनुवाक्क्या भवन्ति । समानदेवत्त्या ऽऋतूनाꣳ सन्तत्त्या ऽअव्व्यवच्छेदाय सर्वाः पुरोऽनुवाक्क्या भवन्ति सर्वा याज्यास्तस्मादृतवः सर्वे पराञ्चः सर्वे प्प्रत्यञ्चः सर्वाः प्प्रथमा भवन्ति सर्वा मद्ध्यमाः सर्वा ऽउत्तमास्तस्मादृतवः सर्वे प्प्रथमाः सर्वे मद्ध्यमाः सर्व ऽउत्तमाः सर्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्क्ये भवतोऽहोरात्रयोस्तद्रूपमहोरात्रे ऽएवावरुन्द्धे तस्मादृतवश्च मासाश्चाहोरात्रयोरेव प्प्रतिष्ठिताः ॥ ३५ ॥ स वा ऽएष सँवत्सर ऽएव यत्सौत्रामणी । चन्द्रमा ऽएव प्प्रत्यक्षादादित्यो यजमानस्तस्येयमेव पृथिवी वेदिरन्तरिक्षमुत्तरवेदि-

( १-२ ) "ऋतूनेवैतं०" इति 'ग' 'ज' पुस्तकयोः ।

द्यौर्ब्बर्हिर्दिश ऽऋत्विजो वनस्पतय ऽइद्ध्म ऽआप ऽआज्यमोषधय ऽआहुतयोग्निरेवाग्निः सँवत्सरः सꣳस्था तद्वा ऽइदꣳ सर्वꣳ सँवत्सर ऽएव यदिदङ्किञ्च तस्मात्सौत्रामण्येजानः सर्वञ्जयति सर्वमवरुन्द्धे ॥ ३६ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ राज्ञोऽभिषेकादि ]

त्वष्टा हतपुत्रः । अभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्प्रासहा सोममपिबत्स विष्वङ् व्यार्च्छत्तस्य मुखात्प्राणेभ्यः श्रीयशसान्यूर्द्ध्वान्युदक्रामँस्तानि पशून्प्राविशँस्तस्मात्पशवो यशो यशो ह भवति य ऽएवं विद्वान्त्सौत्रामण्याभिषिच्च्यते ॥ १ ॥ ततोऽस्स्मा ऽएतमश्श्विनौ च सरस्वती च । यज्ञꣳ समभरन्त्सौत्रामणीम्भैषज्याय तयैनमभ्यषिञ्चँस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानाम्भवति य ऽएनयाभिषिच्च्यते ॥२॥ कृष्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतदभिषिञ्चति लोमतश्छदाꣳसि वै लोमानि च्छन्दःस्वेवैनमेतदभिषिञ्चति ॥ ३ ॥ आसन्द्यामभिषिञ्चति । आसन्दी सद्वै साम्म्राज्यꣳ साम्म्राज्येनैवैनꣳ साम्म्राज्यङ्गमयति ॥ ४ ॥ औदुम्बरी भवति । ऊर्ग्वा ऽउदुम्बर ऽऊर्ज्येवाद्ध्यभिषिच्च्यते जानुसम्मिता भवति जानुसम्मितो वा ऽअयँल्लोकोऽस्स्मा ऽउ वै लोकाय क्षत्रियोऽभिषिच्च्यते क्षत्रमु

वा ऽएष भवति यः सौत्रामण्याभिषिच्च्यते तस्मा-
ज्जानुसम्मितापरिमिता तिरश्ची ॥ ५ ॥ राष्ट्रं वा ऽआ-
सन्दी । अपरिमितसमृद्धमु वै राष्ट्रम्मुञ्जविवयना भवति
यज्ञिया हि मुञ्जा द्वा ऽउत्तरस्यां वेद्याम्पादौ भवतो द्वौ
दक्षिणस्यामयं वै लोक ऽउत्तरा वेदिर्द्दक्षिणा पितृलोकस्त-
देनमुभयोर्ल्लोकयोरद्ध्यभिषिञ्चति ॥ ६ ॥ एतद्ध स्म वै
तद्विद्वानाह । गौरीवितिः शाक्त्यः क्षत्रमिवाह किल वय-
ममुष्मिँल्लोके भविता स्म ऽइति शश्वद्धास्मा ऽऋषभो
याज्ञतुरः प्प्रोवाच श्विक्क्नानाᳩं राजा ॥ ७ ॥ स ऽआस-
न्दीमास्तृणाति * । 'क्षत्त्रस्य[1] योनिरसि क्षत्रस्य नाभिर-
सी'ति क्षत्रस्य वा ऽएषा योनिः क्षत्रस्य नाभिः ॥८॥ अथै-
नाङ्कृष्ण्णाजिनेनास्तृणाति † । 'मा[2] त्वा हिᳩसीन्मा मा
हिᳩसी'रिति यज्ञो वै कृष्ण्णाजिनं स्वयज्ञस्य चैवात्मनश्चा-
हिᳩसायै ॥ ९ ॥ अथाधिरोहति । वारुण्ण्यऽर्चा वरुणो वै
देवानाᳩं राजा स्वयैवैनमेतद्देवतयाभिषिञ्चति 'नि[3]षसाद
धृतव्रतो वरुणः पस्त्यास्वा ॥ साम्म्राज्याय सुक्क्रतु'रिति ॥१०॥
अथ सुवर्णरजतौ रुक्क्मौ ‡ व्युपास्यति । 'मृ[4]त्योः पाहि
विद्योत्पाही'ति वृष्टिर्वै विराट् तस्या ऽएते घोरे तन्वौ विद्युच्च

* का० श्रौ० सू० १९. ४. ७ ।
( १ ) शु० य० सं० २०. १ ।
† का० श्रौ० सू० १९. ४. ८ ।
( २ ) शु० य० सं० २०. १ । ( ३ ) शु० य० सं० २०. २
‡ मण्डलाकारो भूषणविशेषो रुक्मः । ( म० भा० )
( ४ ) शु० य० सं० २०. २ ।

ह्लादुनिश्च तत॑ सुवर्णं ऽएव रुक्क्मो विद्युतो रूपꣳ रजतो ह्लादुनेस्ताभ्यामेवास्म्मै देवताभ्याꣳ शर्म्म यच्छति तस्म्मात्सौत्रामण्येजानस्यैताभ्यान्देवताभ्यान्न शङ्का भवत्यथो य ऽएवमेतद्वेद ॥ ११ ॥ पशूनां वसयाभिषिञ्चति । श्रीर्वै पशूनां वसा * श्रियैवैनमेतत्पशूनाꣳ रसेनाभिषिञ्चत्यथो परमं वा ऽएतदन्नाद्यं यद्वसा परमेणैवैनमेतदन्नाद्येनाभिषिञ्चति ॥ १२ ॥ शफग्ग्रहा भवन्ति । शफैर्वै पशवः प्प्रतितिष्ठन्ति प्प्रतिष्ठामेवैनङ्गमयति त्रयस्त्रिꣳशद्ग्गहा भवन्ति त्रयस्त्रिꣳशद्वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति जगतीभिर्ज्जुहोति जागता वै पशवो जगत्यैवास्म्मै पशूनवरुन्द्धे षोडशभिर्ऋग्भिर्ज्जुहोति षोडशकला वै पशवोऽनुकलमेवास्मिमञ्छ्रियन्दधाति[1] ॥ १३ ॥ 'सीसेन[2] तन्त्रम्मनसा मनीषिण' ऽइति । द्वौ द्वौ[†] समासꣳ हुत्वा सते सꣳस्रवान्त्समवनयत्यहोरात्राण्येवैतदर्द्धमासाꣳमासानृतून्त्सँवत्सरे प्प्रतिष्ठापयति तानीमान्यहोरात्राण्यर्द्धमासा मासा ऽऋतवः सँवत्सरे प्प्रतिष्ठिताः ॥ १४ ॥ वैतसः सतो भवति । अप्सुयोनिर्वै वेतस ऽआपो वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति ॥१५॥ सर्वसुरभ्युन्मर्द्दनम्भवति परमो वा ऽएष गन्धो यत्सर्वसुरभ्युन्मर्द्दनङ्गन्धेनैवैनमेतदभिषिञ्चति ॥ १६ ॥ पुरस्तात्प्रत्यङ्ङभिषिञ्चति । पुरस्ताद्धि प्प्रत्यगन्नमद्यते शीर्षतः शीर्षतो ह्यन्नमद्यत ऽआ मुखादन्ववस्रावयति

* मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसाशब्देनोच्यते ।

† "द्वौ द्वौ हुत्वा शेषान्त्सते करोति" ( का० श्रौ० सू० १९. ४. १३ )

( १ ) 'ग' 'ज' पुस्तकयोः "दधति" इति । ( २ ) शु० य० सं० १९. ८० ।

मुखेन ह्यन्नमद्यते सर्वतः परिक्रामः सर्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्योऽन्नाद्यन्दधाति तस्मात्सौत्रामण्येजानस्य सर्वासु दिक्ष्वन्नाद्यमवरुद्धम्भवत्यथो य ऽएवमेतद्वेद ॥ १७ ॥

आश्विनेन प्रथमेन यजुषाभिषिञ्चति । अथ सारस्वतेनाथैन्द्रेणैताभिरेवैनमेतद्देवताभिरभिषिञ्चति तः हैक ऽएताभिश्च देवताभिरभिषिञ्चन्ति भूर्भुवः स्वरित्येताभिरु च व्याहृतिभिरेता वै व्याहृतय ऽइदः सर्वन्तदेनमनेन सर्वेणाभिषिञ्चाम ऽइति न तथा कुर्य्यादेताभिरेवैनन्देवताभिरभिषिञ्चेदेता ऽउ ह्येव देवता इदः सर्वम् ॥ १८ ॥

पुरस्तात्स्विष्टकृतोऽभिषिञ्चति । क्षत्रं वै स्विष्टकृत्क्षत्रेणैवैनमेतदभिषिञ्चत्यन्तरा वनस्पतिञ्च स्विष्टकृतञ्चाभिषिञ्चति सोमो वै वनस्पतिरग्निः स्विष्टकृदग्नीषोमाभ्यामेवैनमेतत्परिगृह्याभिषिञ्चति तस्माद्ये चैतद्विदुर्ये च न त ऽआहुः क्षत्रियो वाव क्षत्रियस्याभिषेक्तेति ॥ १९ ॥

अथैनञ्जानुमात्रे धारयन्ति । अथ नाभिमात्रेऽथ मुखमात्र ऽएष्वेवास्मा ऽएतल्लोकेष्वायतनानि कल्पयत्यभिषेको वा ऽएष यद्वाजपेयमभिषेकः सौत्रामणी तद्यथैवादो वाजपेये यूपः रोहति तदेवैतद्रूपङ्क्रियते ॥ २० ॥ [अर्धः प्रपाठकः ॥५६॥] तदाहुः । प्रेव वा ऽएषोऽस्माल्लोकाच्च्यवते यः सौत्रामण्याभिषिच्यत ऽइति कृष्णाजिने प्रत्यवरोहति यज्ञो वै कृष्णाजिनं यज्ञ ऽएवान्ततः प्रतितिष्ठति ॥ २१ ॥

'[1]प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे' ऽइति । क्षत्र

(१) शु० य० सं० २०. १०।

ऽएव राष्ट्रे प्प्रतितिष्ठति क्षत्राद्राष्ट्रादुप्प्रभ्रꣳशाय 'प्प्रत्यश्श्वेषु प्प्रतितिष्ठामि गोष्ष्वि'ति गोऽश्श्व ऽएव प्प्रतितिष्ठति गोऽश्श्वादुप्प्रभ्रꣳशाय 'प्प्रत्यङ्गेषु प्रतितिष्ठाम्म्यात्म'न्नित्यङ्गेष्ष्वेवात्मन्प्रतितिष्ठत्यङ्गेभ्य ऽआत्मनोऽप्प्रभ्रꣳशाय 'प्प्रति प्प्राणेषु प्प्रतितिष्ठामि पुष्टे' ऽइति प्प्राणेष्ष्वेव पुष्टे प्प्रतितिष्ठति प्प्राणेभ्यः पुष्टादुप्प्रभ्रꣳशाय 'प्प्रति द्यावापृथिव्व्योः प्प्रतितिष्ठामि यज्ञ' ऽइति तदनयोर्द्यावापृथिव्व्योः प्प्रतितिष्ठति ययोरिदꣳ सर्व्वमधि ॥ २२ ॥ अथ साम गायति । क्षत्रं व्वै साम क्षत्रेणैवैनमेतदभिषिञ्चत्यथो साम्म्राज्यं वै साम साम्म्राज्येनैवैनꣳ साम्म्राज्यङ्गमयति सर्व्वेषां व्वा ऽएष व्वेदानाꣳ रसो यत्साम सर्व्वेषामेवैनमेतद्वेदानाꣳ रसेनाभिषिञ्चति ॥ २३ ॥ बृहत्याङ्गायति । बृहत्यां व्वा ऽअसावादित्यः श्रियाम्प्रतिष्ठायाम्प्रतिष्ठितस्तपति बृहत्यामेवैनमेतच्छ्रियाम्प्रतिष्ठायाम्प्रतिष्ठापयति ॥२४॥ ऐन्द्र्याम्बृहत्याङ्गायति*। ऐन्द्रो वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्व ऽएवैनमेतदायतनेऽभिषिञ्चति ॥ २५ ॥ अथ यस्म्मात्संशानानि नाम । एतैर्व्वै सामभिर्देवा ऽइन्द्रमिन्द्रियाय व्वीर्य्याय समश्श्यꣳस्तथो ऽएवैतमृत्विजो यजमानमेतैरेव सामभिरिन्द्रियाय व्वीर्य्याय सꣳश्यन्ति सꣳश्रवसे विश्श्रवसे सत्य-

( १ ) शु० य० सं० २०. १० । ( २ ) शु० य० सं० २०. १० । ( ३ ) शु० य० सं० २०. १० । ( ४ ) शु० य० सं० २०. १० ।

* का० श्रौ० सू० १९. ५. २ ।

श्श्रवसे श्श्रवस ऽइति सामानि भवन्त्येष्वेवैनमेतल्लोकेषु श्श्रावयन्ति चतुर्न्निधनम्भवति चतस्रो वै दिशः सर्व्वास्वे-वैनमेतद्दिक्षु प्प्रतिष्ठापयन्ति सर्व्वे निधनमुपावयन्ति संविदाना ऽएवास्मिमञ्छ्रियन्दधति ॥ २६ ॥ तदाहुः । यदेतत्साम गीयतेऽथ क्वैतस्य साम्म्न ऽउक्क्थङ्का प्प्रतिष्ठा ऽष्टृद्धः हि तद्यत्स्तुतमननुशस्तमिति ॥ २७ ॥ त्रया देवा ऽएकादशेति । एतद्वा ऽएतस्य साम्म्न ऽउक्क्थमेषा प्प्रतिष्ठा ॥ २८ ॥ अथो 'त्रया[1] देवा ऽएकादशे'ति । त्रयस्त्रिꣳशङ्गृहज्जुहोति त्रया हि देवा ऽएकादश 'त्रयस्त्रिꣳशाः[2] सुराधस' ऽइति त्रयस्त्रिꣳशद्धि देवा 'बृहस्प्पतिपुरोहिता[3]' ऽइति ब्रह्म वै बृहस्प्पतिर्ब्रह्मपुरोहिता ऽइत्त्येवैतदाह 'देवस्य[4] सवितुः सव' ऽइति देवेन सवित्रा प्प्रसूता ऽइत्त्येवैतदाह 'देवा[5] देवैरवन्तु मे'ति देवा ह्येतन्देवैरभिषिञ्चन्ति ॥ २९ ॥ 'प्रथमा[6] द्वितीयै'रिति । प्प्रथमा ह्येतन्द्वितीयैरभिषिञ्चन्ति 'द्वितीयास्तृतीयै'रिति द्वितीया ह्येतन्तृतीयैरभिषिञ्चन्ति 'तृतीयाः सत्त्येने'ति तृतीया ह्येतꣳ सत्त्येनाभिषिञ्चन्ति 'सत्त्यं[8] य्यज्ञेने'ति सत्त्यꣳ ह्येतं य्यज्ञेनाभिषिञ्चति 'यज्ञो[10] य्यजुर्ब्भि'रिति यज्ञो ह्येतं य्यजुर्ब्भिरभिषिञ्चति 'यजूꣳषि[11] सामभि'रिति यजूꣳषि ह्येतꣳ साम-

---

( १ ) शु० य० सं० २०. ११। ( २ ) शु० य० सं० २०. ११। ( ३ ) शु० य० सं० २०. ११। ( ४ ) शु० य० सं० २०. ११। ( ५ ) शु० य० सं० २०. ११। ( ६ ) शु० य० सं० २०. १२। ( ७ ) शु० य० सं० २०. १२। ( ८ ) शु० य० सं० २०. १२। ( ९ ) शु० य० सं० २०. १२। ( १० ) शु० य० सं० २०. १२। ( ११ ) शु० य० सं० २०. १२।

भिरभिषिञ्चन्ति 'सामान्यृग्भि'रिति सामानि ह्येतमृग्भिरभिषिञ्चन्त्यृ'चः पुरोऽनुवाक्याभि'रित्यृचो ह्येतम्पुरोऽनुवाक्याभिरभिषिञ्चन्ति 'पुरोऽनुवाक्या याज्याभि'रिति पुरोऽनुवाक्या ह्येतं याज्याभिरभिषिञ्चन्ति 'याज्या वषट्कारै'रिति याज्या ह्येतं वषट्कारैरभिषिञ्चन्ति 'वषट्कारा आहुतिभि'रिति वषट्कारा ह्येतमाहुतिभिरभिषिञ्चन्त्या'हुतयो मे कामान्त्समर्द्धयन्तु भूः स्वाहे'ति तदेनमेताभिर्देवताभिः परोऽवरमभिषिच्याथास्मा आहुतिभिः सर्वान्कामान्त्समर्द्धयत्यथर्त्विक्षूपहवमिष्ट्वा भक्षयत्यृतवो वा ऋत्विज ऋतुष्वेवैतदुपहवमिच्छते ॥ ३० ॥ स भक्षयति । 'लोमानि प्रयतिर्मम त्वङ्म आनतिरागतिः ॥ माꣳसम्म उपनतिर्वस्वस्थि मज्जा म आनति'रिति प्रेव वा एष लोकाꣳश्च देवताश्च विशति यः सौत्रामण्याभिषिच्यते तदेतदवान्तरामात्मानमुपह्वयते तथा कृत्स्न एव सर्वतनूः साङ्गः सम्भवति ॥ ३१ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥



[ सौत्रामणीशेषः ]

एतस्माद्वै यज्ञात्पुरुषो जायते । स यद्ध वा अस्मिँल्लोके पुरुषोऽन्नमत्ति तदेनममुष्मिँल्लोके प्रत्यत्ति स

(१) शु० य० सं० २०. १२ । (२) शु० य० सं० २०. १२ । (३) शु० य० सं० २०. १२ । (४) शु० य० सं० २०. १२ । (५) शु० य० सं० २०. १२ । (६) शु० य० सं० २०. १२ । (७) शु० य० सं० २०. १३ ।

त्रा ऽएष परिस्रुतो यज्ञस्तायतेऽनाद्या वै ब्राह्मणेन परि-
स्रुत्स ऽएतस्मादनाद्याज्जायते तद्ध हामुष्मिँल्लोकेऽन्नन्न
प्रत्यत्ति तस्मादेष ब्राह्मणयज्ञ ऽएव यत्सौत्रामणी ॥ १ ॥
तस्य लोमान्येव शष्पाणि । त्वक्तोक्मानि माꣳसँल्लाजा
ऽअस्थि कारोतरो मज्जा मासरꣳ रसः परिस्रुन्नग्नहु[1]ल्लो-
हितꣳ रेतः पयो मूत्रꣳ सुरोवध्यं बल्कसम् ॥ २ ॥ हृदय-
मेवास्यैन्द्रः पुरोडाशः । यकृत्सावित्रः क्लोमा वारुणो
मतस्ने ऽएवास्याश्वत्थश्च पात्रमौदुम्बरश्च पित्तन्नैयग्रोध-
मान्त्राणि स्थाल्यो गुदा ऽउपशयानि श्येनपत्रे प्लीहा-
सन्दी नाभिः कुम्भो वनिष्ठुः प्लाशिः शतातृण्णा तद्यत्सा
बहुधा वितृण्णा भवति तस्मात्प्लाशिर्बहुधा विकृत्तो
मुखꣳ सतञ्जिह्वा पवित्रञ्चप्यम्पायुर्वस्तिर्वालः ॥ ३ ॥
अङ्गान्येवास्याश्विनः पशुः । आत्मा सारस्वतो रूपमैन्द्र
ऽऋषभस्तस्मादाहुर्गावः पुरुषस्य रूपमित्यायुर्हिरण्य-
न्तच्छतमानम्भवति तस्माच्छतायुः पुरुषः ॥ ४ ॥ चक्षुषी
ऽएवास्याश्विनौ ग्रहौ । पक्ष्माणि गोधूमसक्तवश्च
कुवलसक्तवश्च नासिके ऽएवास्य सारस्वतौ ग्रहावथ
यानि नासिकयोर्ल्लोमानि तान्युपवाकसक्तवश्च बदरसक्त-
वश्च श्रोत्रे ऽएवास्यैन्द्रौ ग्रहावथ यानि कर्णयोर्ल्लोमानि
यानि च भ्रुवोस्तानि यवसक्तवश्च कर्कन्धुसक्तवश्च
॥ ५ ॥ अथ यान्युपस्थे लोमानि । यानि चाधस्तात्तानि

( १ ) 'सर्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजपिप्पलीवंशावकाबृहच्छत्राचित्रकेन्द्र-वारुण्यश्वगन्धाधान्यकयवानीजीरकद्वयहरिद्राद्वयविरूढयवव्रीहय एकीकृता नग्नहुः' (म० भा०) ।

व्वृकलोमान्न्यथ यान्न्युरसि लोमानि यानि च निकक्ष-योस्तानि व्व्याघ्रलोमानि केशाश्च श्म्मश्रूणि च सिᳪ-हलोमानि ॥ ६ ॥ त्रयः पशवो भवन्ति । त्रेधाविहितो वा ऽअयम्पुरुषस्यात्मात्मानमेवास्य तैः स्पृणोति यदुवाङ्ना-भेस्तदाश्विनेन यदूर्द्ध्वन्नाभेरवाचीनᳪ शीर्ष्णस्तत्सारस्वतेन शिर ऽऐन्द्रेण यथारूपमेव यथादेवतमात्मानम्मृत्यो स्पृत्वा-मृतङ्कुरुते ॥ ७ ॥ त्रयः पुरोडाशा भवन्ति । त्रेधाविहितं वा ऽइदम्पुरुषस्य व्वयो व्वय ऽएवास्य तैः स्पृणोति पूर्ववयसमे-वैन्द्रेण मद्ध्यमवयसᳪ सावित्रेणोत्तमवयसं व्वारुणेन यथा-रूपमेव यथादेवतं व्वयो मृत्यो स्पृत्वामृतङ्कुरुते ॥ ८ ॥ षड्ग्रहा भवन्ति । षड्वा ऽइमे शीर्षन्प्राणाः प्प्राणानेवास्य तैः स्पृणोति चक्षुषी ऽएवाश्विनाभ्यान्नासिके सारस्व-ताभ्याᳬ श्रोत्रे ऽऐन्द्राभ्यां यथारूपमेव यथादेवत-म्प्राणान्न्मृत्यो स्पृत्वामृतान्न्कुरुते ॥ ९ ॥ सन्तता याज्या-पुरोऽनुवाक्क्या भवन्ति । समानदेवत्त्याः प्प्राणानाᳬ सन्तत्त्या ऽअव्व्यवच्छेदाय सर्वाः पुरोऽनुवाक्क्या भवन्ति सर्वा याज्यास्तस्म्मात्प्राणाः सर्वे पराञ्चः सर्वे प्प्रत्यञ्चः सर्वाः प्प्रथमा भवन्ति सर्वा मद्ध्यमाः सर्वा ऽउत्तमास्त-स्म्मात्प्राणाः सर्वे प्प्रथमाः सर्वे मद्ध्यमाः सर्वे ऽउत्तमाः सर्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्क्ये भवतः प्प्राणो-दानयोस्तद्रूपम्प्राणोदानावेवावरुन्द्धे तस्म्मात्सर्वे प्प्राणाः प्प्राणोदानयोरेव प्प्रतिष्ष्ठिताः ॥ १० ॥ स वा एष ऽआ-

(१) "मात्मानम्मृत्यो स्पृत्वामृतङ्कुरुते" इति 'ग' 'ज' पुस्तकयोः ।

त्मैव यत्सौत्रामणी । मन ऽएव प्रत्यक्षाद्वाग्ग्यजमानस्त-स्यात्मैव वेदिः प्रजोत्तरवेदिः पशवो बर्हिरङ्गान्यृत्विजो-ऽस्थीनीद्ध्म ऽआज्यम्मज्जा मुखमग्निरन्नमाहुतिर्वयः सᳬस्था तस्मात्सौत्रामण्येजानो वय ऽउपगच्छति ॥११॥ तद्यौ ह वा ऽइमौ पुरुषाविवाक्ष्योः । एतावेवाश्विनावथ यत्कृष्णन्तत्सारस्वतं यच्छुक्लन्तदैन्द्रन्तद्यदाश्विने पशौ सत्यथैता देवताः सह यजत्येतान्येवैतत्साद्धिङ्क्त्वात्मन्धत्ते ॥ १२ ॥ मन ऽएवेन्द्रः । वाक्सरस्वती श्रोत्रे ऽअश्विनौ यद्वै मनसा ध्यायति तद्वाचा वदति यद्वाचा वदति तत्कर्णाभ्याᳬ शृणोति तद्यत्सारस्वते पशौ सत्यथैता देवताः सह यजत्येतान्येवैतत्साद्धिङ्क्त्वात्मन्धत्ते ॥ १३ ॥ प्राण ऽएवेन्द्रः । जिह्वा सरस्वती नासिके ऽअश्विनौ यद्वै प्राणेनान्नमात्मन्प्रणयते तत्प्राणस्य प्राणत्वञ्जिह्वया वा ऽअन्नस्य रसं विजानाति नासिके ऽउ वै प्राणस्य पन्थास्तद्यदैन्द्रे पशौ सत्यथैता देवताः सह यजत्येता-न्येवैतत्साद्धिङ्क्त्वात्मन्धत्ते ॥ १४ ॥ हृदयमेवेन्द्रः । यकृ-त्सविता क्लोमा वरुणस्तद्यदैन्द्रे पुरोडाशे सत्यथैता देवताः सह यजत्येतान्येवैतत्साद्धिङ्क्त्वात्मन्धत्ते ॥ १५ ॥ प्राण ऽएव सविता । व्यानो वरुणः शिश्नमिन्द्रो यद्वै प्राणेनान्नमत्ति तद्व्यानेन व्यनिति शिश्नेन वा ऽअन्नस्य रसᳬ रेतः सिञ्चति तद्यत्सावित्रे पुरोडाशे सत्यथैता देवताः सह यजत्येतान्येवैतत्साद्धिङ्क्त्वात्मन्धत्ते ॥ १६ ॥ योनिरेव वरुणः । रेत ऽइन्द्रः सवितैव रेतसः प्रजनयिता

तद्यद्वारुणे पुरोडाशे सत्त्यथैता देवताः सह यजत्येताभ्ये-वैतत्साद्धङ्कृत्वात्मन्धत्ते स य ऽएवमेतद्वेदैता ऽएव देवता अनुसम्भवत्त्येता देवता ऽअनु प्प्रजायत ऽआ प्प्रजया पशुभिः प्प्यायते प्प्रत्यस्मिँल्लोके तिष्ठत्त्यभि स्वर्ग्गँल्लोकञ्जयति य ऽएवं विद्वान्त्सौत्रामण्ण्या यजते यो वैत-देवं वेद ॥ १७ ॥

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अवभृथेष्टिः ]

अवभृथमिष्ट्वा यन्ति । अवभृथं वै सोमनेष्ट्वा यन्ति सोम ऽएष यत्सौत्रामणी ॥ १ ॥ 'यद्देवा देवहेडन'मिति । देवकृताद्देवैनमेनसो मुञ्चति 'यदि दिवा यदि नक्त'मिति यद्देवाहोरात्राभ्यामेनः करोति तस्माद्देवैनम्मुञ्चति 'यदि जाग्ग्रद्यदि स्वप्न' ऽइति मनुष्ष्या वै जागरितम्पितरः सुप्तम्मनुष्ष्यकिल्विषाच्चैवैनम्पितृकिल्विषाच्च मुञ्चति ॥ २ ॥ 'यद्ग्ग्रामे यदरण्ण्य' ऽइति । ग्ग्रामे वा ह्यरण्ण्ये वैनः क्क्रियते तस्माद्देवैनम्मुञ्चति 'यत्सभाया'मिति सभ्या-द्देवैनमेनसो मुञ्चति 'यदिन्द्रिय' ऽइति दैवाद्देवैनमेनसो मुञ्चति 'यच्छूद्रे यदर्य्ये यदेनश्चकृमा वयं यदेकस्याधि धर्म्मणि तस्यावयजनमसी'ति सर्वस्माद्देवैनमेतस्मादे-नसो मुञ्चति ॥ ३ ॥ 'यदापो ऽअग्घ्न्या ऽइति । वरुणेति

(१) शु० य० सं० २०. १४। (२) शु० य० सं० २०. १५। (३) शु० य० सं० २०. १६। (४) शु० य० सं० २०. १७। (५) शु० य० सं० २०. १७। (६) शु० य० सं० २०. १७। (७) शु० य० सं० २०. १७। (८) शु० य० सं० २०. १८।

शपामहे ततो वरुण नो मुञ्चे'ति वरुण्ण्याद्देवैनमेनसो मुञ्चत्य- 'वभृथ निचुम्पुण निचेरुरसि निचुम्पुण' ऽइति यो ह वाऽअ- यमपामावर्त्तः स हावभृथः स हैष वरुणस्य पुत्रो वा भ्राता वा तमेवैतत्स्तौत्य'वं देवैर्देवकृतमेनो यक्षी'ति देवकृतमेवैनो- ऽवयजते'ऽव मर्त्यैर्म्मर्त्यकृत'मिति मर्त्यकृतमेवैनोऽवयजते 'पुरुराव्णो देव रिषस्पाही'ति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह ॥ ४ ॥ 'समुद्रे ते हृदयमप्स्वन्त'रिति । आपो वै समुद्रो रसो वा ऽआपस्तदेनमेतेन रसेन सꣳसृजति 'सन्त्वा विशन्त्वोषधीरुताप' ऽइति तदेन- मेतेनोभयेन रसेन सꣳसृजति यश्चौषधिषु यश्चाप्सु द्वौ विक्रमा ऽउदङ्ङुत्क्रामत्येतावती वै मनुष्ये जूति- र्यावान्विक्रमस्तद्यावत्येवास्मिञ्जूतिस्तयैव पाप्मानं विज- हाति ॥ ५ ॥ 'सुमित्रिया न ऽआप ऽओषधयः सन्त्वि'ति । अञ्जलिनाप ऽउपाचति वज्रो वा ऽआपो वज्रेणैवैतन्मि- त्रधेयङ्कुरुते 'दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दि- शम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ६ ॥ 'द्रुपदादिव मुमुचानः । स्विन्नः स्नातो मलादिव ॥ पूतम्पवित्रेणेवाज्य- मापः शुन्धन्तु मैनस' ऽइति वासोऽपप्लावयति यथे- षीकाम्मुञ्जाद्विवृहेदेवमेनꣳ सर्वस्मात्पाप्मनो विवृहति

(१) शु० य० सं० २०. १८। (२) शु० य० सं० २० १८। (३) शु० य० सं० २०.१८। (४) शु० य० २०.१८। (५) शु० य० सं० २०. १९. (६) शु० य० सं० २०. १९। (७) शु० य० सं० २०. १९। (८) शु० य० सं० २०. १९। (९) शु० य० सं० २०. २०।

स्न्नाति तम ऽएवापहते ॥ ७ ॥ 'उद्वयन्तमसस्प्परी'ति । पाप्प्मा वै तमः पाप्प्मानमेव तमोऽपहते 'स्वः पश्श्यन्त ऽउत्तर'मित्त्ययं वै लोकोऽथ ऽउत्तरोऽस्मिन्नेव लोके प्प्रतितिष्ठति 'देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तम'मिति स्वर्ग्गो वै लोकः सूर्य्यो ज्योतिरुत्तमᳪं स्वर्ग्ग ऽएव लोकेऽन्ततः प्प्रतितिष्ठत्त्यनपेक्षमेत्त्याहवनीयमुपतिष्ठते ॥ ८ ॥ 'अपो ऽअद्यान्ववचारिष'मिति । अपामेव रसमवरुन्द्धे 'रसेन समसृक्ष्महि'त्त्यपामेव रसमात्मन्धत्ते 'पयस्वानग्न ऽआगमन्तम्मा सᳪंसृज वर्च्चसा प्प्रजया च धनेन चे'त्त्याशिषमेवैतदाशास्ते ॥ ९ ॥ 'एधोऽस्येधिषीमही'ति समिधमादत्ते * । एधो ह वा ऽअग्नेः समि'त्समिदसि तेजोऽसि तेजो मयि धेही'त्त्याहवनीये समिधमभ्यादधात्त्यग्निमेवैतया समिन्द्धे स ऽएनᳪं समिद्धस्तेजसा समिन्द्धे ॥ १० ॥ आदित्त्यञ्चरुं ᳪंवक्ष्यमाणो निर्व्वपति । आदित्त्यमीजान ऽइयं वा अदितिरस्यामेव यज्ञन्तनुतेऽस्यामिष्ट्वा प्प्रतितिष्ठति धेनुर्द्दक्षिणेयं वै धेनुरिमामेव सर्व्वान्कामान्दुहे वत्त्सम्पूर्व्वस्यान्ददाति मातरमुत्तरस्यां ᳪंवदा वै वत्त्सो मातरन्धयत्त्यथ सा प्प्रत्ता दुहे प्प्रत्तामेवेमाᳪं सर्व्वान्कामान्दुहे ॥ ११ ॥ तदाहुः । प्रेव वा ऽएषोऽस्मा-

( १ ) शु० य० सं० २०. २१ । ( २ ) शु० य० सं० २०. २१ । ( ३ ) शु० य० सं० २०. ११ । ( ४ ) शु० य० सं० २०. २१ । ( ५ ) शु० य० सं० २०. २२ । ( ६ ) शु० य० सं० २०. २२ । ( ७ ) शु० य० सं० २०. २३ । ( ८ ) शु० य० सं० २०. २३ ।

* का० श्रौ० सू० १९. ५. १९ ।

ल्लोकाच्च्यवते योऽपोऽवभृथमभ्यवैतीत्यवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतेऽयं वै लोको मित्रोऽसौ वरुणो यदेवेदमन्तरेण तत्पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजत ऽएष्वेवैतल्लोकेषु प्रतितिष्ठति प्राणो वै मित्रोऽपानो वरुणोऽन्नमेव पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजते प्राण ऽएवान्नाद्येऽन्ततः प्रतितिष्ठति ॥१२॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ सौत्रामण्यर्थवादः ]

दुष्टरीतुर्ह पौᳪसायनः । दशपुरुषᳪ राज्यादपरुद्ध ऽआस रेवोत्तरसमु ह पाटवश्चाक्रᳪ स्थपतिᳪ सृञ्जया ऽअपरुरुधुः ॥ १ ॥ स होवाच । दुष्टरीतुम्पौᳪसायनᳪ सौत्रामण्या त्वा याजयानि यदिदᳪ सृञ्जयेषु राष्ट्रन्त्वयि धास्यामीति तथेति तयैनमयाजयत् ॥ २ ॥ तदु ह बल्हिकः प्रातिपीयः शुश्राव । कौरव्यो राजा यो ह वा ऽअयन्दुष्टरीतुः पौᳪसायनो दशपुरुषᳪ राज्यादुपरुद्धोऽभूत्तमयञ्चाक्र स्थपतिः सौत्रामण्या याजयिष्यति यदिदᳪ सृञ्जयेषु राष्ट्रन्तद्धास्मिन्धास्यतीति ॥ ३ ॥ स होवाच । तन्न्वा ऽअहन्तं वेदिष्यामि यदि स तस्मिन्राष्ट्रन्धास्यति बहिर्द्धा वैनᳪ राष्ट्राद्धास्यतीति स ऽआजगाम यस्यां वेलायाङ्ग्रहा गृह्यन्ते ॥ ४ ॥ स होवाच । स्थपते चाक्र नाहवनीये सुरा होतव्येत्या-

हुन्नोऽन्यत्राहवनीयाद्यद्याहवनीये सुराᳪं होष्यसि पाप-
वस्यसङ्करिष्यसि जामि यज्ञस्य यद्यन्न्यत्राहवनीयाद्बहि-
र्द्धैनꣳ राष्ट्राद्धास्यसि नैनꣳ राष्ट्रे धास्यसि नास्मिम-
न्राष्ट्रन्धास्यसीति ॥ ५ ॥ स होवाच । नाहवनीये सुराᳪं
होष्यामि नान्न्यत्राहवनीयान्न पापवस्यसङ्करिष्यामि
न जामि यज्ञस्य नैनम्बहिर्द्धा राष्ट्राद्धास्यामि राष्ट्र
ऽएनन्धास्यामि राष्ट्रमस्मिन्धास्यामीति ॥ ६ ॥ स
होवाच । कथꣳ हि करिष्यसी३ ऽइति स हैतदुवा-
चासुरेषु वा ऽएषोऽग्ग्रे यज्ञ आसीत्सौत्रामणी स
देवानुपप्प्रैत्सोऽप ऽआगच्छत्तमापः प्रत्यनन्दँस्तस्मादु
श्रेयाᳪंसमागतम्प्रत्येव नन्दन्ति तꣳ होचुरेह्येव
भगव ऽइति ॥ ७ ॥ स होवाच । बिभेमि वै प्प्रणयत
मेति कस्माद्भगवो बिभेषीत्यसुरेभ्य ऽइति तथेति तमापः
प्प्राणयँस्तस्माद्यो वधत्रो भवति स बिभ्यतम्प्रण-
यति यदापः प्प्राणयँस्तस्मादापः प्प्रणीतास्तत्प्रणीतानाम्प्र-
णीतात्वम्प्रति ह तिष्ठति य ऽएवमेतत्प्रणीतानाम्प्रणीतात्वं
वेद ॥ ८ ॥ तदिष्ट्वाः प्प्रयाजा ऽआसुः । अपर्य्यग्ग्निकृत-
मथासुरा ऽअन्न्वाजग्ग्मुस्ते देवाः पर्य्यग्ग्निनैवासुरान्त्स-
पत्नान्भ्रातृव्यान्न्यज्ञादन्तरायँस्तथो ऽएवैष ऽएतत्पर्य्य-
ग्ग्निनैव द्विषन्तम्भ्रातृव्यं य्यज्ञादन्तरेति ॥ ९ ॥ देवयो-
निर्वा ऽएष यदाहवनीयः । तस्यैतावमृतपक्षौ यावेताव-
भितोऽग्ग्नी तद्यदाहवनीये यजन्तन्न्वते देवयोनावेवैतद्देवे-
भ्यो यज्ञन्तन्न्वत ऽउप हैनम्पुनर्य्यज्ञो नमति नास्माद्यज्ञो

ऽव्यवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १० ॥ उत्तरेऽग्नौ पयोग्रहाञ्जुह्वति । उत्तरेऽग्नौ पशूञ्छ्रपयन्ति पशूनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्प्रजनयत्यप ह वै पशूनाम्पुनर्म्मृत्युञ्जयति नास्म्माद्यज्ञो ऽव्यवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ ११ ॥ दक्षिणेऽग्नौ सुराग्ग्रहाञ्जुह्वति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंऽस्युक्ताभिः पितॄनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्प्रजनयत्यप ह वै पितॄणाम्पुनर्म्मृत्युञ्जयति नास्म्माद्यज्ञो ऽव्यवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १२ ॥ तद्यदेतावग्नी ऽआहवनीयाद्विह्रियेते । तेनाहवनीयावथ यदाहवनीयम्पुनर्न्नाश्नुवाते तेनानाहवनीयौ तेनोभौ होमा ऽउपाप्नोति यश्चाहवनीये यश्चानाहवनीये यच्च हुतं ऽयच्चाहुतम्पुनर्ह्यायमित्त्वोवाच न तदस्ति यत्सृञ्जयानाꣳ राष्ट्रन्दुष्टरीतोस्तदद्य तथायश्चाक्रू स्त्थपतिर्य्यज्ञेऽकरिति ॥१३॥ उत्तरेऽग्नौ पशुभिः पुरोडाशैः पयोग्ग्रहैरिति चरन्ति । यदु चान्यत्तेन देवानेव तद्देवलोके प्प्रीणाति त ऽएनम्प्रीताः प्प्रीणन्त्यथो देवलोकमेव जयति ॥ १४ ॥ दक्षिणेऽग्नौ सुराग्ग्रहाञ्जुह्वति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंऽस्युक्ताभिः पितॄनेव तत्पितृलोके प्प्रीणाति त ऽएनम्प्रीताः प्प्रीणन्त्यथो पितृलोकमेव जयति ॥ १५ ॥ स वा ऽएष आत्मैव यत्सौत्रामणी । तस्म्मात्सा निरुक्ता निरुक्तो ह्यात्मा

लोको वयोधास्तस्मात्सोऽनिरुक्तोऽनिरुक्तो हि लोक ऽआत्मा वै यज्ञस्य सौत्रामणी बाहू ऽऐन्द्रश्च वयोधाश्च तद्यदेतावभितः पशू भवतस्तस्मादिमावात्मानमभितो बाहू यथो वै पशुरेवं ऽयूपस्तद्यदेतᳪ सौत्रामणिकं ऽयूपमेतौ यूपावभितो भवतस्तस्माद्विमावात्मानमभितो बाहू ॥ १६ ॥

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ११२ ॥

इति नवमोऽध्यायः ॥ ९ ॥

मध्यमनाम द्वादशं काण्डं समाप्तम्* ॥ १२ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ४५९

# अथाश्वमेधनाम त्रयोदशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—अश्वमेधः, तद्गतं प्रायश्चित्तम्, पुरुषमेधः, सर्वमेधः, दशरात्रः, पितृमेधः ]



## [ ब्रह्मौदनपाकः ]

॥ ओ३म् ॥* ब्रह्मौदनम्पचति । रेत ऽएव तद्धत्ते यदाज्यमुच्छिष्यते तेन रशनामब्भ्यज्यादत्ते तेजो वा ऽआज्यम्प्राजापत्योऽश्वᳳ प्रजापतिमेव तेजसा समर्द्धयत्यपूतो वा ऽएषोऽमेध्यो यदश्वः ॥ १ ॥ दर्ब्भमयी रशना भवति । पवित्रं वै दर्ब्भाᳳ पुनात्येवैनम्पूतमेवैनम्मेध्यमालभते ॥ २ ॥ अश्वस्य वा ऽआलब्ब्धस्य । रेत ऽउदक्रामत्तत्सुवर्णꣳ हिरण्यमभवद्यत्सुवर्णꣳ हिरण्यन्ददात्यश्वमेव रेतसा समर्द्धयति ॥ ३ ॥ † प्रजापतिर्य्यज्ञमसृजत । तस्य महिमापाक्रामत्[1]स महर्त्विजᳳ प्राविशत्तम्महर्त्विग्भिरन्वैच्छत्तम्महर्त्विग्भिरन्वविन्दद्यन्महर्त्विजो ब्ब्रह्मौदनम्प्राश्नन्ति महिमानमेव तद्यज्ञस्य यजमानोऽवरुन्द्धे ब्ब्रह्मौदने सुवर्णꣳ हिरण्यन्ददाति रेतो वा ऽओदनो रेतो हिरण्यꣳ रेतसैवास्मिँस्तद्रेतो दधाति शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते चतुष्टयीरपो

* ब्राह्मणेभ्य ऋत्विग्भ्यो देय ओदनः ब्रह्मौदनः ।

† अत्र शतम् ६४०० ।

( १ ) 'क्र' इति 'ज' पुस्तके ।

वसतीवरीर्म्मद्ध्यमायाह्ने गृह्णाति ता दिग्भ्यः समाहृता भवन्ति दिक्षु वा ऽअन्नमन्नमापोऽन्नेनैवास्म्मा ऽअन्नमवरुन्द्धे ॥ ४ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अश्वस्य बन्धनप्रोक्षणादि ]

व्यृद्धमु वा ऽएतद्यज्ञस्य । यदयजुष्क्केण क्रियत 'ऽइमा[1]मगृब्भ्णन्न्रशनामृतस्ये'त्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै द्वादशारत्निर्ब्भवति द्वादश मासाः सँवत्त्सरः सँवत्त्सरमेव यज्ञमाप्नोति ॥ १ ॥ तदाहुः । द्वादशारत्नी रशना कार्य्या३ त्रयोदशारत्नी३रित्यृषभो वा ऽएष ऽऋतूनां यत्त्सँवत्त्सरस्तस्य त्रयोदशो मासो विष्ट्टप वृषभ ऽएष यज्ञानां यदश्वमेधो यथा वा ऽऋषभस्य विष्ट्टपमेवमेतस्य विष्ट्टपन्त्रयोदशमरत्निः रशनायामुपाद ध्यात्तद्यथर्षभस्य* विष्ट्टपः संस्क्रियते तादृक्तत् ॥ २ ॥ 'अभि[2]धा ऽअसी'ति । तस्म्मादश्वमेधयाजी सर्व्वा दिशोऽभिजयति 'भुव[3]नमसी'ति भुवनन्तज्जयति 'य[4]न्तासि धर्त्ते'ति यन्तारमेवैनन्धर्त्तारङ्करोति' 'स त्वं[5]मग्निं वैश्वानर'मित्यग्निमेवैनं वैश्वानरङ्करोति 'स[6]प्प्रथसङ्गच्छे'ति प्प्रजयैवैनम्पशुभिः प्प्रथयति 'स्वा[7]हाकृत' ऽइति वषट्कार

( १ ) शु० य० सं० २२. २ ।

* 'ऽथ ऽऋषभस्य' इति 'ग' 'ज' पुस्तकयोः ।

( २ ) शु० य० सं० २२. ३ । ( ३ ) शु० य० सं० २२. ३ । ( ४ ) शु० य० सं० २२. ३ । ( ५ ) शु० य० सं० २२. ३ । ( ६ ) शु० य० सं० २२. ३ । ( ७ ) शु० य० सं० २२. ३ ।

ऽएवास्यैष 'स्वगा[1] त्वा देवेभ्य' ऽइति देवेभ्य ऽएवै-नथं स्वगा करोति 'प्रजापतय[2]' ऽइति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥ ३ ॥ ईश्वरो वा ऽएषः । आर्त्तिमार्त्तोर्य्यो ब्रह्मणे देवेभ्योऽप्रतिप्रोच्याश्वम्ब-ध्नाति 'ब्रह्मन्नश्वम्भन्त्स्यामि[3] देवेभ्यः प्रजापतये तेन राध्यास'मिति ब्रह्माणमामन्त्रयते ब्रह्मण ऽएवैनम्प्रति-प्रोच्य बध्नाति नार्त्तिमार्च्छति 'तम्बधान[4] देवेभ्यः प्रजापतये तेन राध्नुही'ति ब्रह्मा प्रसौति स्वयैवैनन्देवतया समर्द्धयत्यथ प्रोक्षत्यसावेव बन्धुः ॥ ४ ॥ स प्रोक्षति । 'प्रजापतये[5] त्वा जुष्टम्प्रोक्षामी'ति प्रजापतिर्वै देवानां वीर्य्य-वत्तमो वीर्य्यमेवास्मिन्दधाति तस्मादश्वः पशूनां वीर्य्य-वत्तमः ॥५॥ 'इन्द्राग्निभ्यान्त्वा[6] जुष्टम्प्रोक्षामी'ति । इन्द्राग्नी वै देवानामोजस्वितमा ऽओज ऽएवास्मिन्दधाति तस्मा-दश्वः पशूनामोजस्वितमः ॥ ६ ॥ 'वायवे[7] त्वा जुष्टम्प्रो-क्षामी'ति । वायुर्वै देवानामाशिष्ठो जवमेवास्मिन्दधाति तस्मादश्वः पशूनामाशिष्ठः ॥ ७ ॥ 'विश्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामी'ति । विश्वे वै देवा देवानां यशस्वितमा यश ऽएवास्मिन्दधाति तस्मादश्वः पशूनां यशस्वितमः 'सर्वेभ्यस्त्वा[8] देवेभ्यो जुष्टम्प्रोक्षामी'ति ॥ ८ ॥ तदाहुः । यत्प्राजापत्योऽश्वोऽथ कथाप्यन्याभ्यो

(१) शु० य० सं० २२. ४। (२) शु० य० सं० २२. ४। (३) शु० य० सं० २२. ४। (४) शु० य० सं० २२. ४। (५) शु० य० सं० २२. ५। (६) शु० य० सं० २२. ५। (७) शु० य० सं० २२. ५। (८) शु० य० सं० २२. ५। (९) शु० य० सं० २२. ५।

देवताब्भ्यः प्रोक्षतीति सर्व्वा वै देवता ऽअश्श्वमेधेऽन्न्वायत्ता यदाह सर्व्वेब्भ्यस्त्वा देवेब्भ्यो जुष्ट्टम्प्रोक्षामीति सर्व्वा ऽएवाऽस्मिन्देवता ऽअन्न्वायातयति तस्म्मादश्श्वमेधे सर्व्वा देवता ऽअन्न्वायत्ताः पाप्प्मा वा ऽएतम्भ्रातृव्व्य ऽईप्प्सति योऽश्श्वमेधेन यजते वज्ज्रोऽश्श्वः 'परो[1] मर्त्तः परः श्वे'ति श्श्वानञ्चतुरक्षः हत्त्वाधस्प्पदमश्श्वस्योपप्प्लावयति वज्ज्रेणैवैनमवक्क्रामति नैनम्पाप्प्मा भ्भ्रातृव्व्य ऽआप्प्नोति ॥ ९ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सहस्रमाहुतयः ]

यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशोः स्कन्दति यन्निक्तमनालब्धमुत्सृजन्ति यत्स्तोकीया जुहोति सर्व्वहुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नः हि तद्यद्धुतस्य स्कन्दति सहस्रञ्जुहोति सहस्रसम्मितो वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥ १ ॥ तदाहुः । यन्मिता जुहुयात्परिमितमवरुन्धीतेत्यमिता जुहोत्यपरिमितस्यैवावरुद्ध्या ऽउवाच ह प्रजापति स्तोकीयासु वा ऽअहमश्श्वमेधः सꣳस्थापयामि तेन सꣳस्थितेनैवात ऽऊर्द्ध्वञ्चरामीति ॥ २ ॥ 'अग्नये[2] स्वाहे'ति । अग्नय ऽएवैनञ्जुहोति 'सोमाय[3] स्वाहे'ति सोमायैवैनञ्जुहो'त्यपाम्मोदाय[4]

(१) शु० य० सं० २२. ५ । (२) शु० य० सं० २२. ६ । (३) शु० य० सं० २२. ६ । (४) शु० य० सं० २२. ६ ।

स्वाहे'त्यग्नय ऽएवैनञ्जुहोति 'सवित्रे स्वाहे'ति सवित्र ऽएवैनञ्जुहोति 'वायवे स्वाहे'ति वायव ऽएवैनञ्जुहोति 'विष्णवे स्वाहे'ति विष्णव ऽएवैनञ्जुहोती'न्द्राय स्वाहे'-तीन्द्रायैवैनञ्जुहोति 'बृहस्पतये स्वाहे'ति बृहस्पतय ऽएवै-नञ्जुहोति 'मित्राय स्वाहे'ति मित्रायैवैनञ्जुहोति 'वरुणाय स्वाहे'ति वरुणायैवैनञ्जुहोत्येतावन्तो वै सर्वे देवास्तेभ्य ऽएवैनञ्जुहोति पराचीर्जुहोति पराङिव वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥ ३ ॥ ईश्वरो वा ऽएषः । पराङ् प्रदघोर्ष्यः पराचीराहुतीर्जुहोति पुनरावर्त्ततेऽस्मि-न्नेव लोके प्रतितिष्ठत्येताꣳ ह वाव स यज्ञस्य सꣳस्थिति-मुवाचास्कन्दायास्कन्नꣳ हि तद्यद्धुतस्य स्कन्दति ॥ ४ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यम्प्रोक्षितमनालब्धमुत्सृजन्ति यद्रूपाणि जुहोति सर्व-हुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नꣳ हि तद्यद्धुतस्य स्कन्दति 'हिङ्काराय स्वाहा हिङ्कृताय स्वाहे'त्येतानि वा ऽअश्वस्य रूपाणि तान्येवावरुन्द्धे ॥ ५ ॥ तदाहुः । अनाहुतिर्वै रूपाणि नैता होतव्या ऽइत्यथो खल्वाहुरत्र वा ऽअश्व-मेधः सन्तिष्ठते यद्रूपाणि जुहोति होतव्या ऽएवेति बहिर्द्धा वा ऽएतमायतनात्करोति भ्रातृव्यमस्मै जन-यति यस्यानायतनेऽन्यत्राग्नेराहुतीर्जुहोति ॥ ६ ॥ सावित्र्या

(१) शु० य० सं० २२. ६ । (२) शु० य० सं० २२. ६ । (३) शु० य० सं० २२. ६ । (४) शु० य० सं० २२. ६ । (५) शु० य० सं० २२. ६ । (६) शु० य० सं० २२. ६ ।
(७) शु० य० सं० २२. ६ । (८) शु० य० सं० २२. ७ ।

ऽएवेष्टेः । पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यायतन ऽएवाहुतीर्जुहोति नास्म्मै भ्रातृव्व्यञ्जनयति यज्ञमुखे यज्ञमुखे जुहोति यज्ञस्य सन्तत्या ऽअव्व्यवच्छेदाय ॥ ७ ॥ तदाहुः । यद्यज्ञमुखे यज्ञमुखे जुहुयात्पशुभिव्व्यृद्ध्येत पापीयान्स्यात्सकृदेव होतव्व्या न पशुभिर्व्व्यृद्ध्यते न पापीयान्भवत्यष्टाचत्त्वारिᳬशतञ्जुहोत्यष्टाचत्त्वारिᳬशदक्षरा जगती जागताः पशवो जगत्यैवास्म्मै पशूनवरुन्द्ध ऽएकमतिरिक्तञ्जुहोति तस्म्मादेकः प्प्रजास्वर्द्धुकः ॥ ८ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ सावित्र्य इष्टयः ]

प्रजापतिरश्श्वमेधमसृजत । सोऽस्म्मात्सृष्टः पराङैत्स दिशोऽनुप्प्राविशत्तन्देवाः प्प्रैषमैच्छँस्तमिष्टिभिरनुप्प्रायुञ्जत तमिष्टिभिरन्वैच्छँस्तमिष्टिभिरन्ववविन्दन्न्यदिष्टिभिर्य्यजतेऽश्श्वमेव तन्मेद्ध्यं य्यजमानोऽन्विच्छति ॥ १ ॥ सावित्र्यो भवन्ति । इयं वै सविता यो वा ऽअस्यान्निलयते योऽन्न्यत्रैत्यस्यां वाव तमनुविन्दन्ति न वा ऽइमाङ्कश्चन तिर्य्यङ्नोर्द्ध्वोऽत्येतुमर्हति यत्सावित्र्यो भवन्त्यश्श्वस्यैवानुवित्त्यै ॥ २ ॥ तदाहुः । प्र वा ऽएतदश्श्वो मीयते यत्पराङेति न ह्येनम्प्रत्यावर्त्तयन्तीति यत्सायन्धृतीर्जुहोति क्षेमो वै धृतिः क्षेमो रात्रिः क्षेमेणैवैनन्दाधार तस्म्मात्सायम्मनुष्ष्याश्च पशवश्च क्षेम्म्या भवन्त्यथ यत्प्रातरिष्टि-

भिर्य्यजत ऽइच्छत्त्येवैनन्तत्तस्म्माद्दिवा नष्टैष ऽएति यद्द्व सायन्धृतीर्जुहोति प्प्रातरिष्टिभिर्य्यजते योगक्षेममेव तद्यजमानः कल्प्पयते तस्म्माद्यत्रैतेन यज्ञेन यजन्ते क्क्लृप्प्तः प्प्रजानां य्योगक्षेमो भवति ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ गाथागानम् ]

अप वा ऽएतस्म्मात् । श्री राष्ट्रङ्क्रामति योऽश्वमेधेन यजते यदा वै पुरुषः श्रियङ्गच्छति व्वीणास्म्मै वाद्यते ब्ब्राह्मणौ व्वीणागाथिनौ सँवत्त्सरङ्गायतः श्रियै वा ऽएतद्रूपं य्यद्व्वीणा श्रियमेवास्म्मिँस्तद्धत्तः ॥ १ ॥ तदाहुः । यदुभौ ब्ब्राह्मणौ गायेतामपास्म्मात्क्षत्रङ्क्रामेद्ब्रह्मणो वा ऽएतद्रूपं य्यद्ब्राह्मणो न वै ब्रह्मणि क्षत्रꣳ रमत ऽइति ॥ २ ॥ यदुभौ राजन्न्यौ । अपास्म्माद्ब्रह्मवर्च्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं य्यद्राजन्न्यो न वै क्षत्रे ब्ब्रह्मवर्च्चसꣳ रमत ऽइति ब्ब्राह्मणोऽन्न्यो गायति राजन्न्योऽन्न्यो ब्ब्रह्म वै ब्ब्राह्मणः क्षत्रꣳ राजन्न्यस्तदस्य ब्ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥ तदाहुः । यदुभौ दिवा गायेताम्प्रभ्रꣳशुकास्म्माच्छ्रीः स्याद्ब्रह्मणो वा ऽएतद्रूपं य्यदहर्य्यदा वै राजा कामयतेऽथ ब्ब्राह्मणञ्जिनाति पापीयाँस्तु भवति ॥ ४ ॥ यदुभौ नक्तम् । अपास्म्माद्ब्रह्मवर्च्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं य्यद्रात्रिर्न्न वै क्षत्रे

ब्ब्रह्मवर्च्चसꣳ रमत ऽइति दिवा ब्ब्राह्मणो गायति नक्तꣳ राजन्न्यस्तथो हास्य ब्ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवतीति ॥ ५ ॥ अयजतेत्त्यददादिति ब्ब्राह्मणो गायतीष्टापूर्त्तं वै ब्ब्राह्मणस्येष्टापूर्त्तेनैवैनꣳ स समर्द्धयतीत्त्ययुद्ध्यतेत्त्यमुꣳ सङ्ग्राममजयदिति राजन्न्यो युद्धं वै राजन्न्यस्य व्वीर्य्यं व्वीर्य्येणैवैनꣳ स समर्द्धयति तिस्रोऽन्न्यो गाथा गायति तिस्रोऽन्न्यः षट् सम्पद्यन्ते षड्ढतवः सँवत्सर ऽऋतुष्ष्वेव सँवत्सरे प्प्रतितिष्ठति ताब्भ्याꣳ शतन्ददाति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्त्मन्धत्ते ॥ ६ ॥

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ अश्वकर्णे जपः, धृतिहोमश्च ]

'व्विभूर्म्मात्रा प्प्रभूः पित्रे'ति[1]। इयं वै मातासौ पिताब्भ्यामेवैनम्परिददा'त्त्यश्वोऽसि[2] हयोऽसी'ति शास्त्येवैनन्तत्तस्म्माच्छिष्टाः प्प्रजा जायन्ते'ऽत्त्योऽसि[3] मयोऽसी'त्त्यत्त्येवैनन्नयति तस्म्मादश्वः पशूनत्त्येति तस्म्मादश्वः पशूनाꣳ श्रैष्ठ्यङ्गच्छ'त्त्यर्वासि[4] सप्तिरसि व्वाज्यसी'ति यथायजुरेवैत'द्वृषासि[5] नृमणा ऽअसी'ति मिथुनत्त्वाय 'ययुर्न्नामासि[6] शिशुर्न्नामासी'त्त्येतद्वा ऽअश्वस्य प्प्रियन्नाम-

(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९। (३) शु० य० सं० २२. १९। (४) शु० य० सं० २२. १९। (५) शु० य० सं० २२. १९। (६) शु० य० सं० २२. १९।

धेयम्प्रियेणैवैनन्नाम्नाभिवदति तस्म्मादुप्यामित्रौ सङ्गत्य नाम्म्ना चेदभिवदतोऽन्न्योऽन्न्यः समेव जानाते ॥ १ ॥ 'आदित्यानाम्पत्वान्विही'ति । आदित्यानेवैनङ्गमयति 'देवा ऽआशापाला ऽएतन्देवेभ्योऽश्वम्मेधाय प्प्रोक्षितः रक्षन्ते'ति शतं वै तल्प्या राजपुत्रा ऽआशापालास्तेभ्य ऽएवैनम्परिददाती'ह रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहे'ति सँवत्सरमाहुतीर्ज्जुहोति षोडश नवतीरेता वा ऽअश्वस्य बन्धनन्ताभिरेवैनम्बध्नाति तस्म्मादश्वः प्प्रमुक्तो बन्धनमागच्छति षोडश नवतीरेता वा ऽअश्वस्य बन्धनन्ताभिरेवैनम्बध्नाति तस्म्मादश्वः प्प्रमुक्तो बन्धनन्न जहाति ॥ २ ॥ राष्ट्रं वा ऽअश्वमेधः । राष्ट्र ऽएते व्व्यायच्छन्ते येऽश्वः रक्षन्ति तेषां य ऽउदृचङ्गच्छन्ति राष्ट्रेणैव ते राष्ट्रम्भवन्त्यथ ये नोदृचङ्गच्छन्ति राष्ट्रात्ते व्व्यवच्छिद्यन्ते तस्म्माद्राष्ट्र्यश्वमेधेन यजेत परा वा ऽएष सिच्च्यते योऽबलोऽश्वमेधेन यजते यद्यमित्रा ऽअश्वं विन्देरन्न्यज्ञोऽस्य विच्छिद्येत पापीयान्त्स्याच्छतङ्कवचिनो रक्षन्ति यज्ञस्य सन्तत्या ऽअव्व्यवच्छेदाय न पापीयाऽभवत्यथान्न्यमानीय प्प्रोक्षेयुः सैव तत्र प्प्रायश्चित्तिः ॥ ३ ॥

प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



(१) शु० य० सं० २२. १९ । (२) शु० य० सं० २२. १९ । (३) शु० य० सं० २२. १९ ।

[ औद्ग्रभणहोमः ]

प्रजापतिरकामयत । अश्वमेधेन यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य सप्तधाऽऽत्मनो देवता ऽअपाक्रामन्त्सा दीक्षाभवत्स ऽएतानि वैश्वदेवान्यपश्यत्तान्यजुहोत्तैर्वै स दीक्षामवारुन्द्ध यद्वैश्वदेवानि जुहोति दीक्षामेव तैर्यजमानोऽवरुन्द्धेऽन्वहञ्जुहोत्यन्वहमेव दीक्षामवरुन्द्धे सप्त जुहोति सप्त वै ता देवता ऽअपाक्रामँस्ताभिरेवास्मै दीक्षामवरुन्द्धे ॥ १ ॥ अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । ये दीक्षामतिरेचयन्ति सप्ताहम्प्रचरन्ति सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे त्रेधा विभज्य देवताञ्जुहोति त्र्यावृतो वै देवास्त्र्यावृत ऽइमे लोका ऽऋद्ध्यामेव वीर्यं ऽएषु लोकेषु प्रतितिष्ठति ॥ २ ॥ एकविꣳशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳशस्तद्दैवं क्षत्रꣳ सा श्रीस्तदाधिपत्यन्तद्ब्रध्नस्य विष्टपन्तत्स्वाराज्यमश्नुते ॥ ३ ॥ त्रिꣳशतमौद्ग्रभणानि जुहोति । त्रिꣳशदक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै चत्वार्यौद्ग्रभणानि जुहोति त्रीणि वैश्वदेवानि सप्त सम्पद्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे पूर्णाहुतिमुत्तमाञ्जुहोति प्रत्युत्तब्ध्यै सयुक्त्वाय ॥ ४ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



प्रजापतिरश्वमेधमसृजत । स सृष्टः प्रऽर्चमल्लीनात्प्र साम तं वैश्वदेवान्युदयच्छन्यद्वैश्वदेवानि जुहोत्यश्वमेधस्यैवोद्यत्यै ॥ १ ॥ 'काय स्वाहा । कस्मै स्वाहा कतमस्मै स्वाहे'ति प्राजापत्यम्मुख्यङ्करोति प्रजापतिमुखाभिरेवैनन्देवताभिरुद्यच्छति ॥ २ ॥ 'स्वाहाधिमाधीताय स्वाहा । मनः प्रजापतये स्वाहा चित्तं विज्ञाताये'ति यदेव पूर्वासाम्ब्राह्मणन्तदत्र ॥ ३ ॥ 'अदित्यै स्वाहा । अदित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहे'तीयं वाऽअदितिरनयैवैनमुद्यच्छति ॥ ४ ॥ 'सरस्वत्यै स्वाहा । सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहे'ति वाग्वै सरस्वती वाचैवैनमुद्यच्छति ॥ ५ ॥ 'पूष्णे स्वाहा । पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहे'ति पशवो वै पूषा पशुभिरेवैनमुद्यच्छति ॥ ६ ॥ 'त्वष्ट्रे स्वाहा । त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहे'ति त्वष्टा वै पशूनाम्मिथुनानाᳩं रूपकृद्रूपैरेवैनमुद्यच्छति ॥ ७ ॥ 'विष्णवे स्वाहा । विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहे'ति यज्ञो वै विष्णुर्यज्ञेनैवैनमुद्यच्छति 'विश्वो देवस्य नेतु'रिति पूर्णाहुतिमुत्तमाञ्जुहोतीयं वै पूर्णाहुतिरस्यामेवान्ततः प्रतितिष्ठति ॥ ८ ॥

प्रथमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



(१) शु० य० सं० २२. २०। (२) शु० य० सं० २२. २०। (३) शु० य० सं० २२. २०। (४) शु० य० सं० २२. २०। (५) शु० य० सं० २२. २०। (६) शु० य० सं० २२. २०। (७) शु० य० सं० २२. २०। (८) शु० य० सं० २२. २१।

[ अध्वर्युकर्तृकजपः ]

'ओ३ ब्ब्रह्मन् । ब्राह्मणो ब्ब्रह्मवर्च्चसी जायता'मिति ब्ब्राह्मण ऽएव ब्ब्रह्मवर्च्चसन्दधाति तस्म्मात्पुरा ब्ब्राह्मणो ब्ब्रह्मवर्च्चसी जज्ञे ॥ १ ॥ 'आ२ राष्ट्रे राजन्न्यः । शूर ऽइषव्व्योऽतिव्व्याधी महारथो जायता'मिति राजन्न्य ऽएव शौर्य्यम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यः शूर ऽइषव्व्योऽतिव्व्याधी महारथो जज्ञे ॥ २ ॥ 'दोग्ध्री३ धेनु'रिति । धेन्न्वामेव पयो दधाति तस्म्मात्पुरा धेनुर्द्दोग्ग्ध्री जज्ञे ॥ ३ ॥ 'व्वोढानड्वा'४निति । अनडुह्येव बलन्दधाति तस्म्मात्पुरानड्वान्व्वोढा जज्ञे ॥ ४ ॥ 'आ५शुः सप्प्ति'रिति । अश्श्व ऽएव जवन्दधाति तस्म्मात्पुराश्श्वः सप्त्ती जज्ञे ॥ ५ ॥ 'पु६रन्धिर्य्योषे'ति । योषित्य्येव रूपन्दधाति तस्म्माद्रूपिणी युवतिः प्प्रिया भावुका ॥ ६ ॥ 'जि७ष्ण्णू रथेष्ट्ठा' ऽइति । राजन्न्य ऽएव जैत्रम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यो जिष्ण्णुर्ज्जज्ञे ॥ ७ ॥ 'स८भेयो युवे'ति । एष व्वै सभेयो युवा यः प्प्रथमवयसी तस्म्मात्प्रथमवयसी स्त्रीणाम्प्प्रियो भावुकः ॥ ८ ॥ 'आ९ऽस्य यजमानस्य व्वीरो जायता'मिति । यजमानस्यैव प्प्रजायां व्वीर्य्यन्दधाति तस्म्मात्पुरेजानस्य व्वीरो जज्ञे ॥९॥ [अर्धः प्रपाठकः ॥५४॥] 'नि१०कामे—निकामे नः पर्ज्जन्न्यो व्वर्षत्वि'ति । निकामे—निकामे वै तत्र पर्ज्जन्न्यो

( १ ) शु० य० सं० २२. २२। ( २ ) शु० य० सं० २२. २२। ( ३ ) शु० य० सं० २२. २२। ( ४ ) शु० य० सं० २२. २२। ( ५ ) शु० य० सं० २२. २२। ( ६ ) शु० य० सं० २२. २२। ( ७ ) शु० य० सं० २२. २२। ( ८ ) शु० य० सं० २२. २२। ( ९ ) शु० य० सं० २२. २२। ( १० ) शु० य० सं० २२. २२।

वर्षति यत्रैतेन यज्ञेन यजन्ते 'फलवत्यो न ऽओषधयः पच्यन्ता'मिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैतेन यज्ञेन यजन्ते 'योगक्षेमो नः कल्पता'मिति योगक्षेमो वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति ॥ १० ॥

प्रथमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

[ आज्यसक्तुधानालाजहोमः ]

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स ऽआत्मन्न-श्वमेधमधत्त ते देवाः प्रजापतिमब्रुवन्नेष वै यज्ञो यद-श्वमेधोऽपि नोऽत्रास्तु भाग ऽइति तेभ्य ऽएतानन्न-होमानकल्पयद्यदन्नहोमाज्जुहोति देवानेव तत्प्रीणाति ॥१॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्य-म्प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥ सक्तुभिर्जुहोति । देवानां वा ऽएतद्रूपं यत्सक्तवो देवानेव तत्प्रीणाति ॥ ३ ॥ धानाभिर्जुहोति । अहोरात्राणां वा ऽएतद्रूपं यद्धाना ऽअहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥ लाजैर्जुहोति । नक्षत्राणां वा ऽएतद्रूपं यल्लाजा नक्षत्राण्येव तत्प्रीणाति 'प्राणाय स्वाहापानाय स्वाहे'ति नामग्राहञ्जुहोति नाम-

(१) शु० य० सं० २२. २२। (२) शु० य० सं० २२. २२। (३) शु० य० सं० २२. २३.।

ग्ग्राहमेवैनाँस्तत्प्रीणा'त्येकस्म्मै स्वाहा द्वाभ्याᳯ स्वाहा शताय स्वाहैकशताय स्वाहे'त्यनुपूर्व्वञ्जुहोत्यनुपूर्व्वमेवैनाँस्त-त्प्रीणात्येकोत्तरा जुहोत्येकवृद्द्वै स्वर्ग्गो लोक ऽएकधैवैनᳯ स्वर्ग्गँल्लोकङ्गमयति पराचीर्ज्जुहोति पराङिव वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥५॥ ईश्श्वरो वा ऽएषः । पराङ् प्रदघोर्ष्वः पराचीराहुतीर्ज्जुहोति नैकशतमत्येति यदेक-शतमतीयादायुषा यजमानं व्यर्द्धयेदेकशतञ्जुहोति शता-युर्वै पुरुष ऽआत्मैकशत आयुष्येवात्मन्प्रतितिष्ठति '²व्युष्ट्यै स्वाहा स्वर्ग्गाय स्वाहे'त्युत्तमे ऽआहुती जुहोति रात्रिर्वै व्युष्टिरहः स्वर्ग्गोऽहोरात्रे ऽएव तत्प्रीणाति ॥ ६ ॥ तदाहुः । यदुभे दिवा वा नक्तं वा जुहुयादहोरात्रे मोहये-द्व्युष्ट्यै स्वाहेत्यनुदित ऽआदित्ये जुहोति स्वर्ग्गाय स्वा-हेत्युदितेऽहोरात्रयोरव्यतिमोहाय ॥ ७ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पर्यङ्गपशुनिरूपणम् ]

राजा वा ऽएष यज्ञानां यदश्श्वमेधः । यजमानो वा ऽअश्श्वमेधो यजमानो यज्ञो यदश्श्वे पशून्नियुनक्ति यज्ञ ऽएव तद्यज्ञमारभते ॥ १ ॥ अश्श्वन्तूपरङ्गोमृगमिति । तान्मध्यमे यूप ऽआलभते सेनामुखमेवास्यैतेन सᳯश्श्यति तस्म्माद्राज्ञः सेनामुखम्भीष्ममम्भावुकम् ॥ २ ॥ कृष्णण-ग्ग्रीवमाग्ग्नेयः रराटे पुरस्तात् । पूर्व्वाग्ग्निमेव तत्कुरुते

(१) शु० य० सं० २२. ३४ । (२) शु० य० सं० २२. ३४ ।

तस्माद्राजः पूर्वाग्निर्भावुकः ॥ ३ ॥ सारस्वतीम्मेषीमधस्ताद्धन्वोः । स्त्रीरेव तदनुगाः कुरुते तस्मात्स्त्रियः पुꣳसोऽनुवर्त्मानो भावुकाः ॥ ४ ॥ आश्विनावधोरामौ बाह्वोः । बाह्वोरेव बलन्धत्ते तस्माद्राजा बाहुबली भावुकः ॥ ५ ॥ सौमापौष्णꣳ श्यामन्नाभ्याम् । प्रतिष्ठामेव ताङ्कुरुत ऽइयं वै पूषास्यामेव प्रतितिष्ठति ॥ ६ ॥ सौर्य्ययामौ श्वेतञ्च कृष्णञ्च पार्श्वयोः । कवचे ऽएव ते कुरुते तस्माद्राजा सन्नद्धो वीर्य्यङ्करोति ॥७॥ त्वाष्ट्रौ लोमशसक्क्थौ सक्क्थ्योः । ऊर्वोरेव बलन्धत्ते तस्माद्राजोरुबली भावुकः ॥ ८ ॥ वायव्यꣳ श्वेतम्पुच्छे । उत्सेधमेव तङ्कुरुते तस्मादुत्सेधम्प्रजा भयेऽभिसꣳश्रयन्तीन्द्राय स्वपस्याय वेहतं यज्ञस्य सेन्द्रतायै वैष्णवो वामनो यज्ञो वै विष्णुर्य्यज्ञ ऽएवान्ततः प्रतितिष्ठति ॥ ९ ॥ ते वा ऽएते । पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ १० ॥ पञ्चदश—पञ्चदशो ऽएवेतरेषु । पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानोऽभितः पाप्मानमपहते ॥ ११ ॥ तदाहुः । अपाहैवैतैः पाप्मानꣳ हता ऽइत्यकृत्स्नञ्च त्वै प्रजापतिꣳ संस्करोति न चेदꣳ सर्वमवरुन्द्धे ॥ १२ ॥ सप्तदशैव * पशून्मध्यमे यूप ऽआलभेत । सप्तदशो वै प्रजापतिः

* त्रयोऽश्वतूपरगोमृगाः द्वौ चाग्नेयावेकादशिनौ द्वादश रोहितादयः, एवं सप्तदश पशवो मध्यमे यूपे भवन्ति ।

प्प्रजापतिरश्श्वमेधोऽश्श्वमेधस्यैवाप्प्त्यै षोडश–षोडशेतरेषु षोडशकलं व्वा ऽइदꣳ सर्व्वन्तदिदꣳ सर्व्वमवरुन्द्धे ॥ १३ ॥ ताङ्कथमाप्प्रीणीयादित्त्याहुः । 'समिद्धो ऽअञ्जन्कृदरम्मतीना'मिति बार्हदुक्क्थीभिराप्प्रीणीयाद्बृहदुक्क्थो ह वै व्वामदेव्व्योऽश्श्वो वा सामुद्रिरश्श्वस्याप्प्रीर्द्दर्श ता ऽएतास्ताभिरेवैनमेतदाप्प्रीणीम ऽइति व्वदन्तो न तथा कुर्य्याज्जामदग्ग्नीभिरेवाप्प्रीणीयात्प्रजापतिर्व्वै जमदग्ग्निः सोऽश्श्वमेधः स्वयैवैनन्देवतया समर्द्धयति तस्म्माज्जामदग्ग्नीभिरेवाप्प्रीणीयात् ॥ १४ ॥ तद्धैके । एतेषाम्पर्य्यङ्ग्याणान्नाना याज्यापुरोऽनुवाक्क्याः कुर्व्वन्ति व्विन्दाम ऽएतेषामवित्त्येतरेषान्न कुम्र्म ऽइति न तथा कुर्य्यात्क्षत्रं व्वा ऽअश्श्वो व्विडितरे पशवः प्प्रतिप्प्रतिनीꣳ ह ते प्प्रत्युद्यामिनीङ्क्षत्राय व्विशङ्कुर्व्वन्त्यथो ऽआयुषा यजमानं व्व्यर्द्धयन्ति ये तथा कुर्व्वन्ति तस्म्मात्प्राजापत्य ऽएवाश्श्वो देवदेवत्त्या ऽइतरे क्षत्रायैव तद्विशङ्कृतानुकरामनुवर्त्मानङ्करोत्यथो ऽआयुषैव यजमानꣳ समर्द्धयति ॥ १५ ॥ हिरण्मयोऽश्श्वस्य शासो भवति । लोहमयाः पर्य्यङ्ग्याणामायसा ऽइतरेषाञ्ज्योतिर्व्वै हिरण्यꣳ राष्ट्रमश्श्वमेधो ज्योतिरेव तद्राष्ट्रे दधात्त्यथो हिरण्यज्योतिषैव यजमानः स्वर्ग्गँल्लोकमेत्त्यथो ऽअनूकाशमेव तङ्कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १६ ॥ अथो क्षत्रं व्वा ऽअश्श्वः । क्षत्रस्यैतद्रूपं यद्धिरण्यं क्षत्रमेव तत्क्षत्रेण समर्द्धयति ॥ १७ ॥ अथ

(१) शु० य० सं० २९. १

यल्लोहमयाः पर्य्यङ्ग्याणाम् । यथा वै राज्ञोऽराजानो राजकृतः सूतग्रामण्य ऽएवं वा ऽएतेऽश्वस्य यत्पर्य्यङ्ग्या ऽएवमु वा ऽएतद्धिरण्यस्य यल्लोहᳬं स्वेनैवैनाँस्तद्रूपेण समर्द्धयति ॥ १८ ॥ अथ यदायसा ऽइतरेषाम् । विड्वा ऽइतरे पशवो विश ऽएतद्रूपं यदयो विशमेव तद्विशा समर्द्धयति वैतस ऽइटसून ऽउत्तरतोऽश्वस्यावद्यन्त्यानुष्टुभो वा ऽअश्व ऽआनुष्टुभैषा दिक्स्वायामेवैनन्तद्दिशि दधात्यथ यद्वैतस ऽइटसूनेऽप्सुयोनिर्वा ऽअश्वोऽप्सुजा वैतसः स्वयैवैनं योन्या समर्द्धयति ॥ १९ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ उद्गात्रन्वारम्भः ]

देवा वा ऽअश्वमेधे पवमानम् । स्वर्ग्गँल्लोकन्न प्राजानँस्तमश्वः प्राजानाद्यदश्वमेधेऽश्वेन पवमानाय सर्प्पन्ति स्वर्ग्गस्य लोकस्य प्रज्ञात्यै पुच्छमन्वारभन्ते स्वर्ग्गस्यैव लोकस्य समष्ट्यै न वै मनुष्यः स्वर्ग्गँल्लोकमञ्जसा वेदाश्वो वै स्वर्ग्गँल्लोकमञ्जसा वेद ॥ १ ॥ यदुद्गातोद्गायेत् । यथाक्षेत्रज्ञोऽन्येन पथा नयेत्तादृक्तदथ यदुद्गातारमपरुध्याश्वमुद्गीथाय[1] वृणीते यथा क्षेत्रज्ञोऽञ्जसा नयेदेवमेवैतद्यजमानमश्वः स्वर्ग्गँल्लोकमञ्जसा नयति हिङ्करोति सामैव तद्धिङ्करोत्युद्गीथ ऽएव स वडवा ऽउप-

(१) 'व' इति 'ग' 'ज' पुस्तकयोः ।

रुन्धन्ति सꣳशिञ्जते ऽथोपगातार ऽउपगायन्ति तादृक्त-द्धिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥२॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ ग्राम्यपश्वालम्भः, आरण्यपशूनामुत्सर्गश्च ]

प्रजापतिरकामयत । उभौ लोकावभिजयेयन्देवलोकञ्च मनुष्यलोकञ्चेति स ऽएतान्पशूनपश्यद्ग्राम्याँश्चारण्याँश्च तानालभत तैरिमौ लोकाववारुन्द्ध ग्राम्यैरेव पशुभिरिमँल्लोकमवारुन्द्धारण्यैरमुमयं वै लोको मनुष्यलोकोऽथासौ देवलोको यद्ग्राम्यान्पशूनालभत ऽइममेव तैर्ल्लोकं यजमानोऽवरुन्द्धे यदारण्यानमुन्तैः ॥१॥ स यद्ग्राम्यैः सꣳस्थापयेत् । समद्धानः क्रामेयुः समन्तिकङ्ग्रामयोर्ग्रामान्तौ स्यातान्नऽर्क्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्यस्तस्करा ऽअरण्येष्वाजायेरन्यदारण्यैर्व्यद्धानः क्रामेयुर्विदूरङ्ग्रामयोर्ग्रामान्तौ स्यातामृक्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्यस्तस्करा ऽअरण्येष्वाजायेरन् ॥ २ ॥ तदाहुः । अपशुर्वा ऽएष यदारण्यो नैतस्य होतव्यं यज्जुहुयात्क्षिप्रं यजमानमरण्यम्मृतꣳ हरेयुररण्यभागा ह्यारण्याः पशवो यन्न जुहुयाद्यज्ञवेशसꣳ स्यादिति पर्य्यग्निकृतानेवोत्सृजन्ति तन्नैव हुतन्नाहुतन्न यजमानमरण्यम्मृतꣳ हरन्ति न यज्ञवेशसम्भवति ॥ ३ ॥ ग्राम्यैः सꣳस्थापयति । वि पितापुत्रावनवस्यतः समद्धानः क्रामन्ति समन्तिकङ्ग्राम-

योग्ग्रामान्तौ भवतो नऽऋक्षीकाः पुरुषव्व्याग्घ्राः परिमोषिण ऽआव्व्याधिन्न्यस्तस्क्करा ऽअरण्ण्येष्ष्वाजायन्ते ॥ ४ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ पश्वेकादशिनी ]

प्रजापतिरश्श्वमेधमसृजत । सोऽस्म्मात्सृष्टः पराङैत्स पङ्क्तिर्ब्भूत्त्वा सँव्वत्सरम्प्राविशत्तेऽर्द्धमासा ऽअभवँस्तम्पञ्चदशिभिरनुप्प्रायुङ्क्त तमाप्नोत्तमाप्प्त्वा पञ्चदशिभिरेवारुन्द्धार्द्धमासानां व्वा ऽएषा प्प्रतिमा यत्पञ्चदशिनो यत्पञ्चदशिन ऽआलभतेऽर्द्धमासानेव तैर्य्यजमानोऽवरुन्द्धे ॥ १ ॥ तदाहुः । अनवरुद्धो व्वा ऽएतस्य सँव्वत्सरो भवति योऽन्न्यत्र चातुर्म्मास्येभ्यः सँव्वत्सरन्तनुत ऽइत्त्येष व्वै साक्षात्सँव्वत्सरो यच्चातुर्म्मास्यानि यच्चातुर्म्मास्यान्न्पशूनालभते साक्षादेव तत्सँव्वत्सरमवरुन्द्धे व्वि व्वा ऽएष प्प्रजया पशुभिर्ऋद्ध्यतेऽप स्वर्ग्गँल्लोकाद् राद्ध्नोति योऽन्न्यत्रैकादशिनेभ्यः सँव्वत्सरन्तनुत ऽइत्त्येष व्वै सम्प्रति स्वर्ग्गो लोको यदेकादशिनी प्प्रजा व्वै पशव ऽएकादशिनी यदैकादशिनान्न्पशूनालभते न स्वर्ग्गँल्लोकमपराद्ध्नोति न प्प्रजया पशुभिर्व्व्यृद्ध्यते ॥ २ ॥ प्रजापतिर्व्विराजमसृजत । सास्म्मात्सृष्टा पराच्च्यैत्साश्श्वम्मेद्ध्यम्प्राविशत्तान्दशिभिरनुप्प्रायुङ्क्त तामाप्नोत्तामाप्प्त्वा दशिभिरेवारुन्द्ध यद्दशिन ऽआलभते विराजमेव तैर्य्यजमानोऽवरुन्द्धे शतमालभते शतायुर्व्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ३ ॥

एकादश दशत ऽआलभते। एकादशाक्षरा वै त्रिष्टुबिन्द्रियमु वै व्वीर्य्यन्त्रिष्टुबिन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्या ऽएकादश दशत ऽआलभते दश वै पशोः प्प्राणा ऽआत्मैकादशः प्प्राणैरेव पशून्त्समर्द्धयति वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ४ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ अश्वस्य नियोजनाञ्जनमणिबन्धनादि ]

'युञ्जन्ति ब्ब्रध्नमरुषञ्चरन्त'मिति। असौ वा ऽआदित्यो ब्ब्रध्नोऽरुषोऽमुमेवास्म्मा ऽआदित्यं य्युनक्ति स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १ ॥ तदाहुः। पराङ्वा ऽएतस्म्माद्यज्ञ ऽएति यस्य पशुरुपाकृतोऽन्न्यत्र व्वेदेरेती'त्येतथ्ठ स्तोतरनेन पथा पुनरश्वमावर्त्तयासि न' ऽइति व्वायुर्वै स्तोता तमेवास्म्मा ऽएतत्परस्ताद्दधाति तथा नात्येति ॥२॥ अप वा ऽएतस्म्मात्। तेज ऽइन्द्रियम्पशवः श्रीः क्क्रामन्ति योऽश्वमेधेन यजते ॥ ३ ॥ 'व्वसवस्त्वाञ्जन्तु। गायत्रेण च्छन्दसे'ति महिष्यभ्यनक्ति तेजो वा ऽआज्यन्तेजो गायत्री तेजसी ऽएवास्मिन्न्त्समीची दधाति ॥ ४ ॥ 'रुद्रास्त्वाञ्जन्तु। त्रैष्टुभेन च्छन्दसे'ति व्वावाता तेजो वा ऽआज्य-

(१) शु० य० सं० २३.५। (२) शु० य० सं० २३.७। (३) शु० य० सं० २३.८। (४) शु० य० सं० २३.८।

मिन्द्रियन्त्रिष्टुप्तेजश्चैवास्मिन्निन्द्रियञ्च समीची दधाति ॥ ५ ॥ 'आदित्यास्त्वाञ्जन्तु[1] । जागतेन च्छन्दसे'ति परिवृक्ता तेजो वा ऽआज्यम्पशवो जगती तेजश्चैवास्मिन्पशूँश्च समीची दधाति ॥ ६ ॥ पत्न्योऽभ्यञ्जन्ति * । श्रियै वा ऽएतद्रूपं यत्पत्न्यः श्रियमेवास्मिँस्तद्दधति नास्मात्तेज ऽइन्द्रियम्पशवः श्रीरपक्रामन्ति ॥ ७ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यस्य निक्तस्य लोमानि शीयन्ते यत्काचानावयन्ति लोमान्येवास्य सम्भरन्ति हिरण्मया भवन्ति तस्योक्तम्ब्राह्मणमेकशतमेकशतङ्काचानावयन्ति शतायुर्वै पुरुष ऽआत्मैकशत ऽआयुष्येवात्मन्प्रतितिष्ठति 'भूर्भुवः[2] स्व'रिति प्राजापत्याभिरावयन्ति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयन्ति 'लाजी३ञ्छाची३न्यशो[3] ममा३' ऽइत्यतिरिक्तमन्नमश्वायोपावहरति प्रजामेवान्नादीङ्कुरुत 'ऽएतदन्नमत्त[4] देवा ऽएतदन्नमद्धि प्रजापत' ऽइति प्रजामेवान्नाद्येन समर्द्धयति ॥ ८ ॥ अप वा ऽएतस्मात् । तेजो ब्रह्मवर्चसङ्क्रामति योऽश्वमेधेन यजते होता च ब्रह्मा च ब्रह्मोद्यं वदत ऽआग्नेयो वै होता बार्हस्पत्यो ब्रह्मा ब्रह्म बृहस्पतिस्तेजश्चैवास्मिन्ब्रह्मवर्चसञ्च समीची धत्तो यूपमभितो वदतो यजमानो वै यूपो यजमानमेवैतत्तेजसा

(१) शु० य० सं० २३. ८ ।

* का० श्रौ० सू० २०. ५. १५ ।

(२) शु० य० सं० २३. ८ । (३) शु० य० सं० २३. ८ । (४) शु० य० सं० २३. ८ ।

च ब्ब्रह्मवर्च्चसेन चोभयतः परिधत्तः ॥ ९ ॥ 'कः स्विदेकाकी चरती'ति । असौ वा ऽआदित्य ऽएकाकी चरत्त्येष ब्ब्रह्मवर्च्चसम्ब्रह्मवर्च्चसमेवास्मिँस्तद्धत्तः ॥ १० ॥ 'कऽउ स्विज्जायते पुन'रिति । चन्द्रमा वै जायते पुनरायुरेवास्मिँस्तद्धत्तः ॥ ११ ॥ 'किꣳ स्विद्धिमस्य भेषज'मिति । अग्निर्वै हिमस्य भेषजन्तेज ऽएवास्मिँस्तद्धत्तः ॥ १२ ॥ * 'किम्वावपनम्मह'दिति । अयं वै लोक ऽआवपनम्महदस्मिन्नेव लोके प्प्रतितिष्ठ्ठति ॥ १३ ॥ 'का स्विदासीत्पूर्व्वचित्ति'रिति । द्यौर्वै व्वृष्टिः पूर्व्वचित्तिर्द्दिवमेव व्वृष्टिमवरुन्द्धे ॥ १४ ॥ 'किꣳ स्विदासीद्बृहद्वय' ऽइति । अश्वो वै बृहद्वय ऽआयुरेवावरुन्द्धे ॥ १५ ॥ 'का स्विदासीत्पिलिप्पिले'ति । श्रीर्वै पिलिप्पिला श्रियमेवावरुन्द्धे ॥१६॥ 'का स्विदासीत्पिशङ्गिले'ति अहोरात्रे वै पिशङ्गिले ऽअहोरात्रयोरेव प्रतितिष्ठ्ठति ॥ १७ ॥

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १०८ ॥



( १ ) शु० य० सं० २३. ९ । (२) शु० य० सं० २३. ९ । (३) शु० य० सं० २३. ९ ।
* अत्र शतम् ६५०० ।
( ४ ) शु० य० सं० २३. ९ । ( ५ ) शु० य० सं० २३. ११ । ( ६ ) शु० य० सं० २३. ११ । ( ७ ) शु० य० सं० २३. ११ । ( ८ ) शु० य० सं० २३. ११ ।

[ अश्वस्य प्रोक्षणादि ]

नियुक्तेषु पशुषु । प्प्रोक्षणीरद्ध्वर्युरादत्तेऽश्वम्प्रोक्षिष्यन्नन्न्वारब्धे यजमान ऽआद्ध्वरिकं य्यजुरनुद्रुत्याश्वमेधिकं य्यजुः प्प्रतिपद्यते ॥ १ ॥ 'वायुष्ट्वा पचतैरवत्त्वि'ति । वायुरेवैनम्पच'त्यसितग्रीवश्छागै'रित्यग्निर्वा ऽअसितग्रीवोऽग्निरेवैनञ्छागैः पचति ॥ २ ॥ 'न्यग्ग्रोधश्चमसै'रिति । यत्र वै देवा यज्ञेनायजन्त त ऽएताँश्चमसान्न्योब्जँस्ते न्न्यञ्चोऽरोहँस्तस्म्मान्न्यञ्चो न्न्यग्ग्रोधा रोहन्ति ॥ ३ ॥ 'शल्म्मलिर्व्वृद्ध्ये'ति । शल्म्मलौ व्वृद्धिन्दधाति तस्म्माच्छल्म्मलिर्व्वनस्प्पतीनां व्वर्षिष्ठं व्वर्द्धते ॥४॥ 'एष स्य रात्थ्यो व्वृषे'ति । अश्वेनैव रथꣳ सम्पादयति तस्म्मादश्वो नान्यद्रथाद्वहति ॥ ५ ॥ 'पड्भिश्चतुर्भिरेदग'न्निति । तस्म्मादश्वस्त्रिभिस्तिष्ठँस्तिष्ठत्त्यथ युक्तः सर्वैः पद्भिः सममायुते ॥ ६ ॥ 'ब्रह्माकृष्णणश्च नोऽवत्वि'ति । चन्द्रमा वै ब्ब्रह्माकृष्णणश्चन्द्रमस ऽएवैनम्परिददाति 'नमोऽग्नय' ऽइत्त्यग्नय ऽएव नमस्करोति ॥ ७ ॥ 'सꣳशितो रश्म्मिना रथ' ऽइति । रश्म्मिनैव रथꣳ सम्पादयति तस्म्माद्रथः परिवृतो दर्शनीयतमो भवति ॥ ८ ॥ 'सꣳशितो रश्म्मिना हय' ऽइति । रश्म्मिनैवाश्वꣳ सम्पादयति तस्म्मादश्वो रश्म्मिना प्प्रतिहितो भूयिष्ठꣳ रोचते ॥ ९ ॥ 'सꣳशितो

(१) शु० य० सं० २३. १३ । (२) शु० य० सं० २३. १३ । (३) शु० य० सं० २३. १३ । (४) शु० य० सं० २३. १३ । (५) शु० य० सं० २३. १३ । (६) शु० य० सं० २३. १३ । (७) शु० य० सं० २३ १३ । (८) शु० य० सं० २३. १३ । (९) शु० य० २३. १४ । (१०) शु० य० सं० २३. १४ । (११) शु० य० सं० २३. १४ ।

ऽअप्प्स्वप्प्सुजा' ऽइति । अप्प्सुयोनिर्व्वा ऽअश्श्वः स्वयैवैनं योन्या समर्द्धयति 'ब्ब्रह्मा सोमपुरोगव' ऽइति सोमपुरोगवमेवैनꣳ स्वर्ग्गँल्लोकङ्गमयति ॥१०॥ '[2]स्वयं व्वाजिँस्तन्न्वङ्कल्प्पयस्वे'ति । स्वयꣳ रूपङ्कुरुष्ष्व यादृशमिच्छसीत्येवैनन्तदाह '[3]स्वयं यजस्वे'ति स्वाराज्यमेवास्मिन्दधाति '[4]स्वयञ्जुषस्वे'ति स्वयँल्लोकꣳ रोचयस्व यावन्तमिच्छसीत्येवैनन्तदाह '[5]महिमा तेऽन्न्येन न सन्नश' ऽइत्यश्श्वमेव महिम्म्ना समर्द्धयति ॥११॥ '[6]न व्वा ऽउ ऽएतन्म्रियसे न रिष्ष्यसी'ति । प्प्रश्श्वासयत्येवैनन्त'[7]द्देवाँ२॥ ऽइँदेषि पथिभिः सुगेभि'रिति देवयानानेवैनम्पथो दर्शयति '[8]यत्रासते सुकृतो यत्र ते ययु'रिति सुकृद्भिरेवैनꣳ सलोकङ्करोति '[9]तत्र त्वा देवः सविता दधात्वि'ति सवितैवैनꣳ स्वर्ग्गे लोके दधाति '[10]प्प्रजापतये त्वा जुष्टम्प्प्रोक्षामी'त्युपाꣳश्वथोपगृह्णाति ॥ १२ ॥ '[11]अग्निः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्म्मिन्नग्निः स ते लोको भविष्ष्यति तञ्जेष्ष्यसि पिबैता ऽअप' ऽइति यावानग्नेर्व्विजयो यावाँल्लोको यावदैश्श्वर्य्यन्तावाँस्ते व्विजयस्तावाँल्लोकस्तावदैश्श्वर्य्यम्भविष्ष्यतीत्येवैनन्तदाह ॥ १३ ॥ '[12]व्वायुः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्म्मिन्व्वायुः स ते लोको भविष्ष्यति तञ्जेष्ष्यसि पिबैता

( १ ) शु० य० सं० २३. १४ । ( २ ) शु० य० सं० २३. १५ । ( ३ ) शु० य० सं० २३. १५ । ( ४ ) शु० य० सं० २३. १५ । ( ५ ) शु० य० सं० २३. १५ । ( ६ ) शु० य० सं० २३. १६ । ( ७ ) शु० य० सं० २३. १६ । ( ८ ) शु० य० सं० २३. १६ । ( ९ ) शु० य० सं० २३. १६ । ( १० ) शु० य० सं० २२. ५ । ( ११ ) शु० य० सं० २३. १७ । ( १२ ) शु० य० सं० २३. १७ ।

ऽअप' ऽइति यावान्न्वायोर्व्विजयो यावाँल्लोको यावदैश्वर्य्यं-न्तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्येवैनन्तदाह ॥ १४ ॥ 'सूर्य्यः[1] पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्त्सूर्य्यः स ते लोको भविष्यति तञ्जेष्यसि पिबैता ऽअप' ऽइति यावान्त्सूर्य्यस्य विजयो यावाँल्लोको यावदैश्वर्य्यन्तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्येवैनन्तदाह तर्प्पयित्वाश्वम्पुनः संस्कृत्य प्प्रोक्षणीरितरान्पशून्प्रोक्षति तस्यातः ॥ १५ ॥

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ मृतस्याऽश्वस्य परिक्रमणादि ]

देवा वा ऽउदञ्चः । स्वर्ग्गँल्लोकन्न प्प्राजानँस्तमश्वः प्प्राजानाद्यदश्वेनोदञ्चो यन्ति स्वर्ग्गस्य लोकस्य प्प्रज्ञात्यै वासोऽधिवासः हिरण्यमित्यश्वायोपस्तृणन्ति यथा नान्यस्म्मै पशवे तस्म्मिन्नेनमधि संज्ञपयन्त्यन्न्यैरेवैनन्तत्पशुभिर्व्व्याकुर्वन्ति ॥१॥ घ्नन्ति वा ऽएतत्पशुम् । यदेनः संज्ञपयन्ति 'प्प्राणाय[2] स्वाहापानाय स्वाहा व्व्यानाय स्वाहे'ति संज्ञप्प्यमान ऽआहुतीर्जुहोति प्प्राणानेवास्म्मिन्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टम्भवति ॥२॥ 'अम्बे[3] * ऽअम्बिकेऽम्बालिके । न मा नयति कश्चने'ति पत्नीरुदानयत्त्यह्नुते-

( १ ) शु० य० सं० २३. १७ । ( २ ) शु० य० सं० २३. १८ । ( ३ ) शु० य० सं० २३. १८ ।

* 'आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालिकेऽम्बिके पूर्वे' ( पा० सू० ६. १. ११८ ) इति प्रकृतिभावः ।

वैना ऽएतदथो मेद्ध्या ऽएवैनाः करोति ॥ ६ ॥ 'गणाना-न्त्वा गणपतिः हवामह' ऽइति । पत्न्यः परियन्त्यपह्नुवत ऽएवास्म्मा ऽएतदतो न्न्येवास्म्मै ह्नुवतेऽथो धुवत ऽएवैनन्त्रिः परियन्ति त्रयो वा ऽइमे लोका ऽएभिरेवैनं-ल्लोकैर्द्धुवते त्रिः पुनः परियन्ति षट् सम्पद्यन्ते षड्वा ऽऋतव ऽऋतुभिरेवैनन्धुवते ॥ ४ ॥ अप वा ऽएतेब्भ्यः प्प्राणाः क्क्रामन्ति । ये यज्ञे धुवनन्तन्न्वते नव कृत्वः परि-यन्ति नव वै प्प्राणाः प्प्राणानेवात्मन्दधते नैब्भ्यः प्प्राणा ऽअपक्क्रामन्त्या'हमजानि गब्र्भधमात्त्वमजासि गब्र्भध'मिति प्प्रजा वै पशवो गब्र्भः प्प्रजामेव पशूनात्मन्धत्ते 'तौ ऽउभौ चतुरः पदः सम्प्रसारयावे'ति मिथुनस्यावरुद्ध्यै 'स्वर्ग्गे लोके प्प्रोर्ण्णुवाथा'मित्त्येष वै स्वर्ग्गो लोको यत्र पशुः संज्ञपयन्ति तस्म्मादेवमाह 'व्वृषा व्वाजी रेतोधा रेतो दधात्त्वि'ति मिथुनस्यैवावरुद्ध्यै ॥ ५ ॥

द्वितीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



[ संवादः ]

अप वा ऽएतस्म्मात् । श्री राष्ट्रङ्क्रामति योऽश्श्वमेधेन यजते ॥ १ ॥ 'ऊर्द्ध्वामेनामुच्छ्रापये'ति । श्श्रीर्वै राष्ट्रमश्श्व-मेधः श्श्रियमेवास्म्मै राष्ट्रमूर्द्ध्वमुच्छ्रयति ॥ २ ॥ 'गिरौ

(१) शु० य० सं० २३. १९। (२) शु० य० सं० २३. १९। (३) शु० य० सं० २३. २०। (४) शु० य० सं० २३. २०। (५) शु० य० सं० २३. २०। (६) शु० य० सं० २३. २६। (७) शु० य० सं० २३. २६।

भारꣳ हरन्निवे'ति । श्रीर्वै राष्ट्रस्य भारः श्रियमेवास्मै राष्ट्रꣳ सन्नह्यत्यथो श्रियमेवास्मिन्राष्ट्रमधिनिदधाति ॥ ३ ॥ '[1]अथास्यै मद्ध्यमेधता'मिति । श्रीर्वै राष्ट्रस्य मद्ध्यꣳ श्रियमेव राष्ट्रे मद्ध्यतोऽन्नाद्यन्दधाति ॥ ४ ॥ 'शीते [2]वाते पुनन्निवे'ति । क्षेमो वै राष्ट्रस्य शीतं क्षेममेवास्मै करोति ॥ ५ ॥ '[3]यकासकौ शकुन्तिके'ति । विड्वै शकुन्तिका'[4]हलगिति वञ्चती'ति विशो वै राष्ट्राय वञ्चन्त्या'[5]हन्ति गभे पसो निगल्गलीति धारके'ति विड्वै गभो राष्ट्रम्पसो† राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ६ ॥ '[6]माता च ते पिता च त' ऽइति । इयं वै मातासौ पिताभ्यामेवैनꣳ स्वर्गँल्लोकङ्गमयत्य'ग्रं [7]वृक्षस्य रोहत' ऽइति श्रीर्वै राष्ट्रस्याग्रꣳ श्रियमेवैनꣳ राष्ट्रस्याग्रङ्गमयति '[8]प्रतिलामीति ते पिता गभे मुष्टिमतꣳसय'दिति विड्वै गभो राष्ट्रम्मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ७ ॥ '[9]यद्धरिणो यवमत्ती'ति विड्वै यवो राष्ट्रꣳ हरिणो विशमेव राष्ट्रायाद्याङ्करोति तस्माद्राष्ट्री विशमत्ति 'न [10]पुष्टम्पशु मन्यत' ऽइति तस्माद्राजा पशून्न पुष्यति '[11]शूद्रा यदर्य्यजारा *

---

(१) शु० य० सं० २३. २६ । (२) शु० य० सं० २३. २६ । (३) शु० य० सं० २३. २२ । (४) शु० य० सं० २३. २२ । (५) शु० य० सं० २३. २२ ।

† 'पस इति पसतेः स्पृशतिकर्मणः' ( निरु० ५. १६ ) इति यास्कः ।

(६) शु० य० सं० २३. २४ । (७) शु० य० सं० २३. २४ । (८) शु० य० सं० २३. २४ । (९) शु० य० सं० २३. ३० ।

(१०) शु० य० सं० २३. ३० । (११) शु० य० सं० २३. ३० ।

* 'अर्यः स्वामिवैश्ययोः' ( पा० ३. १. १०३ ) इति निपातनादर्यो वैश्यो जार उपपतिर्यस्याः सा अर्यजारा ।

न पोषाय धनायती'ति तस्म्माद्वैशीपुत्रन्नाभिषिञ्चति ॥ ८ ॥ अप वा ऽएतेब्भ्यः प्प्राणाः क्क्रामन्ति । ये यज्ञेऽपूतां व्वाचं व्वदन्ति 'दधिक्क्राव्ण्णो ऽअकारिष'मिति सुरभिमतीमृचमन्ततोऽन्न्वाहुर्व्वाचमेव पुनते नैब्भ्यः प्प्राणा ऽअपक्क्रामन्ति ॥ ९ ॥

द्वितीयाध्याये नवमं ब्राह्मणम् ॥ ९ ॥



[ अश्वशरीरे सूचीभिर्वितोदः ]

यदसिपथान्न्कल्प्पयन्ति । सेतुमेव तः सङ्क्रमणं यजमानः कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥१॥ सूचीभिः कल्प्पयन्ति । व्विशो वै सूच्च्यो राष्ट्रमश्श्वमेधो व्विशश्चैवास्मिन्न्राष्ट्रञ्च समीची दधति हिरण्मय्यो भवन्ति तस्योक्तम्ब्राह्मणम् ॥ २ ॥ त्रय्यः सूच्च्यो भवन्ति । लोहमय्यो रजता हरिण्ण्यो दिशो वै लोहमय्योऽवान्तरदिशो रजता ऽऊर्द्ध्वा हरिण्ण्यस्ताभिरेवैनङ्कल्प्पयन्ति तिरश्चीभिश्चोर्द्ध्वाभिश्च बहुरूपा भवन्ति तस्म्माद्बहुरूपा दिशो नानारूपा भवन्ति तस्म्मान्नानारूपा दिशः ॥ ३ ॥

द्वितीयाध्याये दशमं ब्राह्मणम् ॥ १० ॥



( ३ ) शु० य० सं० २३. ३२ ।
( ४ ) 'ग' 'ज' पुस्तकयोः ''हिरण्यमय्यो'' इति पाठः

[ परिपशव्याहुती ]

प्रजापतिरकामयत । महान्भूयान्त्स्यामिति स ऽएतावश्श्वमेधे महिमानौ ग्ग्रहावपश्श्यत्तावजुहोत्ततो वै स महान्भूयानभवत्स यः कामयेत महान्भूयान्त्स्यामिति स ऽएतावश्श्वमेधे महिमानौ ग्ग्रहौ जुहुयान्महान्हैव भूयान्भवति ॥ १ ॥ वपामभितो जुहोति । यजमानो वा ऽअश्श्वमेधो राजा महिमा राज्येनैवैनमुभयतः परिगृह्णाति पुरस्तात्स्वाहाकृतयो वा ऽअन्न्ये देवा ऽउपरिष्टात्स्वाहाकृतयोऽन्न्ये तानेवैतत्प्रीणाति 'स्वाहा देवेब्भ्यो देवेब्भ्यः स्वाहे'ति राज्ञा वपाम्परियजति ये चैवास्मिँल्लोके देवा य ऽउ चामुष्मिँस्तानेवैतत्प्रीणाति त ऽएनमुभये देवाः प्प्रीताः स्वर्ग्गँल्लोकमभिवहन्ति ॥ ३ ॥

द्वितीयाध्याये एकादशं ब्राह्मणम् ॥ ११ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अश्वस्यावदानम् ]

प्रजापतेरक्ष्यश्श्वयत् । तत्परापतत्ततोऽश्श्वः समभवद्यदश्श्वयत्तदश्श्वस्याश्श्वत्त्वन्तद्देवा ऽअश्श्वमेधेनैव प्प्रत्यदधुरेष ह वै प्प्रजापतिः सर्वङ्करोति योऽश्श्वमेधेन यजते सर्व ऽएव भवति सर्वस्य वा ऽएषा प्प्रायश्चित्तिः सर्वस्य भेषजः सर्वं वा ऽएतेन पाप्प्मानन्देवा ऽअतरन्नपि वा ऽएतेन ब्ब्रह्महत्यामतरँस्तरति सर्वम्पाप्प्मानन्तरति ब्ब्रह्महत्यां

(१) शु० य० सं० ६. ११ ।

ऽयोऽश्वमेधेन यजते ॥ १ ॥ उत्तरं वै तत्प्रजापतेरक्ष्य-श्वयत् । तस्मादुत्तरतोऽश्वस्यावद्यन्ति दक्षिणतोऽन्येषाम्पशूनाम् ॥ २ ॥ वैतसः कटो भवति । अप्सुयोनिर्वा ऽअश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ ३ ॥ चतुष्टोम स्तोमो भवति । सरड्वा ऽअश्वस्य सक्थ्याबृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्प्रत्यदधुर्यच्च-तुष्टोम स्तोमो भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽति-रात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्व-मश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ वपाप्रचारः ]

परमेण वा ऽएष स्तोमेन जित्वा । चतुष्टोमेन कृते-नायानामुत्तरेऽहन्नेकविꣳशे प्प्रतिष्ठायाम्प्रतितिष्ठत्येकविꣳ-शात्प्रतिष्ठाया ऽउत्तरमहर्ऋतूनश्वारोहत्यृतवो वै पृष्ठा-न्यृतवः सँवत्सर ऽऋतुष्वेव सँवत्सरे प्प्रतितिष्ठति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दोऽन्येऽन्ये वा ऽअत्र पशव ऽआलभ्यन्त ऽउतेव ग्राम्म्या ऽउतेवारण्ण्या यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वायान्न्ये पशव ऽआलभ्यन्तेऽन्न्येऽन्न्ये हि स्तोमाः क्रियन्ते ॥ २ ॥ तदाहुः । नैते सर्वे पशवो यदजावयश्चारण्ण्याश्चैते वै सर्वे पशवो यद्गव्व्या ऽइति गव्व्यानुत्तमेऽहन्नालभत

(१) "गव्व्या ऽउत्तमे०" इति 'ग' 'ज' पुस्तकयोः पाठः ।

ऽएते वै सर्वे पशवो यद्गव्याः सर्वानेव पशूनालभते वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ३ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ यूपैकविंशतिः ]

यत्तिस्रोऽनुष्टुभो भवन्ति । तस्मादश्वस्त्रिभिस्तिष्ठँस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मादश्वः सर्वैः पद्भिः प्रतिदधत्पलायते परमं वा ऽएतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनाम्परमश्चतुष्टोम स्तोमानाम्परमेणैवैनम्परमताङ्गमयति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्न्यदन्न्यच्छन्दोऽन्न्येऽन्न्ये हि स्तोमाः क्रियन्ते यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वाय ॥ १ ॥ एकविᳪशम्मद्ध्यममहर्भवति । असौ वा ऽआदित्य ऽएकविᳪशः सोऽश्वमेधः स्वेनैवैनᳪ स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति ॥ ३ ॥ वामदेव्व्यम्मैत्रावरुणसाम भवति । प्रजापतिर्वै वामदेव्व्यम्प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥४॥ पार्त्थुरश्मम्ब्रह्मसाम भवति । रश्मिना वा ऽअश्वो यत ऽईश्वरो वा ऽअश्वोऽयतोऽधृतोऽप्रतिष्ठितः पराम्परावतङ्गन्तोर्यत्पार्त्थुरश्मम्ब्रह्मसाम भवत्त्यश्वस्यैव धृत्यै ॥ ५ ॥ सङ्कृत्यच्छावाकसाम भवति । उत्सन्नयज्ञ ऽइव वा ऽएष यदश्वमेधः किं वा ह्येतस्य क्रियते किं वा न यत्स-

ङ्क्त्यच्छावाकसाम भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽतिरात्र ऽउत्तममहर्ब्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥ एकविꣳशोऽग्निर्ब्भवति । एकविꣳश स्तोम ऽएकविꣳशतिर्य्यूपा यथा वा ऽऋषभा वा व्वृषाणो वा सꣳस्फुरेरन्नेवमेते स्तोमाः समृच्छन्ते यदेकविꣳशास्तान्न्यत्समर्प्पयेदार्त्तिमार्च्छेद्यजमानो हन्न्येतास्य यज्ञः ॥ ७ ॥ द्वादश ऽएवाग्निः स्यात् । एकादश यूपा यद्द्वादशोऽग्निर्ब्भवति द्वादश मासाः सँव्वत्सरः सँव्वत्सरमेव यज्ञमाप्नोति यदेकादश यूपा विराड्वा ऽएषा सम्मीयते यदेकादशिनी तस्यै य ऽएकादश स्तन ऽएवास्यै स दुह ऽएवैनान्तेन ॥ ८ ॥ तदाहुः । यद्द्वादशोऽग्निः स्यादेकादश यूपा यथा स्थूरिणा यायात्तादृक्तदित्येकविꣳश ऽएवाग्निर्ब्भवत्त्येकविꣳश स्तोम ऽएकविꣳशतिर्य्यूपास्तद्यथा प्प्रष्टिभिर्य्यायात्तादृक्तत् ॥ ९ ॥ शिरो वा ऽएतद्यज्ञस्य यदेकविꣳशः । यो वा ऽअश्वमेधे त्रीणि शीर्षाणि वेद शिरो ह राज्ञाम्भवत्येकविꣳशोऽग्निर्ब्भवत्त्येक विꣳश स्तोम ऽएकविꣳशतिर्य्यूपा ऽएतानि वा ऽअश्वमेधे त्रीणि शीर्षाणि तानि य ऽएवं वेद शिरो ह राज्ञाम्भवति यो वा ऽअश्वमेधे तिस्रः ककुदो वेद ककुद्ध राज्ञाम्भवत्त्यकविꣳशोऽग्निर्ब्भवत्त्येकविꣳश स्तोम ऽएकविꣳशतिर्य्यूपा ऽएता वा ऽअश्वमेधे तिस्रः ककुदस्ता य ऽएवं वेद ककुद्ध राज्ञाम्भवति ॥ १० ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अश्वस्य लोहितश्रपणादि ]

सर्व्वाभ्यो वै देवताभ्योऽश्व ऽआलभ्यते । यत्प्राजापत्यङ्कुर्य्याद्या देवता ऽअपिभागास्ता भागधेयेन व्यर्द्धये'च्छोदन्दद्भिरवकान्दन्तमूलै'रित्याज्यमवदाना कृत्वा प्रत्याख्यायन्देवताभ्य ऽआहुतीर्ज्जुहोति या ऽएव देवता ऽअपिभागास्ता भागधेयेन समर्द्धयत्यरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिञ्जुहोति द्यावापृथिव्योर्वै सर्व्वा देवताः प्रतिष्ठितास्ता ऽएवैतत्प्रीणाति देवासुराः संयत्ता ऽआसन् ॥ १ ॥ तेऽब्रुवन् । अग्नयः स्विष्टकृतोऽश्वस्य वयमुद्धारमुद्धरामहै तेनासुरानभिभविष्याम ऽइति ते लोहितमुदहरन्त भ्रातृव्याभिभूत्यै यत्स्विष्टकृद्भ्यो लोहितञ्जुहोति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ २ ॥ गोमृगकण्ठेन प्रथमामाहुतिञ्जुहोति । पशवो वै गोमृगा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्द्दधाति तस्माद्यत्रैषाश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ३ ॥ अश्वशफेन द्वितीयामाहुतिञ्जुहोति । पशवो वा ऽएकशफा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्द्दधाति तस्माद्यत्रैषाश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ४ ॥ अयस्मयेन चरुणा तृतीयामाहुतिञ्जुहोति । आयो[२]स्या वै प्रजा रुद्रः स्विष्टकृत्प्रजा ऽएव रुद्रादन्तर्द्दधाति तस्माद्य-

( १ ) शु० य० सं० २५. १ ।

( २ ) "आयस्यो" इति 'ग' 'ज' पुस्तकयोः पाठः ।

त्रैषाश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः प्रजा ऽअभिमन्यते ॥ ५ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—०—

[ अश्वमेधेनापमृत्युनिरासः ]

सर्वेषु वै लोकेषु । मृत्यवोऽन्वायत्तास्तेभ्यो यदाहुतीर्न्न जुहुयाल्लोके लोक ऽएनम्मृत्युर्विन्देद्यन्मृत्युभ्य ऽआहुतीर्जुहोति लोके लोक ऽएव मृत्युमपजयति ॥ १ ॥ तदाहुः । यदमुष्मै स्वाहामुष्मै स्वाहेति जुहुत्सञ्चक्षीत बहुम्मृत्युममित्रङ्कुर्वीत मृत्यव ऽआत्मानमपिदध्यादिति 'मृत्यवे[1] स्वाहे'त्येकस्मा ऽएवैकामाहुतिञ्जुहोत्येको ह वा ऽअमुष्मिँल्लोके मृत्युरशनायैव तमेवामुष्मिँल्लोकेऽपजयति ॥२॥ [ अर्धः प्रपाठकः कण्डिकाः ५९ ] 'ब्रह्महत्यायै[2] स्वाहे'ति द्वितीयामाहुतिञ्जुहोति । अमृत्युर्ह वा ऽअन्यो ब्रह्महत्यायै मृत्युरेष ह वै साक्षान्मृत्युर्यद्ब्रह्महत्या साक्षादेव मृत्युमपजयति ॥ ३ ॥ एताछं ह वै मुण्डिभ ऽऔदन्यः । ब्रह्महत्यायै प्रायश्चित्तिं विदाञ्चकार यद्ब्रह्महत्याया ऽआहुतिञ्जुहोति मृत्युमेवाहुत्या तर्प्पयित्वा परिपाणङ्कृत्वा ब्रह्मघ्ने भेषजङ्करोति तस्माद्यस्यैषाश्वमेध ऽआहुतिर्हूयतेऽपि योऽस्यापरीषु प्रजायाम्ब्राह्मणः हन्ति तस्मै भेषजङ्करोति ॥ ४ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—०—

( १ ) शु० य० सं० ३९.१३ । ( २ ) शु० य० सं० ३९.१३ ।

[ अश्वस्तोमीयहोमः ]

अश्श्वस्य वा ऽआलब्धस्य । मेध ऽउदक्क्रामत्तदश्श्वस्तोमीयमभवद्यदश्श्वस्तोमीयञ्जुहोत्यश्श्वमेव मेधसा समर्द्धयति ॥ १ ॥ आज्ज्येन जुहोति । मेधो वा ऽआज्ज्यम्मेधोऽश्श्वस्तोमीयम्मेधसैवास्मिँस्तन्न्मेधो दधात्याज्ज्येन जुहोत्त्येतद्वै देवानाम्प्रियन्धाम यदाज्ज्यम्प्रियेणैवैनान्धाम्म्ना समर्द्धयति ॥ २ ॥ अश्श्वस्तोमीयꣳ हुत्त्वा द्विपदा जुहोति । अश्श्वो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा द्विपाद्वै पुरुषो द्विप्प्रतिष्ठस्तदेनम्प्रतिष्ठया समर्द्धयति ॥ ३ ॥ तदाहुः । अश्श्वस्तोमीयम्पूर्वꣳ होतव्व्यां३ द्विपदा३ ऽइति पशवो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा यदश्श्वस्तोमीयꣳ हुत्त्वा द्विपदा जुहोति तस्म्मात्पुरुष ऽउपरिष्टात्पशूनधितिष्ठति ॥ ४ ॥ षोडशाश्श्वस्तोमीया जुहोति । षोडशकला वै पशवः सा पशूनाम्मात्त्रा पशूनेव मात्त्रया समर्द्धयति यत्कनीयसीर्व्वा भूयसीर्व्वा जुहुयात्पशून्मात्त्रया व्व्यर्द्धयेत्षोडश जुहोति षोडशकला वै पशवः सा पशूनाम्मात्त्रा पशूनेव मात्त्रया समर्द्धयति नान्न्यामुत्तमामाहुतिञ्जुहोति यदन्न्यामुत्तमामाहुतिञ्जुहुयात्प्रतिष्ठायै च्च्यवेत द्विपदा ऽउत्तमा जुहोति प्प्रतिष्ठा वै द्विपदाः प्प्रत्त्येव तिष्ठति '(१)जुम्बकाय स्वाहे'त्त्यवभृथ ऽउत्तमामाहुतिञ्जुहोति व्वरुणो वै जुम्बकः साक्षादेव व्वरुणमवयजते शुक्क्लस्य खलतेर्व्विक्क्लिधस्य पिङ्गाक्षस्य मूर्द्धनि जुहोत्त्येतद्वै व्वरुणस्य रूपꣳ

( १ ) शु० य० सं० २५. ९।

रूपेणैव व्वरुणमवयजते ॥ ५ ॥ द्वादश ब्ब्रह्मौदनानुत्थाय निर्व्वपति । द्वादशभिर्व्वैष्टिभिर्य्यजते तदाहुर्य्यज्ञस्य वा ऽएतद्रूपं य्यदिष्टयो यदिष्टिभिर्य्यजेतोपनामुक ऽएनं य्यज्ञः स्यात्पापीयाँस्तु स्याद्यातयामानि वा ऽएतदीजानस्य च्छन्दाᳬसि भवन्ति तानि किमेतावदाशु प्प्रयुञ्जीत सर्व्वा वै सᳬस्थिते यज्ञे व्वागाप्यते सात्राप्ता यातयाम्म्नी भवति क्क्रूरीकृतेव हि भवत्यरुष्कृता वाग्वै यज्ञस्तस्मान्न प्प्रयुञ्जीतेति ॥ ६ ॥ द्वादशैव ब्ब्रह्मौदनानुत्थाय निर्व्वपेत् । प्रजापतिर्व्वा ऽओदनः प्प्रजापतिः सँव्वत्सरः प्प्रजापतिर्य्यज्ञः सँव्वत्सरमेव यज्ञमाप्नोत्युपनामुक ऽएनं य्यज्ञो भवति न पापीयान्भवति ॥ ७ ॥

तृतीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

—— ० ——

[ अश्वमेधमहिमा ]

एष वै प्प्रभूर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्प्रभूतम्भवति ॥ १ ॥ एष वै विभूर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्विभूतम्भवति ॥ २ ॥ एष वै व्व्यष्टिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्व्यष्टम्भवति ॥ ३ ॥ एष वै व्विधृतिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्विधृतम्भवति ॥ ४ ॥ एष वै व्व्यावृत्तिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्व्यावृत्तम्भवति ॥ ५ ॥ एष वा ऽऊर्ज्जस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेवोर्ज्जस्वद्भवति ॥ ६ ॥ एष वै

पयस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव पयस्वद्भवति ॥ ७ ॥ एष वै ब्ब्रह्मवर्च्चसी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ ब्ब्राह्मणो ब्ब्रह्मवर्च्चसी जायते ॥ ८ ॥ एष वा ऽअतिव्व्याधी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ राजन्न्योऽतिव्व्याधी जायते ॥ ९ ॥ एष वै दीर्ग्घो नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ दीर्ग्घारण्ण्यञ्जायते ॥ १० ॥ एष वै क्क्लृप्तिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव क्क्लृप्तम्भवति ॥ ११ ॥ एष वै प्प्रतिष्ट्ठा नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्प्रतिष्ट्ठितम्भवति ॥ १२ ॥

तृतीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

—— ० ——

[ अश्वमेधप्रायश्चित्तम् ]

अथातः प्प्रायश्चित्तीनाम् । यद्यश्श्वो व्वडवाᳬ स्कन्देद्वायव्व्यम्पयोऽनुनिर्व्वपेद्वायुर्व्वै रेतसां विकर्त्ता प्प्राणो वै व्वायुः प्प्राणो हि रेतसां विकर्त्ता रेतसैवास्मिँस्तद्रेतो दधाति ॥ १ ॥ अथ यदि स्रामो विन्देत् । पौष्ण्णञ्चरुमनुन्निर्व्वपेत्पूषा वै पशूनामीष्ट्टे स यस्यैव पशवो यः पशूनामीष्ट्टे तमेवैतत्प्रीणात्यगदो हैव भवति ॥ २ ॥ अथ यद्यक्षतामयो विन्देत् । वैश्श्वानरन्द्वादशकपालम्भूमिकपालम्पुरोडाशमनुनिर्व्वपेदियं वै वैश्श्वानर ऽइमामेवैतत्प्रीणात्यगदो हैव भवति ॥ ३ ॥ अथ यद्यक्ष्यामयो विन्देत् । सौर्र्यञ्चरुमनुनिर्व्वपेत्सूर्र्यो वै प्प्रजानाञ्चक्षुर्र्यदा ह्येवैष ऽउ-

देत्त्यथेदꣳ सर्व्वञ्चरति चक्षुषैवास्मिँस्तच्चक्षुर्द्दधाति स यच्च-रुर्ब्भवति चक्षुषा ह्ययमात्त्मा चरति ॥ ४ ॥ अथ यद्युदके म्म्रियेत । व्वारुणं य्यवमयञ्चरुमनुनिर्व्वपेद्वरुणो वा ऽएत-ङ्गृह्णाति यो ऽप्प्सु म्म्रियते सा यैवैनन्देवता गृह्णाति तामे-वैतत्प्रीणाति सास्म्मै प्प्रीताऽयमालम्भायानुमन्न्यते तया-नुमतमालभते स यद्यवमयो भवति व्वरुण्ण्या हि यवाः ॥ ५ ॥ अथ यदि नश्श्येत् । त्रिहविषमिष्टिमनुनिर्व्वपेद्-द्यावापृथिव्व्यमेककपालम्पुरोडाशं व्वायव्व्यम्पयः सौर्य्यञ्चरुं य्यद्वै किञ्च नश्श्यत्त्यन्तरैव तद्द्यावापृथिवी नश्श्यति तद्वायुरुपवात्त्यादित्त्योऽभितपति नैताब्भ्यो देवताब्भ्य ऽऋते किञ्चन नश्श्यति सैषा पृथगेव नष्टवेदनी स यद्यस्याप्य-न्यन्नश्श्येदेतयैव यजेतानु हैवैनद्विन्दत्त्यथ यद्यमित्रा ऽअश्श्वं व्विन्देरन्न्यदि वा म्म्रियेत यदि वाप्प्स्वन्न्यमानीय प्प्रोक्षेयुः सैव तत्र प्प्रायश्चित्तिः ॥ ६ ॥

तृतीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

—o—

[ अश्वमेधारम्भकालादि ]

प्रजापतिरकामयत । सर्व्वान्न्कामानाप्प्नुयाꣳ सर्व्वा व्व्यष्टीर्व्व्यश्श्नुवीयेति स ऽएतमश्श्वमेधन्त्रिरात्रं य्यज्ञ-क्क्रतुमपश्श्यत्तमाहरत्तेनायजत तेनेष्ट्वा सर्व्वान्न्कामानाप्प्नो-त्सर्व्वा व्व्यष्टीर्व्व्याश्श्नुत सर्व्वाꣳह वै कामानाप्प्नोति सर्व्वा व्व्यष्टीर्व्व्यश्श्नुते योऽश्श्वमेधेन यजते ॥ १ ॥ तदाहुः ।

कस्मिन्नृतावभ्यारम्भ ऽइति ग्ग्रीष्मेऽभ्यारभेतेत्त्यु हैक ऽआहुर्ग्ग्रीष्मो वै क्षत्रियस्यर्त्तुः क्षत्रिययज्ञ ऽउ वा ऽएष यदश्वमेध ऽइति ॥ २ ॥ तद्वै वसन्त ऽएवाभ्यारभेत । वसन्तो वै ब्ब्राह्मणस्यर्त्तुर्य्य ऽउ वै कश्च यजते ब्ब्राह्मणी-भूयेवैव यजते तस्माद्वसन्त ऽएवाभ्यारभेत ॥ ३ ॥ सा यासौ फाल्ग्गुनी पौर्ण्णमासी भवति । तस्यै पुरस्तात्षडहे वा सप्ताहे वऽर्त्त्विज ऽउपसमायन्त्यद्ध्वर्य्युश्च होता च ब्ब्रह्मा चोद्गाता चैतान्न्वा ऽअन्न्वन्न्य ऽऋत्त्विजः ॥ ४ ॥ तेभ्योऽद्ध्वर्य्युश्चातुष्प्राश्यम्ब्रह्मौदनन्निर्व्वपति । तस्योक्तम्ब्रा-ह्मणश्चतुरः पात्रांश्चतुरोऽञ्जलीँश्चतुरः प्प्रसृतान्द्वादशविध-न्द्वादश मासाः सँवत्त्सरः सर्व्वᳬ सँवत्त्सरः सर्व्वमश्वमेधः सर्व्वस्याप्प्त्यै सर्व्वस्यावरुद्ध्यै ॥ ५ ॥ तमेते चत्त्वार ऽऋत्त्विजः प्प्राश्नन्ति । तेषामुक्तम्ब्राह्मणन्तेभ्यश्चत्त्वारि सहस्राणि ददाति सर्व्वं वै सहस्रᳬ सर्व्वमश्वमेधः सर्व्वस्याप्प्त्यै सर्व्वस्यावरुद्ध्यै चत्त्वारि च सुवर्ण्णानि शतमानानि हि-रण्ण्यानि तस्यो ऽएवोक्तम् ॥ ६ ॥ अथास्स्मा ऽअद्ध्वर्य्यु-र्न्निष्क्कम्प्रतिमुञ्चन्न्वाचयति * । 'तेजोऽसि शुक्क्रममृत'-मिति तेजो वै शुक्क्रममृतᳬ हिरण्ण्यन्तेज ऽएवास्स्मि-ञ्छुक्क्रममृतन्दधा'त्यायुष्प्पा ऽआयुर्म्मे पाही'त्यायुरेवा-स्स्मिन्दधात्यथैनमाह व्वाचं य्यच्छेति व्वाग्वै यज्ञो यज्ञस्यै-

* 'निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति' ( का० श्रौ० सू० २०, १. ६ ) । चतुःसुवर्ण-निर्मित आभरणविशेषो निष्कः ।

( १ ) शु० य० सं० २२. १ । ( २ ) शु० य० सं० २२. १ ।

वाऽभ्यारम्भाय ॥७॥ चतस्रो जाया ऽउपक्लृप्ता भवन्ति। महिषी[1] वावाता परिवृक्ता पालागली सर्वा निष्किण्यो[2]ऽलङ्कृता मिथुनस्यैव सर्वत्वाय ताभिः सहाग्न्यगारम्प्रपद्यते पूर्वया द्वारा यजमानो दक्षिणया पत्न्यः ॥ ८ ॥ सायमाहुत्याᳬं हुतायाम्। जघनेन गार्हपत्यमुदङ्वावातया सह संविशति तदेवापीतराः संविशन्ति सोऽन्तरोरू ऽअसंवर्त्तमानः शेतेऽनेन तपसा स्वस्ति सँवत्सरस्योदृचᳬं समश्नवा ऽइति ॥ ९ ॥ प्रातराहुत्याᳬं हुतायाम्। अद्ध्वर्युᳬं पूर्णाहुतिञ्जुहोति सर्वं वै पूर्णᳬं सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै तस्यां वरेण वाचं विसृजते * वरन्ददामि ब्रह्मण ऽइति सर्वं वै वरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १० ॥ † अथ योऽस्य निष्कः प्रतिमुक्तो भवति। तमद्ध्वर्यवे ‡ ददात्यद्ध्वर्यवे ददमृतमायुरात्मन्धत्तेऽमृतᳬं ह्यायुर्हिरण्यम् ॥ ११ ॥ अथाग्नेयीमिष्टिन्निर्वपति। पथश्च कामाय यज्ञमुखस्य चाच्छम्बट्कारायाथो ऽअग्निमुखा ऽउ वै सर्वा देवताः सर्वे कामा ऽअश्वमेधे मुखतः सर्वान्देवान्प्रीत्वा सर्वाङ्कामानाप्नवानीति ॥ १२ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति। पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः

(१) महिषी = प्रथमपरिणीता स्त्री। वावाता = वल्लभा। परिवृक्ता=अवल्लभा। पालागली=दूतपुत्री

( २ ) 'निष्किन्न्यो०' इति 'ग' 'ज' पुस्तकयोः पाठः।

* तथा चोक्तं सूत्रकृता—'आ वरदानाद्वाग्यमनम्' ( का० श्रौ० सू० २०।१।११ )।

† शतम् ६६००।

‡ 'अध्वर्यवे च प्रतिमुक्तं निष्कम्' ( का० श्रौ० सू० २०।१।२० )।

पुरस्तात्पाप्मानमपहते व्वार्त्रघ्नावाज्यभागौ पाप्मा वै व्वृत्रः पाप्मनोऽपहत्या 'ऽअग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या ऽअयम्' 'भुवो यज्ञस्य रजसश्च नेते'त्युपाꣳशु हविषो याज्यानुवाक्ये मूर्द्धन्न्वत्यन्न्या भवति सद्वत्यन्न्यैष वै मूर्द्धा य ऽएष तपत्येतस्यैवावरुद्ध्या ऽअथ यत्सद्वती सदेवावरुन्द्धे विराजौ सꣳय्याज्ये सर्व्वदेवत्यं व्वा ऽएतच्छन्दो यद्विराट् सर्व्वे कामा ऽअश्वमेधे सर्व्वान्देवान्प्रीत्वा सर्व्वान्कामानाप्नवानीति हिरण्यन्दक्षिणा सुवर्ण्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ अथ पौष्णं चरुन्निर्व्वपति । पूषा वै पथीनामधिपतिरश्वायैवैतत्स्वस्त्ययनङ्करोत्यथो ऽइयं वै पूषेमामेवास्मा ऽएतद्गोप्त्रीङ्करोति तस्य हि नार्त्तिरस्ति न ह्वला यमियमङ्गोपायतीमामेवास्मा ऽएतद्गोप्त्रीङ्करोति ॥ १४ ॥ तस्यै सप्तदश सामिधेन्न्यो भवन्ति । सप्तदशो वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै व्वृधन्न्वन्तावाज्यभागौ यजमानस्यैव व्वृद्ध्यै 'पूषन्तव व्व्रते वयम्पथस्पथः परिपतिं व्वचस्ये'त्युपाꣳशु हविषो याज्यानुवाक्ये व्रतवत्यन्न्या भवति पथन्न्वत्यन्न्या व्वीर्य्यं वै व्व्रतं व्वीर्य्यस्याप्त्यै व्वीर्य्यस्यावरुद्ध्या ऽअथ यत्पथन्न्वत्यश्वायैवैतत्स्वस्त्ययनङ्करोत्यनुष्टुभौ सꣳय्याज्ये व्वाग्वा ऽअनुष्टुब्वाग्वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै व्वासः शतन्दक्षिणा रूपं व्वा ऽएतत्पुरुषस्य यद्वासस्तस्माद्यमेव कञ्च सुवाससमाहुः को न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैनꣳ

---

( १ ) शु० य० सं० १३. १४–१५। ( २ ) शु० य० सं० ३४. ४१–४२ ।

समर्द्धयति शतम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥ १५ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ ब्राह्मणद्वयेन सावित्र्य इष्टयः, पारिप्लवाशंसनादि च निरूप्यन्ते ]

एतस्यान्तायमानायाम् । अश्वन्निक्त्वोदानयन्ति यस्मिन्त्सर्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सहस्रार्हम्पूर्व्यं ग्यो दक्षिणायान्धुर्य्यप्रतिधुरः ॥ १ ॥ तद्यत्सर्वरूपो भवति । सर्वं वै रूपः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽअथ यज्जवसमृद्धो वीर्य्यं वै जवो वीर्य्यस्याप्त्यै वीर्य्यस्यावरुद्ध्या ऽअथ यत्सहस्रार्हः सर्वं वै सहस्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽअथ यत्पूर्व्य ऽएष वा ऽअपरिमितं वीर्य्यमभिवर्द्धते यत्पूर्व्योऽपरिमितस्यैव वीर्य्यस्यावरुद्ध्या ऽअथ यद्दक्षिणायान्धुर्य्यप्रतिधुर ऽएष वा ऽएष य ऽएष तपति न वा ऽएतङ्कश्चन प्रतिप्रतिरेतस्यैवावरुद्ध्यै ॥ २ ॥ तदु होवाच भाल्लवेयः । द्विरूप ऽएवैषोऽश्वः स्यात्कृष्णसारङ्गः प्रजापतेर्वा ऽएषोऽक्ष्णः समभवद्द्विरूपं वा ऽइदञ्चक्षुः शुक्लञ्चैव कृष्णञ्च तदेनꣳ स्वेन रूपेण समर्द्धयतीति ॥ ३ ॥ अथ होवाच सात्ययज्ञिः । त्रिरूप ऽएवैषोऽश्वः स्यात्तस्य कृष्णः पूर्वार्द्धः शुक्लोऽपरार्द्धः कृत्तिकाञ्जिः पुरस्तात्तद्यत्कृष्णः पूर्वार्द्धो भवति यदेवेदङ्कृष्णमक्ष्णस्तदस्य तदुथ यच्छुक्लोऽपरार्द्धो यदेवेदꣳ शुक्लमक्ष्णस्तदस्य तदुथ यत्कृत्ति-

काश्चिꣳ पुरस्तात्सा कनीनका स ऽएव रूपसमृद्धोऽतो यतमोऽस्योपकल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत जवेन त्वेव समृद्धꣳ स्यात् ॥ ४ ॥ तस्यैते पुरस्ताद्रक्षितार ऽउपक्क्लृप्ता भवन्ति । राजपुत्त्राꣳ कवचिनꣳ शतꣳ राजन्न्या निषङ्गिणꣳ शतꣳ सूतग्ग्राम-ण्ण्याम्पुत्त्रा ऽइषुपर्षिणꣳ शतं क्षात्त्रसङ्ग्रहीतॄणाम्पुत्त्रा द-ण्डिनꣳ शतमश्श्वशतन्निरष्टन्निरमणं ग्यस्मिन्नेनमपिसृज्य रक्षन्ति ॥ ५ ॥ अथ सावित्त्रीमिष्टिन्निर्वपति । सवित्त्रे प्प्रसवित्त्रे द्वादशकपालम्पुरोडाशꣳ सविता वै प्प्रसविता सविता म ऽइमं ग्यज्ञम्प्रसुवादिति ॥ ६ ॥ तस्यै पञ्चदश सा-मिधेन्न्यो भवन्ति । वार्त्रघ्नावाज्यभागौ 'य ऽइमा विश्श्वा जाताद्द्या देवो यातु सविता सुरत्न' ऽइत्त्युपाꣳशु हविषो याज्यानुवाक्क्ये विराजौ सँग्याज्ज्ये हिरण्ण्यन्दक्षिणा सुव-र्ण्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्ब्राह्मणो वीणागाथी दीक्षणत ऽउत्तरम-न्द्रामुदाघ्नँस्तिस्रꣳ स्वयꣳ सम्भृता गाथा गायतीत्त्ययजते-त्त्यददादिति तस्योक्तम्ब्राह्मणम् ॥८॥ अथ द्वितीयान्निर्वपति । सवित्त्र ऽआसवित्त्रे द्वादशकपालम्पुरोडाशꣳ सविता वा ऽआ-सविता सविता म ऽइमं ग्यज्ञमासुवादिति [ ❀ काण्डस्यार्धम् २१६] ॥९॥ तस्यै सप्तदश सामिधेन्न्यो भवन्ति । सद्वन्तावा-ज्यभागौ सदेवावरुन्द्धे 'विश्श्वानि देव सवितꣳ' 'स घा नो

(१) ऋ० सं० ४. ४. २६ ।

* इयं काण्डार्धसंख्याऽत्र 'क' पुस्तक एवास्ति ।

(२) ऋ० सं० ४. ४. २६ । (३) ऋ० सं० ५. ४. १२ ।

देवः सविता सहावे'त्युपाꣳशु हविषो याज्यानुवाक्ये ऽअनुष्टुभौ सँय्याज्ये रजतः हिरण्यन्दक्षिणा नानारूपताया ऽअथो ऽउत्क्रमायानपक्रमाय शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्यमात्मन्धत्ते ॥१०॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयः सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ ११ ॥ अथ तृतीयान्निर्वपति । सवित्रे सत्यप्प्रसवाय द्वादशकपालम्पुरोडाशमेष ह वै सत्यः प्प्रसवो यः सवितुः सत्येन मे प्प्रसवेनेमं ग्यज्ञम्प्रसुवादिति ॥ १२ ॥ तस्यै सप्तदशैव सामिधेन्न्यो भवन्ति । रयिमन्तावाज्यभागौ व्वीर्यं वै रयिर्व्वीर्यस्याप्त्यै व्वीर्यस्यावरुद्ध्या '[1]ऽआ विश्वदेवः सत्पति''न्न प्प्र[2]मिये सवितुर्दैव्यस्य तदि'त्युपाꣳशु हविषो याज्यानुवाक्ये नित्ये सँय्याज्ये नेद्यज्ञपथादयानीति क्लृप्त ऽएव यज्ञेऽन्ततः प्प्रतितिष्ठति त्रिष्टुभौ भवत ऽइन्द्रि[3]यं वै व्वीर्यन्त्रिष्टुबिन्द्रियस्यैव व्वीर्यस्यावरुद्ध्यै हिरण्यन्दक्षिणा सुवर्णः शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयः सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ १४ ॥ एतस्याꣳ सꣳस्थितायाम् । उपोत्थायाद्ध्वर्युश्च यजमानश्चाश्वस्य

( १ ) ऋ० सं० ४. ४. २६ । ( २ ) ऋ० सं० ३. ८. ५ । ( ३ ) 'ग' 'ज' पुस्तकयोः 'इन्द्रे वै' इति पाठः ।

दक्षिणे कर्णे ऽआजपतो 'विभूर्[1]म्मात्रा प्रभूः पित्रेति तस्योक्तम्ब्राह्मणमथैनमुदश्वम्प्राश्वम्प्रसृजत ऽएषा होभयेषान्देवमनुष्याणान्दिग्यदुदीची प्राची स्वायामेवैनन्तद्दिशि धत्तो न वै स्व ऽआयतने प्रतिष्ठितो रिष्यत्यरिष्ट्यै ॥ १५ ॥ स ऽआह 'दे[2]वा ऽआशापालाः । एतन्देवेभ्योऽश्वम्मेधाय प्रोक्षितः रक्षते'त्युक्ता मानुषा ऽआशापाला ऽअथैते देवा ऽआप्याः साध्या ऽअन्वाध्या मरुतस्तमेत ऽउभये देवमनुष्याः संविदाना ऽअप्रत्यावर्त्तयन्तः सँवत्सरः रक्षन्ति तद्यन्न प्रत्यावर्त्तयन्त्येष वा ऽएष य ऽएष तपति क ऽउ ह्येतमर्हति प्रत्यावर्त्तयितुं यद्ध्येनम्प्रत्यावर्त्तयेयुः परागेवेदः सर्व्वंꣳ स्यात्तस्मादप्रत्यावर्त्तयन्तो रक्षन्ति ॥ १६ ॥ स ऽआहाशापालाः । ये वा ऽएतस्योदृचङ्गमिष्यन्ति राष्ट्रन्ते भविष्यन्ति राजानो भविष्यन्त्यभिषेचनीया ऽअथ य ऽएतस्योदृचन्न गमिष्यन्त्यराष्ट्रन्ते भविष्यन्त्यराजानो भविष्यन्ति राजन्न्या विशोऽनभिषेचनीयास्तस्मान्न्मा प्रमदत स्नात्वाच्चैवैनमुदकान्निरुन्धीद्ध्वं वडवाभ्यश्च ते यद्यद्ब्राह्मणजातमुपनिगच्छेत तत्तत्पृच्छेत ब्राह्मणाः कियद्यूयमश्वमेधस्य वित्थेति ते ये न विद्युर्जिनीयात तान्त्सर्व्वं वा ऽअश्वमेधः सर्व्वस्यैष न वेद यो ब्राह्मणः सन्नश्वमेधस्य न वेद सोऽब्राह्मणो ज्येय ऽएव स पानङ्करवाथ खादन्निवपाथाथ यत्किञ्च जनपदे कृतान्नः सर्व्वं

(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९

वस्तत्सुतन्तेषाᳬ रथकारकुल * ऽएव वो वसतिस्तद्ध्यश्व-
स्यायतनमिति ॥ १७ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ ११७ ॥

प्रमुच्च्याश्श्वन्दुक्षिणेन व्वेदिम् । हिरण्मयङ्कशिपूप-
स्तृणाति तस्मिन्न्होतोपविशति दुक्षिणेन होतारꣳ हिर-
ण्मये कूर्च्चे † यजमानो दक्षिणतो ब्ब्रह्मा चोद्गाता च
हिरण्मय्योः कशिपुनोः ‡ पुरस्तात्प्रत्यङ्ङध्वर्युर्हिरण्मये
वा कूर्च्चे हिरण्मये वा फलके ॥ १ ॥ समुपविष्टेष्ष्व-
ध्वर्युः सम्प्रेष्यति । होतर्ब्भूतान्न्याचक्ष्व भूतेष्ष्विमं य्यज-
मानमद्ध्यूहेति सम्प्रेषितो होताद्ध्वर्युमामन्त्रयते पारिप्प्ल-
वमाख्यानमाख्यास्यन्नद्ध्वर्यवित्ति हवै होतरित्यद्ध्वर्युः ॥ २ ॥
मनुर्वैवस्वतो राजेत्त्याह । तस्य मनुष्ष्या व्विशस्त ऽइम
ऽआसत ऽइत्त्यश्श्रोत्रिया गृहमेधिन ऽउपसमेता भवन्ति
तानुपदिशत्त्यृचो व्वेदꣳ सोऽयमित्त्यृचाᳬ सूक्तं व्व्याचक्षाण
ऽइवानुद्रवेद्वीणागणगिन ऽउपसमेता भवन्ति तानद्ध्वर्युः
सम्प्रेष्ष्यति व्वीणागणगिन ऽइत्त्याह पुराणैरिमं य्यजमानꣳ
राजभिः साधुकृद्भिः सङ्गायतेति तन्ते तथा सङ्गायन्ति
तद्यदेनमेवꣳ सङ्गायन्ति पुराणैरेवैनन्तद्राजभिः साधुकृद्भिः

* 'रथकारगृहवासाश्च' ( का० श्रौ० सू० २०।२।१६ )

† सपादमासनं कूर्चः ।

‡ कशिपुशब्देन मृद्वासनं मसूरक उच्यते ।

सलोकङ्कुर्वन्ति ॥ ३ ॥ सम्प्रेष्याद्ध्वर्युः प्प्रक्रमाञ्जुहोति। अन्वाहार्यपचने वाश्वस्य वा पदुम्परिलिख्य यतरथास्य तत्रावृद्भवति पूर्वा त्वेव स्थितिः ॥ ४ ॥ सावित्र्या ऽएवेष्टेः। पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यथ सायन्धृतिषु हूयमानासु राजन्न्यो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्त्रः स्वयः सम्भृता गाथा गायतीत्ययुद्ध्यतेत्यमुः सङ्ग्राममजयदिति तस्योक्तम्ब्राह्मणम् ॥ ५ ॥ अथ श्वोभूते द्वितीयेऽहन्। एवमेवैतासु साविञ्जीष्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्येवाद्ध्वर्युर्यमो वैवस्वतो राजेत्याह तस्य पितरो विशस्त ऽइम ऽआसत ऽइति स्थविरा ऽउपसमेता भवन्ति तानुपदिशति यजूꣳषि वेदः सोऽयमिति यजुषामनुवाकं व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्प्रक्रमाञ्जुहोति ॥ ६ ॥ अथ तृतीयेऽहन्। एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्येवाद्ध्वर्युर्वरुण ऽआदित्यो राजेत्याह तस्य गन्धर्वा विशस्त ऽइम ऽआसत ऽइति युवानः शोभना ऽउपसमेता भवन्ति तानुपदिशत्यथर्वाणो वेदः सोऽयमित्यथर्वणामेकम्पर्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्प्रक्रमाञ्जुहोति ॥ ७ ॥ अथ चतुर्थेऽहन्। एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्येवाद्ध्वर्युः सोमो वैष्णवो राजेत्याह तस्याप्सरसो विशस्ता ऽइमा ऽआसत ऽइति युवतयः शोभना ऽउपसमेता भवन्ति ता ऽउपदिशत्यङ्गिरसो वेदः सोऽयमि-

त्यङ्गिरसामेकम्पर्व्व व्व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्धर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ८ ॥ अथ पञ्चमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्धर्य्यविति हवै होतरित्त्येवाद्धर्य्युरर्ब्बुदः काद्रवेयो राजेत्त्याह तस्य सर्प्पा विशस्त ऽइम ऽआसत ऽइति सर्प्पाश्च सर्प्पविदश्चोपसमेता भवन्ति तानुपदिशति सर्प्पविद्या वेदः सोऽयमिति सर्प्पविद्याया ऽएकम्पर्व्व व्व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्धर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ९ ॥ अथ षष्ठेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्धर्य्यविति हवै होतरित्त्येवाद्धर्य्युः कुबेरो वैश्रवणो राजेत्त्याह तस्य रक्षाꣳसि विशस्तानीमान्न्यासत ऽइति सेलगाः पापकृत ऽउपसमेता भवन्ति तानुपदिशति देवजनविद्या वेदः सोऽयमिति देवजनविद्याया ऽएकम्पर्व्व व्व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्धर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ १० ॥ अथ सप्तमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्धर्य्यविति हवै होतरित्त्येवाद्धर्य्युरसितो धान्न्वो राजेत्त्याह तस्यासुरा विशस्त ऽइम ऽआसत ऽइति कुसीदिन ऽउपसमेता भवन्ति तानुपदिशति माया वेदः सोऽयमिति काञ्चिन्मायाङ्कुर्य्यादेवमेवाद्धर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ११ ॥ अथाष्टमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्धर्य्यविति हवै होतरित्त्येवाद्धर्य्युर्म्मत्स्यः साम्मदो राजेत्त्याह तस्योदकेचरा विशस्त ऽइम ऽआसत ऽइति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीति-

हासो व्वेदः सोऽयमिति कञ्चिदितिहासमाचक्षीतैवमेवा-
ध्वर्य्युः सम्प्रेष्यति न प्प्रक्रमाञ्जुहोति ॥ १२ ॥ अथ
नवमेऽहन् । एवमेवैतास्विष्टिषु सᳲस्थितास्वेषैवावृदध्वर्य्य-
विति हवै होतरित्येवाध्वर्य्युस्ताक्ष्यो व्वैपश्यतो राजेत्याह
तस्य व्वयाᳲसि व्विशस्तानीमान्न्यासत ऽइति व्वयाᳲसि
च व्वायोविद्धिकाश्चोपसमेता भवन्ति तानुपदिशति पुराणं
व्वेदः सोऽयमिति किञ्चित्पुराणमाचक्षीतैवमेवाध्वर्य्युः स-
म्प्रेष्यति न प्प्रक्रमाञ्जुहोति ॥ १३ ॥ अथ दशमेऽहन् ।
एवमेवैतास्विष्टिषु सᳲस्थितास्वेषैवावृदध्वर्य्यविति हवै हो-
तरित्येवाध्वर्य्युर्द्धर्म्म ऽइन्द्रो राजेत्याह तस्य देवा व्विशस्त
ऽइम ऽआसत ऽइति श्श्रोत्रिया अप्प्रतिग्ग्राहका ऽउप-
समेता भवन्ति तानुपदिशति सामानि व्वेदः सोऽयमिति
साम्म्नान्दशतम्ब्रूयादेवमेवाध्वर्य्युः सम्प्रेष्यति न प्प्रक्रमा-
ञ्जुहोतीति ॥ १४ ॥ एतत्पारिप्लवम् । सर्व्वाणि राज्यान्न्या-
चष्टे सर्व्वा व्विशः सर्व्वान्न्वेदान्त्सर्व्वान्देवान्त्सर्व्वाणि भूतानि
सर्व्वेषाᳲ ह वै स ऽएतेषाᳲ राज्यानाᳲ सायुज्यᳲ सलो-
कतामश्नुते सर्व्वासां व्विशामैश्वर्य्यमाधिपत्यङ्गच्छति सर्व्वा-
न्न्वेदानवरुन्द्धे सर्व्वान्देवान्न्प्रीत्वा सर्व्वेषु भूतेष्वन्ततः प्प्र-
तितिष्ठति यस्यैवंव्विदेतद्धोता पारिप्लवमाख्यानमाचष्टे
य्यो वैतदेवं व्वेदैतदेव समानमाख्यानम्पुनः पुनः सँवत्सर-
म्परिप्प्लवते तद्यत्पुनः पुनः परिप्प्लवते तस्मात्पारिप्प्लवᳲ
षट्त्रिᳲशतन्दशाहानाचष्टे षट्त्रिᳲशदक्षरा बृहती बार्हताः
पशवो बृहत्यैवास्म्मै पशूनवरुन्द्धे ॥ १५ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपकाष्ठादि ]

सँवत्सरे पर्य्यवेते दीक्षा । प्प्राजापत्त्यमालब्भ्योत्सी-
दन्तीष्टयः पुरोहितस्याग्निषु यजेतेत्त्यु हैक ऽआहुः किमु
दीक्षितो यजेत द्वादश दीक्षा द्वादशोपसदस्तिस्त्रः सुत्त्या-
स्तत्त्रिणवमभिसम्पद्यते व्वज्रो वै त्त्रिणवः क्षत्रमश्श्वः
क्षत्रꣳ राजन्न्यो व्वज्रेण खलु वै क्षत्रꣳ स्पृतन्तद्वज्रेणैव
क्षत्रꣳ स्पृणोति ॥ १ ॥ दीक्षणीयायाꣳ सꣳस्थितायाम् ।
सायं वाचि विसृष्टायां वीणागणगिन ऽउपसमेता भवन्ति
तानद्ध्वर्य्युः सम्प्रेष्यति व्वीणागणगिन ऽइत्त्याह देवैरिमं
य्यजमानꣳ सङ्गायतेति तन्ते तथा सङ्गायन्ति ॥ २ ॥ अह-
रहर्व्वाचि विसृष्टायाम् । अग्नीषोमीयाणामन्ततः सꣳस्थाया-
म्परिहृतासु व्वसतीवरीषु तद्यदेनन्देवैः सङ्गायन्ति देवैरे-
वैनन्तत्सलोकङ्कुर्व्वन्ति ॥ ३ ॥ प्रजापतिना सुत्त्यासु । एव-
मेवाहरहः परिहृतास्वेव व्वसतीवरीषूदवसानीयायामन्ततः
सꣳस्थितायां तद्यदेनम्प्रजापतिना सङ्गायन्ति प्प्रजापति-
नैवैनन्तदन्ततः सलोकङ्कुर्व्वन्ति ॥ ४ ॥ एकविꣳशतिर्य्यूपाः ।
सर्व्वे ऽएकविꣳशत्त्यरत्नयो राज्जुदालोऽग्निष्ठो भवति पैतु-
दारवावभितः षड्वैल्वास्त्रय ऽइत्थास्त्रय ऽइत्थात्षट् खादि-
रास्त्रय ऽएवेत्थात्त्रय ऽइत्थात्षट् पालाशास्त्रय ऽएवेत्थात्त्रय
ऽइत्थात् ॥ ५ ॥ तद्यदेत ऽएवं य्यूपा भवन्ति । प्प्रजापतेः
प्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमद्ध्रियत तस्य यः
श्लेष्ष्मासीत्त्ससार्द्धꣳ समवद्द्रुत्त्य मद्ध्यतो नस्त ऽउदभि-
नत्स ऽएष व्वनस्प्पतिरभवद्राज्जुदालस्तस्मात्स श्लेष्ष्मणः

श्लेष्म्मणो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-त्तसोऽग्निष्ठो भवति मद्ध्यं व्वा ऽएतद्यूपानां ऽयदग्निष्ठो* मद्ध्यमेतत्प्राणानां ऽयन्नासिके स्व ऽएवैनन्तदायतने दधाति ॥ ६ ॥ अथ यदापोमयन्तेज ऽआसीत् । यो गन्धः स सार्द्धꣳ समवद्रुत्य चक्षुष्ट ऽउदभिनत्तस ऽएष व्वनस्प्पति-रभवत्पीतुदारुस्तस्म्मात्स सुरभिर्ग्गन्धाद्धि समभवत्तस्म्मादु ज्वलनस्तेजसो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-त्तावभितोऽग्निष्ठम्भवतस्तस्म्मादिमे ऽअभितो नासिकाश्च-क्षुषी स्व ऽएवैनौ तदायतने दधाति ॥ ७ ॥ अथ यत्कु-न्तापमासीत् । यो मज्जा स सार्द्धꣳ समवद्रुत्य श्श्रोत्रत ऽउदभिनत्तस ऽएष व्वनस्प्पतिरभवद्बिल्ल्वस्तस्म्मात्तस्यान्तरतः सर्व्वमेव फलमाद्यम्भवति तस्म्मादु हारिद्र ऽइव भवति हारिद्र ऽइव हि मज्जा तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे पैतुदा-रवौ भवतो बाह्ये बैल्ल्वा ऽअन्तरे हि चक्षुषी बाह्ये श्श्रोत्रे स्व ऽएवैनाँस्तदायतने दधाति ॥ ८ ॥ अस्त्थिब्भ्य ऽएवास्य खदिरः समभवत् । तस्म्मात्स दारुणो बहुसारो दारुणमिव ह्यस्त्थि तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे बैल्ल्वा भवन्ति बाह्ये खादिरा ऽअन्तरे हि मज्जानो बाह्यान्यस्त्थीनि स्व ऽएवैनाँस्तदायतने दधाति ॥ ९ ॥ माꣳसेब्भ्य ऽएवास्य पलाशः समभवत् । तस्म्मात्स बहुरसो लोहितरसो लोहि-तमिव हि माꣳसन्तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे खादिरा भवन्ति बाह्ये पालाशा ऽअन्तराणि ह्यस्त्थीनि बाह्यानि

* अग्निसमीपे तिष्ठतीति-अग्निष्ठः=मध्यमो यूप इत्यर्थः ।
( १ ) 'पैतुदारवौ' इति 'ग' 'ज' पुस्तकयोः पाठः ।

माꣳसानि स्व ऽएवैनाँस्तदायतने दधाति ॥ १० ॥ अथ यदेकविꣳशतिर्ब्भवन्ति । एकविꣳशत्यरत्नय ऽएकविꣳशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्चऽर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳशः सोऽश्वमेध ऽएष प्प्रजापतिरेवमेतम्प्रजापतिं स्वयज्ञक्कृत्स्नꣳ संस्कृत्य तस्मिन्नेकविꣳशतिमग्नीषोमीयान्पशूनालभते तेषाꣳ समानङ्कर्म्मेत्येतत्पूर्वेद्युः कर्म्म ॥ ११ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

——०——

[ सवनीयाः पशवः ]

अथ प्प्रातर्ग्गोतमस्य । चतुरुत्तर स्तोमो भवति तस्य चतसृषु बहिष्प्पवमानमष्टास्वष्टास्वाज्यानि द्वादशसु माध्यन्दिनः पवमानः षोडशसु पृष्ठानि विꣳशत्यामार्ब्भवः पवमानश्चतुर्विꣳशत्यामग्निष्टोमसाम* ॥ १ ॥ तस्य हैके । अग्निष्टोमसाम चतुःसाम कुर्वन्ति नाग्निष्टोमो नोक्थ्य ऽइति वदन्तस्तद्यदि तथा कुर्य्युः सार्द्धꣳ स्तोत्रियꣳ शस्त्वा सार्द्धमनुरूपꣳ शꣳसेद्रथन्तरम्पृष्ठꣳ राथन्तरꣳ शस्त्रमग्निष्टोमो यज्ञस्तेनेमँल्लोकमृद्ध्नोति ॥ २ ॥ एकविꣳशतिः सवनीयाः पशवः । सर्व्वे ऽआग्नेयास्तेषाꣳ समानङ्कर्म्मेत्यु हैक ऽआहुर्द्वे त्वेवैते ऽएकादशिन्यावालभेत य ऽएवैकाद-

* येन साम्ना अग्निष्टोमसंस्था समाप्यते तदग्निष्टोमसाम ।

शिनेषु कामस्तस्य कामस्याप्त्यै ॥ ३ ॥ सꣳस्थितेऽग्नि-ष्टोमे । परिहृतासु वसतीवरीष्ववद्धृथ्युरन्नहोमाञ्जुहोति तेषामुक्तम्ब्राह्मणं 'प्राणाय स्वाहापानाय स्वाहे'ति द्वादशभि-रनुवाकैर्द्वादश मासाः सँवत्सरः सर्वꣳ सँवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥ एकविꣳशम्मद्ध्यममहर्भ-वति । असौ वा ऽआदित्य ऽएकविꣳशः सोऽश्वमेधः स्वेनैवैनꣳ स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति तस्मा-देकविꣳशम् ॥ ५ ॥ यद्वेवैकविꣳशम् । एकविꣳशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशस्तदने-नैकविꣳशेनात्मनैतस्मिन्नेकविꣳशे प्रतिष्ठायाम्प्रतितिष्ठति तस्मादेकविꣳशम् ॥ ६ ॥ यद्वेवैकविꣳशम् । एकविꣳशो वै स्तोमानाम्प्रतिष्ठा बहु खलु वा ऽएतदेतस्मिन्नहन्युच्चा-वचमिव कर्म्म क्रियते तद्यदेतदेतस्मिन्नहन्युच्चावचम्बहु कर्म्म क्रियते तदेतस्मिन्नेकविꣳशे प्रतिष्ठायाम्प्रतिष्ठित-ङ्क्रियाता ऽइति तस्माद्वेवैतदेकविꣳशमहः ॥ ७ ॥ तस्य प्रातःसवनम् । 'अग्निन्तम्मन्ये यो वसु'रिति होता पाङ्क्तमाज्यꣳ शस्त्वैकाहिकमुपसꣳशꣳसति बार्हतञ्च प्रउग-म्माधुच्छन्दसञ्च त्रिचश ऽउभे सꣳशꣳसति यश्च बार्हते प्रउगे कामो य ऽउ च माधुच्छन्दसे तयोरुभयोः काम-योराप्त्यै क्लृप्तम्प्रातःसवनम् ॥ ८ ॥ अथातो माद्ध्य-न्दिनꣳ सवनम् । अतिच्छन्दाः प्रतिपन्मरुत्वतीयस्य 'त्रिक-

(१) शु० य० सं० २२. २३। (२) शु० य० सं० १५. ४१। (३) ऋ० सं० २. ६. २८।

द्रुकेषु महिषो यवाशिर'मित्त्यतिष्ठा वा ऽएषा च्छन्दसां ऽयदुतिच्छन्दा ऽअतिष्ठा ऽअश्श्वमेधो यज्ञानामश्श्वमेधस्यै वाप्प्त्यै सैषैव त्रिꣳ शस्ता त्रिचꣳ सम्पद्यते तेनो तङ्कामममाप्नोति यस्त्रिच 'ऽइदं[1] वसो सुतमन्ध' ऽइत्त्यनुचर ऽएष ऽएव नित्य ऽएकाहातान 'ऽइत्था[2] हि सोम ऽइन्मदे'ऽवितांसि[3] सुन्वतो व्वृक्तबर्हिष' ऽइति पङ्क्तीश्च षट्पदाश्च शस्त्वैकाहिके निविदन्दधातीति मरुत्वतीयम् ॥ ९ ॥ अथातो निष्केवल्ल्यम् । महानाम्न्यꣳ पृष्ठम्भवन्ति सानुरूपाꣳ सप्प्रगाथाꣳ शꣳसति सर्वे वै कामा महानाम्नीषु सर्वे कामा ऽअश्श्वमेधे सर्वेषाङ्कामानामाप्प्त्या 'ऽइन्द्रो[4] मदाय वावृधे' 'प्प्रेदम्[5]ब्रह्म व्वृत्रतूर्येष्ष्वाविथे'ति पङ्क्तीश्च षट्पदाश्च शस्त्वैकाहिके निविदन्दधाति क्क्लृप्तस्म्माध्यन्दिनꣳ सवनम् ॥ १० ॥ अथातस्तृतीयसवनम् । अतिच्छन्दा ऽएव प्प्रतिपद्भैश्श्वदेवस्या'भि त्यन्[6]देवꣳ सवितारमोण्योरि'ति तस्या ऽएतदेव ब्ब्राह्मणं ऽयत्पूर्वस्या 'ऽअभि त्वाँ[7] देव सवित'रित्त्यनुचरोऽभिवानभिभूत्त्यै रूप'मुदु ष्य[8] देवꣳ सविता दमूना' ऽइति सावित्रꣳ शस्त्वैकाहिके निविदन्दधाति 'मही[9] द्यावापृथिवी ऽइह ज्येष्ठे' ऽइति चतुर्ऋचन्द्यावापृथिवीयꣳ शस्त्वैकाहिके निविदन्दधा'त्यृभु[10]र्विभ्वाँ वाज ऽइन्द्रो नो ऽअच्छे'त्त्यार्भवꣳ शस्त्वैकाहिके

(१) ऋ० सं० ५. ७. १७। (२) ऋ० सं० १. ५. २९। (३) ऋ० सं० ६. ३. १८। (४) ऋ० सं० १. ६. १।·(५) ऋ० सं० ६. ३. १६। (६) शु० य० सं० ४. २५। (७) ऋ० सं० १. २. १३। (८) ऋ० सं० ५. ४. ५। (९) ऋ० सं० ३. ८. ८। (१०) ऋ० सं० ३. ७. ३।

निविदन्दधाति 'को नु[1] वाम्मित्रावरुणावृताय'न्निति वैश्वदेवꣳ शस्त्वैकाहिके निविदन्दधातीति वैश्वदेवम् ॥ ११ ॥ अथात ऽआग्निमारुतम् । 'मूर्द्धानन्दिवो[2] ऽअरतिम्पृथिव्या' ऽइति वैश्वानरीयꣳ शस्त्वैकाहिके निविदन्दधा'त्या[3] रुद्रास ऽइन्द्रवन्तः सजोषस' ऽइति मारुतꣳ शस्त्वैकाहिके निविदन्दधाती'ममू षु[4] वो ऽअतिथिमुषर्बुध'मिति नवर्चञ्जातवेदसीयꣳ शस्त्वैकाहिके निविदन्दधाति तद्यदैकाहिकानि निविद्धानानि भवन्ति प्प्रतिष्ठा वै ज्योतिष्टोमः प्प्रतिष्ठाया ऽअप्प्रच्युत्त्यै ॥ १२ ॥ तस्यैते पशवो भवन्ति । 'अश्वस्तूपरो* गोमृग,[†] ऽइति पञ्चदश पर्य्यङ्ग्यास्तेषामुक्तम्ब्राह्मणमथैत ऽआरण्या 'वसन्ताय[6] कपिञ्जलानालभते ग्रीष्म्माय कलविङ्काश्वर्षाभ्यस्तित्तिरी'न्निति तेषाम्म्वेवोक्तम् ॥ १३ ॥ अथैतानेकविꣳशतये । चातुर्म्मास्यदेवताभ्य ऽएकविꣳशतिमेकविꣳशतिम्पशूनालभत ऽएतावन्तो वै सर्व्वे देवा यावन्तश्चातुर्म्मास्यदेवताः सर्व्वे कामा ऽअश्वमेधे सर्व्वान्देवान्प्रीत्त्वा सर्व्वान्कामानाप्नवानीति न तथा कुर्य्यात् ॥ १४ ॥ सप्तदशैव पशून्मद्ध्यमे यूप ऽआलभेत । प्प्रजापतिः सप्तदशः सर्व्वꣳ सप्तदशः सर्व्वमश्वमेधः सर्व्वस्याप्प्त्यै सर्व्वस्यावरुद्ध्यै षोडश षोडशेतरेषु षोडशकलं वा ऽइदꣳ सर्व्वꣳ

---

( १ ) ऋ० सं० ४. २. १३ । ( २ ) ऋ० सं० ४. ५. ९ । शु० य० सं० ७. २५।३३. ८ । ( ३ ) ऋ० सं० ४. ३. ११ । ( ४ ) ऋ० सं० ४. ५. १७ । ( ५ ) शु० सं० य० २४. १ ।

* 'शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनश्छागः = तूपरः ।

† गोमृगः = गवयः ।

( ६ ) शु० य० सं० २४. २० ।

सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते त्रयोदश मासाः संवत्सरः सर्वᳬ संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १५ ॥ अथ पुरा बहिष्पवमानात् । अश्वन्निक्त्वोदानयन्ति तेन पवमानाय सर्पन्ति तस्योक्तम्ब्राह्मणᳬ स्तुते बहिष्पवमानेऽश्वमास्तावमाक्रमयन्ति स यद्यव वा जिघ्रेद्वि वा वर्त्तेत समृद्धो मे यज्ञ ऽइति ह विद्यात्तमुपाकृत्याद्ध्वर्युराह होतरभिष्टुहीति तमेकादशभिर्होताभिष्टौति ॥ १६ ॥ 'यदक्रन्दः [1] प्रथमञ्जायमान' ऽइति । त्रिः प्रथमया त्रिरुत्तमया ताः पञ्चदश सम्पद्यन्ते पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते तद्वै यजमानायैव वज्रः प्रदीयते योऽस्य स्तृत्यस्तᳬ स्तर्त्तव ऽउप प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति ॥ १७ ॥ एते ऽउद्धृत्य । 'मा [2] नो मित्रो वरुणो ऽअर्यमायु'रित्येतत्सूक्तमद्ध्रिगावावपति 'चतु- [3] स्त्रिᳬशद्वाजिनो देवबन्धो'रित्यु हैक ऽएतां वङ्क्रीणाम्पुरस्ताद्दधति नेदनायतने प्रणवन्दधामेत्यथो नेदेकवचनेन बहुवचनं व्यवायामेति न तथा कुर्यात्साद्धमेव सूक्तनावपे'दुपं प्रागाच्छसनं वाज्यर्वो''प प्रागात्परमं यत्सधस्थ'मिति ॥ १८ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(१) शु० य० सं० २९. १२। (२) शु० य० सं० २५. २४। (३) शु० य० सं० २५. ४१। (४) शु० य० सं० २९. २३। (५) शु० य० सं० २९. २४।

[ संवादः ]

एते ऽउक्त्वा। यदुद्धिगोः परिशिष्टम्भवति तदाह वासोऽधिवासः हिरण्यमित्यश्वायोपस्तृणन्ति तस्मिन्नेनमधि संज्ञपयन्ति संज्ञप्तेषुः पशुषु पत्न्यः पान्नेजनैरुदायन्ति चतस्रश्च जायाः कुमारी पञ्चमी चत्वारि च शतान्यनुचरीणाम् ॥ १ ॥ निष्ठितेषु पान्नेजनेषु। म अश्वायोपनिपादयन्त्यथैनावधिवासेन * सम्प्रोर्णुवन्ति † '(१) स्वर्गे लोके प्प्रोर्णुवाथा'मित्येष वै स्वर्गो लोको यत्र पशुः संज्ञपयन्ति निरायत्याश्वस्य शिश्नम्महिष्युपस्थे निधत्ते ‡ '(२) वृषा वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैव सर्वत्वाय ॥ २ ॥ तयोः शयानयोः। अश्वं यजमानोऽभिमेथ'(३)त्युत्सक्थ्या ऽअव गुदन्धेही'ति तन्न कश्चन प्प्रत्यभिमेथति नेद्यजमानम्प्रतिप्प्रतिः कश्चिदसदिति ॥ ३ ॥ अथाध्वर्युः कुमारीमभिमेथति। कुमारि हये हये कुमारि '(४)यकासकौ शकुन्तिके'ति तत्कुमारी प्प्रत्यभिमेथत्यध्वर्यो हये हयेऽध्वर्यो 'यको(५)ऽसकौ शकुन्तक' ऽइति ॥ ४ ॥ अथ ब्ब्रह्मा महिषीमभिमेथति। महिषि हये हये महिषि '(६)माता च ते पिता च तेऽग्रं व्वृक्षस्य रोहत' ऽइति तस्यै शतः राजपुत्र्योऽनुचर्यो भवन्ति ता ब्ब्रह्माणम्प्रत्यभिमेथ-

---

* अथ उपरिष्टाच्चाच्छादनक्षमं वासोऽधिवासः।

† का० श्रौ० सू० २०. ६. १५।

( १ ) शु० य० सं० २३. २०।

‡ 'अश्वशिश्नमुपस्थे कुरुते' ( का० श्रौ० सू० २०. ६. १६ )।

(२) शु० य० सं० २३ २०। (३) शु० य० सं० २३. २१। (४) शु० य० सं० २३. २२। ( ५ ) शु० य० सं० २३. २३। ( ६ ) शु० य० सं० २३. २४।

न्ति ब्रह्मन्हये हये ब्रह्म'न्माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडत' इति ॥ ५ ॥ अथोद्गाता वावातामभिमेथति । वावाते हये हये वावात 'ऊर्द्ध्वामेनामुच्छ्रापये'ति तस्यै शतं राजन्या अनुचर्यो भवन्ति ता उद्गातारम्प्रत्यभिमेथन्त्युद्गातर्हये हय उद्गात'रूर्द्ध्वमेनमुच्छ्रयता'दिति ॥ ६ ॥ अथ होता परिवृक्तामभिमेथति । परिवृक्ते हये हये परिवृक्ते 'यदस्या अंहुभेद्या' इति तस्यै शतं सूतग्रामण्यान्दुहितरोऽनुचर्यो भवन्ति ता होतारम्प्रत्यभिमेथन्ति होतर्हये हये होत'र्यद्देवासो ललामगु'मिति ॥ ७ ॥ अथ क्षत्ता पालागलीमभिमेथति । पालागलि हये हये पालागलि 'यद्धरिणो यवमत्ति न पुष्टम्पशु मन्यत' इति तस्यै शतङ्क्षात्रसङ्ग्रहीतृणान्दुहितरोऽनुचर्यो भवन्ति ताः क्षत्तारम्प्रत्यभिमेथन्ति क्षत्तर्हये हये क्षत्त'र्यद्धरिणो यवमत्ति न पुष्टम्बहु मन्यत' इति ॥ ८ ॥ सर्वाप्तिर्वा एषा वाचः । यदभिमेथिकाः सर्वे कामा अश्वमेधे सर्वया वाचा सर्वान्कामानाप्नवामेत्युत्थापयन्ति महिषीन्ततस्ता यथेतम्प्रतिपरायन्त्यथेतरे सुरभिमतीमृचमन्ततोऽन्वाहु'र्दधिक्राव्णो अकारिष'मिति ॥ ९ ॥ [अर्धप्रपाठकः ॥५३॥] अप वा एतेभ्य आयुर्देवताः क्रामन्ति । ये यज्ञेऽपूतां वाचं वदन्ति वाचमेवैतत्पुनते देवयज्यायै देवतानामनपक्रमाय या च गोमृगे वपा भवति या चाजे तूपरे

( १ ) शु० य० सं० २३. २५। ( २ ) शु० य० सं० २३. २६। ( ३ ) शु० य० सं० २३. २७। ( ४ ) शु० य० सं० २३. २८। ( ५ ) शु० य० सं० २३. २९। ( ६ ) शु० य० सं० २३. ३०। ( ७ ) शु० य० सं० २३. ३१। ( ८ ) शु० य० सं० २३. ३२।

ते ऽअश्श्वे प्प्रत्त्यवधायाहरन्ति नाश्श्वस्य व्वपास्तीति व्वदन्तो न तथा कुर्य्यादश्श्वस्यैव प्प्रत्त्यक्षम्मेद ऽआहरेत्त्प्रज्ञाता ऽइतराः ॥ १० ॥ श्रृतासु वपासु । स्वाहाकृतिभिश्श्चरित्त्वा प्प्रत्त्यञ्चः प्प्रतिपरेत्त्य सदसि ब्ब्रह्मोद्यं वदन्ति पूर्व्वया द्वारा प्प्रपद्य यथाधिष्ण्ण्यं ठ्ठ्युपविशन्ति ॥ ११ ॥ स होताद्ध्वर्य्युम्पृच्छति । 'कः[1] स्विदेकाकी चरती'ति तम्प्रत्त्याह 'सूर्य्य ऽएकाकी[2] चरती'ति ॥ १२ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छति । 'किंठ्ठ[3] स्वित्त्सूर्य्यसमञ्ज्योति'रिति तम्प्रत्त्याह ब्ब्रह्म 'सूर्य्य[4]-समञ्ज्योति'रिति ॥ १३ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'पृच्छामि[5] त्त्वा चितये देवसखे'ति तम्प्रत्त्याहा'पि तेषु[6] त्त्रिषु पदेष्ष्वस्म्मी'ति ॥ १४ ॥ अथोद्गाता ब्ब्रह्माणम्पृच्छति । 'केष्ष्वन्तः[7] पुरुष ऽआविवेशे'ति तम्प्रत्त्याह 'पञ्चस्व[8]न्तः पुरुष ऽआविवेशे'ति ॥ १५ ॥ एतस्यामुक्तायामुत्त्थाय । सदसोऽधि प्प्राञ्चो यजमानमब्भ्यायन्त्यग्ग्रेण हविर्द्धाने ऽआसीनमेत्त्य यथायतनम्पर्य्युपविशन्ति ॥ १६ ॥ स होताद्ध्वर्य्युम्पृच्छति । 'का[9] स्विदासीत्त्पूर्व्वचित्ति'रिति तम्प्रत्त्याह 'द्यौरासी[10]त्त्पूर्व्वचित्ति'रिति ॥ १७ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छति । 'का[11] ऽईमरे पिशङ्गिले'ति तम्प्रत्त्याहा'जारे[12] पिशङ्गिले'ति ॥ १८ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'कत्त्यस्य[13]

( १ ) शु० य० सं० २३. ४५ । ( २ ) शु० य० सं० २३. ४६ । ( ३ ) शु० य० सं० २३. ४७ । ( ४ ) शु० य० सं० २३. ४८ । ( ५ ) शु० य० सं० २३. ४९ । ( ६ ) शु० य० सं० २३. ५० । ( ७ ) शु० य० सं० २३. ५१ । ( ८ ) शु० य० सं० २३. ५२ । ( ९ ) शु० य० सं० २३. ५३ । ( १० ) शु० य० सं० २३. ५४ । ( ११ ) शु० य० सं० २३. ५५ । ( १२ ) शु० य० सं० २३. ५६ । ( १३ ) शु० य० सं० २३. ५७ ।

विष्टाः कत्यक्षराणी'ति तम्प्रत्याह 'षडस्य विष्टाः शतमक्षराणी'ति ॥ १९ ॥ अथोद्गाता ब्ब्रह्माणम्पृच्छति । 'को ऽअस्य वेद भुवनस्य नाभि'मिति तम्प्रत्याह 'वेदाहमस्य भुवनस्य नाभि'मिति ॥ २० ॥ अथाद्ध्वर्युं य्यजमानः पृच्छति । 'पृच्छामि त्वा परमन्तम्पृथिव्व्या' ऽइति तम्प्रत्याहे'यं वेदिः परो ऽअन्तः पृथिव्व्या' ऽइति ॥ २१ ॥ सर्वाप्प्तिर्वा ऽएषा वाचः । यद्ब्रह्मोद्यꣳ सर्वे कामा ऽअश्श्वमेधे सर्वया वाचा सर्वान्न्कामानाप्नवामेति ॥ २२ ॥ उदिते ब्ब्रह्मोद्ये । प्प्रपद्याद्ध्वर्युर्हिरण्णमयेन पात्रेण प्प्राजापत्त्यम्महिमानङ्गृह्णाति तस्य पुरोरु'ग्घिरण्ण्यगर्ब्भः समवर्त्तताग्ग्र' ऽइत्त्यथास्य पुरोऽनुवाक्क्या 'सुभूः स्वयम्भूः प्प्रथम' ऽइति 'होता यक्षत्प्रजापति'मिति प्प्रैषः 'प्प्रजापते न त्वदेतान्न्यन्न्य' ऽइति होता यजति वषट्कृते जुहोति 'यस्तेऽहन्त्सँवत्सरे महिमा सम्बभूवे'ति नानुवषट्करोति सर्वहुतꣳ हि जुहोति ॥ २३ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ वपाहोमः ]

अथातो वपानाꣳ होमः । नानेव चरेयुरा वैश्श्वदेवस्य वपायै वैश्श्वदेवस्य वपायाꣳ हुतायान्तदन्न्वितरा

---

( १ ) शु० य० सं० २३. ५८. । ( २ ) शु० य० सं० २३. ५९ । ( ३ ) शु० य० २३. ६० । ( ४ ) शु० य० सं० २३. ६१ । ( ५ ) शु० य० सं० २३. ६२ । ( ६ ) शु० य० सं० २३. १ । ( ७ ) शु० य० सं० २३. ६३ । ( ८ ) शु० य० सं० २३. ६४ । ( ९ ) शु० य० सं० २३. ६५ । ( १० ) शु० य० सं० २३. २

जुहुयुरिति ह स्माह सत्यकामो जाबालो विश्वे वै सर्वे देवास्तदेनान्यथादेवतम्प्रीणातीति ॥ १ ॥ ऐन्द्राग्नस्य वपायाᳫं हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माहतुः सौमापौ मानुतन्तव्याविन्द्राग्नी वै सर्वे देवास्तदुवैनान्यथादेवतम्प्रीणातीति ॥ २ ॥ कायस्य वपायाᳫं हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माह शैलालिः प्रजापतिर्वै कः प्रजापतिमु वा ऽअनु सर्वे देवास्तदुवैनान्यथादेवतम्प्रीणातीति ॥ ३ ॥ एकविᳫंशतिश्चातुर्मास्यदेवता ऽअनुद्रुत्य । एकविᳫंशतिधा कृत्वा प्रचरेयुरिति ह स्माह भाल्लबेय ऽएतावन्तो वै सर्वे देवा यावत्यश्चातुर्मास्यदेवतास्तदुवैनान्यथादेवतम्प्रीणातीति ॥ ४ ॥ नानैव चरेयुः । इतीन्द्रोतः शौनकः किमुत त्वरेरँस्तदुवैनान्यथादेवतम्प्रीणातीत्येतदुह तेषां वचोऽन्या त्वेवात स्थितिः ॥ ५ ॥ अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः सकृद्देवदेवत्याभिस्तदुवैनान्यथादेवतम्प्रीणात्यञ्जसा यज्ञस्य सᳫंस्थामुपैति न ह्वलतीति ॥ ६ ॥ हुतासु वपासु । प्रपद्याद्ध्वर्यू रजतेन पात्रेण प्राजापत्यम्महिमानमुत्तरङ्गृह्णाति तस्य पुरोरुग्घ्यः [1]'प्राणतो निमिषतो महित्वे'ति विपर्यस्ते याज्यानुवाक्ये ऽअयातयामताया ऽएष ऽएव प्रैषो वषट्कृते जुहोति [2]'यस्ते रात्रौ सँवत्सरे महिमा सम्बभूवे'ति नानुवषट्करोति तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ नान्येषाम्पशूनान्तेदन्या ऽअवद्यन्ति । अवद्यन्त्यश्वस्य

(१) शु० य० सं० २३. ३ । (२) शु० य० सं० २३. ४ ।

दक्षिणतोऽन्न्येषाम्पशूनामवद्यन्त्युत्तरतोऽश्श्वस्य प्लक्षशाखास्वन्न्येषाम्पशूनामवद्यन्ति वेतसशाखास्वश्श्वस्य ॥ ८ ॥ तदु होवाच सात्ययज्ञिः । इतरथैव कुर्य्युः पथ ऽएव नापोदित्त्यमिति पूर्वा त्त्वेव स्त्थितिरुक्क्थ्यो यज्ञस्तेनान्तरिक्षलोकमृद्ध्नोति सर्वस्तोमोऽतिरात्र ऽउत्तममहर्ब्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्श्वमेधः सर्वस्याप्त्त्यै सर्वस्यावरुद्ध्यै ॥ ९ ॥ तस्य त्रिवृद्बहिष्पवमानम् * । पञ्चदशान्न्याज्ज्यानि सप्तदशो माद्ध्यन्दिनः पवमान ऽएकविꣳशानि पृष्ठानि त्रिणवस्तृतीयः पवमानस्त्रयस्त्रिꣳशमग्निष्टोमसामैकविꣳशान्न्युक्क्थान्न्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिर्य्यद्द्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छत्रमतिरात्रो यज्ञस्तेनामुँल्लोकमृद्ध्नोति ॥ १० ॥ एकविꣳशतिः सवनीयाः पशवः । सर्व्व ऽआग्नेयास्तेषाꣳ समानङ्कर्म्मेत्त्यु हैक ऽआहुश्चतुर्विꣳशतिन्त्वेवैतान्न्गव्व्यानालभेत द्वादशभ्भ्यो देवताभ्भ्यो द्वादश मासाः सँवत्सरः सर्वꣳ सँवत्सरः सर्वमश्श्वमेधः सर्वस्याप्त्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥ †

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

* सामगानामुत्तरार्चिके तृचात्मकानि सूक्तान्याम्नातानि ( साम० उ० १. १. १–९ )। तत्र 'उपास्मै' इत्याद्यं सूक्तम् । 'देवि द्युतत्या' इति द्वितीयम् । 'पवमानस्य ते' इति तृतीयम् । प्रातःस्वनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गीयते । तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते । तत्र स्थितानामृचां पवमानार्थत्वाद्बहिःसम्बन्धाच्च ।

† शतम् ६७०० ।

[ प्रत्यृतुपश्वालम्भः ]

एतेन हेन्द्रोतो दैवापः शौनकः। जनमेजयम्पारिक्षितं य्याजयाञ्चकार तेनेष्ट्वा सर्वाम्पापकृत्याᳬं सर्वाम्ब्रह्महत्यामपजघान सर्वाᳬं ह वै पापकृत्याᳬं सर्वाम्ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते ॥ १ ॥ तदेतद्गाथयाभिगीतम्। आसन्दीवति धान्न्यादꣳ रुक्मिमणꣳ हरितस्रजम् ॥ अबद्ध्नादश्वꣳ सारङ्गन्देवेभ्यो जनमेजय ऽइति ॥ २ ॥ एते ऽएव पूर्वे ऽअहनी। ज्योतिरतिरात्रस्तेन भीमसेनमेते ऽएव पूर्वे ऽअहनी गौरतिरात्रस्तेनोग्ग्रसेनमेते ऽएव पूर्वे ऽअहनी ऽआयुरतिरात्रस्तेन श्श्रुतसेनमित्त्येते पारिक्षितीयास्तदेतद्गाथयाभिगीतम्पारिक्षिता यजमाना ऽअश्वमेधैः परोऽवरम् ॥ अजहुः कर्म्म पापकम्पुण्ण्याः पुण्ण्येन कर्म्मणेति ॥ ३ ॥ एते ऽएव पूर्वे ऽअहनी। अभिजिदतिरात्रस्तेन ह पर ऽआट्णार ऽईजे कौसल्ल्यो राजा तदेतद्गाथयाभिगीतमट्णारस्य परः पुत्रोऽश्वम्मेद्ध्यमबन्धयत् ॥ हैरण्ण्यनाभः कौसल्ल्यो दिशः पूर्णा अमꣳहतेति ॥ ४ ॥ एते ऽएव पूर्वे ऽअहनी। विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्ग्गहेणेज ऽऐक्ष्वाको राजा तस्म्मादेतदृषिणाभ्यनूक्त'मस्म्माकमत्र[1] पितरस्त ऽआसन्त्सप्त ऽऋषयो दौर्ग्गहे बद्ध्यमान' ऽइति ॥ ५ ॥ एते ऽएव पूर्वे ऽअहनी। महाव्रतमतिरात्रस्तेन ह मरुत्त ऽआविक्षित ऽईज ऽआयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः

(१) ऋ० सं० ३. ७. १८।

सभासदो बभूवुस्तदेतद्गाथयाभिगीतम्मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे ॥ आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासद ऽइति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते ॥ ६ ॥ एते ऽएव पूर्वे ऽअहनी । अप्तोर्यामोऽतिरात्रस्तेन हैतेन क्रैव्य ऽईजे पाञ्चालो राजा क्रिवय ऽइति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाभिगीतमश्वम्मेध्य-मालभत क्रिव्रीणामतिपूरुषः ॥ पाञ्चालः परिवक्रायाᳪं सहस्रशतदक्षिणमिति ॥ ७ ॥ अथ द्वितीयया । सहस्रमास-न्नयुता शता च पञ्चविᳪंशतिः ॥ दिक्कोदिक्कः पञ्चालाना-म्ब्राह्मणा या विभेजिर ऽइति ॥ ८ ॥ त्रिवृदग्निष्टोमः । पञ्चदश ऽउक्थ्यः सप्तदशन्तृतीयमहः सोक्थकमेकविᳪं-शः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरित्येषोऽनुष्टुप्सम्प-न्नस्तेन हैतेन ध्वसा द्वैतवन ऽईजे मात्स्यो राजा यत्रैत-द्द्वैतवनᳪं सरस्तदेतद्गाथयाभिगीतञ्चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयान् ॥ इन्द्राय व्वृत्रघ्नेऽबद्ध्नात्तस्माद्द्वैतवनᳪं सर ऽइति ॥ ९ ॥ चतुर्विᳪंशाः पवमानाः । त्रिवृदभ्या-वर्त्तश्चतुश्चत्वारिᳪंशाः पवमाना ऽएकविᳪंशमभ्यावर्त्तम-ष्टाचत्वारिᳪंशाः पवमानास्त्रयस्त्रिᳪंशमभ्यावर्त्तमाग्निष्टोम-सामाद्द्वात्रिᳪंशान्युक्थान्येकविᳪंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति ॥ १० ॥ एतद्विष्णोः क्रान्तम् । तेन हैतेन भरतो दौःषन्तिरीजे तेनेष्ट्वेमां व्व्याष्टिं व्व्यानशे येयम्भरतानान्तदेतद्गाथयाभिगीतमष्टासप्ततिम्भरतो दौः-

षन्तिऽर्षमुनामनु ॥ गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतꣳ हयानिति ॥ ११ ॥ अथ द्वितीयया । त्रयस्त्रिꣳशꣳ शतꣳ राजाऽश्वान्बद्ध्वाय मेध्यान् ॥ सौद्युम्निरत्यष्ठादन्यानमायान्मायवत्तर ऽइति ॥ १२ ॥ अथ तृतीयया । शकुन्तला नाडपित्यप्सरा भरतन्दधे ॥ परꣳ सहस्रानिन्द्रायाऽश्वान्मेध्यान्य ऽआहरद्विजित्य पृथिवीꣳ सर्वामिति ॥ १३ ॥ अथ चतुर्थ्या । महदद्य भरतस्य न पूर्वे नापरे जनाः ॥ दिवम्मर्त्य ऽइव बाहुभ्यान्नोदापुः पञ्च मानवा ऽइति ॥१४॥ एकविꣳशस्तोमेन ऽऋषभो याज्ञतुर ऽईजे श्विक्नानाꣳ राजा तदेतद्गाथयाभिगीतं ऽयाज्ञतुरे यजमाने ब्रह्माण ऽऋषभे जनाः ॥ अश्वमेधे धनँल्लब्ध्वा विभजन्ते स्म दक्षिणा ऽइति ॥ १५ ॥ त्रयस्त्रिꣳशस्तोमेन । शोणः सात्रासाह ऽईजे पाञ्चालो राजा तदेतद्गाथयाभिगीतꣳ सात्रासाहे[1] यजमानेऽश्वमेधेन तौर्वशाः ॥ उदीरते त्रयस्त्रिꣳशाः षट् सहस्राणि वर्म्मिणामिति ॥ १६ ॥ अथ द्वितीयया । षट् षट् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव ॥ उदीरते त्रयस्त्रिꣳशाः षट् सहस्राणि वर्म्मिणामिति ॥ १७॥ अथ तृतीयया । सात्रासाहे[2] यजमाने पाञ्चाले राज्ञि सुस्रजि ॥ अमाद्यदिन्द्रः सोमेनातृप्यन्ब्राह्मणा धनैरिति ॥ १८ ॥ गोविनतेन शतानीकः । सात्राजित ऽईजे काश्यस्याश्वमादाय ततो हैतदर्वाक्काशयोऽग्नीन्नादधत ऽआत्तसोमपीथाः स्म ऽइति वदन्तः ॥ १९ ॥ तस्य विधा चतुर्विꣳशाः पव-

( १–२ ) 'सात्रासहे' इति 'ग' 'ज' पुस्तकयोः पाठः ।

मानाः । त्रिवृदभ्यावर्त्तश्चतुश्चत्वारिꣳशाः पवमाना ऽएकविꣳशान्याज्यानि तृणवान्न्युक्थान्न्येकविꣳशानि पृष्ठानि षट्त्रिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाग्निष्टोमसामादेकविꣳशान्न्युक्थान्न्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ २० ॥ तदेतद्गाथयाभिगीतम् । शतानीकः समन्तासु मेध्यꣳ सात्राजितो हयम् ॥ आदत्त यज्ञङ्काशीनाम्भरतः सत्त्वतामिवेति ॥ २१ ॥ अथ द्वितीयया । श्वेतꣳ समन्तासु वशञ्चरन्तꣳ शतानीको धृतराष्ट्रस्य मेध्यम् ॥ आदाय सह्वा दशमास्यमश्वꣳ शतानीको गोविनतेन हेज ऽइति ॥ २२ ॥ अथ चतुर्त्थ्या । महदद्य भरतानान्न पूर्वे नापरे जनाः ॥ दिवम्मर्त्य ऽइव पक्षाभ्यान्नोदापुः सप्त मानवा ऽइति ॥ २३ ॥ अथातो दक्षिणानाम् । मध्यम्प्रति राष्ट्रस्य यदन्न्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्प्राची दिग्घोतुर्द्दक्षिणा ब्रह्मणः प्प्रतीच्चयद्ध्वर्योरुदीच्चयुद्गातुस्तदेव होतृका ऽअन्न्वाभक्ताः ॥ २४ ॥ उदयनीयायाꣳ सꣳस्थितायाम् । एकविꣳशतिं वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्वैश्वदेवीर्ब्बार्हस्पत्त्या ऽएतासान्देवतानामाप्त्यै तद्यद्बार्हस्पत्त्या ऽ[1]अन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तद्ब्रह्मण्येवान्ततः प्प्रतितिष्ठति ॥ २५ ॥ अथ यदेकविꣳशतिर्भवन्ति । एकविꣳशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएतामभिसम्पदम् ॥ २६ ॥ उदवसानीयायाꣳ

( १ ) 'ग' 'ज' पुस्तकयोः "०स्पत्यान्त्या" इति पाठः ।

सꣳस्थितायाम् *। चतस्रश्च जायाः कुमारीम्पञ्चमीञ्च-त्वारि च शतान्न्यनुचरीणां यथासमुदितन्दक्षिणान्ददाति ॥ २७ ॥ अथोत्तरꣳ सँवत्सरमृतुपशुभिर्यजते† । षड्भिरा-ग्नेयैर्वसन्ते षड्भिरैन्द्रैर्ग्ग्रीष्मे षड्भिः पार्ज्जन्न्यैर्वा मारुतैर्वा वर्षासु षड्भिर्म्मैत्रावरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षड्ऋतवः सँवत्सर ऽऋतुष्ष्वेव सँवत्सरे प्प्रतितिष्ठति षट्त्रिꣳशदेते पशवो भवन्ति षट्त्रिꣳ-शदक्षरा बृहती बृहत्यामधि स्वर्ग्गो लोकः प्प्रतिष्ठितस्तद्य-न्ततो बृहत्यैव चछन्दसा स्वर्ग्गे लोके प्प्रतितिष्ठति ॥२८॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥ १०६ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

—०—

[ पुरुषमेधः ]

पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयꣳ सर्वाणि भूतान्न्यहमेवेदꣳ सर्व्वꣳ स्यामिति स ऽएतम्पुरुषमेधम्प-ञ्चरात्रं यज्ञक्क्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वात्यतिष्ठ-त्सर्वाणि भूतानीदꣳ सर्वमभवदतितिष्ठति सर्वाणि भूता-नीदꣳ सर्वम्भवति य ऽएवं विद्वान्पुरुषमेधेन यजते यो वैतदेवं वेद ॥ १ ॥ तस्य त्रयोविꣳशतिर्द्दीक्षाः‡ । द्वा-

* 'उदवसानीयान्ते भार्या ददाति यथासंवादꣳ सानुचरीः' (का० श्रौ०सू०२०.८.२४) इति।

† तथा च सूत्रितं कात्यायनमहर्षिणा 'प्रत्यृतु पशूनालभते षट् षड् वसन्तायाग्नेयानैन्द्रा-न्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्राबार्हस्पत्यान्' ( का० श्रौ० सू० २०. ८. ३० ) इति।

‡ 'पुरुषमेधस्त्रयोविꣳशतिदीक्षोऽतिष्ठाकामस्य' ( का० श्रौ० सू० २१. १. १ ) इति।

दशोपसदः पञ्च सुत्याः स एष चत्वारिंशद्रात्रः सदीक्षोपसत्कश्चत्वारिंशदक्षरा विराट् तद्विराजमभिसम्पद्यते 'ततो विराडजायत विराजो ऽअधि पूरुष' [1] ऽइत्येषा वै सा विराडेतस्या ऽएवैतद्विराजो यज्ञम्पुरुषञ्जनयति ॥ २ ॥ ता वा ऽएताः । चतस्रो दशतो भवन्ति तद्यदेताश्चतस्रो दशतो भवन्त्येषाञ्चैव लोकानामाप्त्यै दिशाञ्चेममेव लोकम्प्रथमया दशताप्नुवन्नन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्या तथैवैतद्यजमान ऽइममेव लोकम्प्रथमया दशताप्नोत्यन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्यैतावद्वा ऽइदꣳ सर्वं यावदिमे च लोका दिशश्च सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ३ ॥ एकादशाग्नीषोमीयाः [2] † पशव ऽउपवसथे । तेषाꣳ समानङ्कर्मैकादश यूपा ऽएकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ४ ॥ ऐकादशिनाः सुत्यासु पशवो भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ५ ॥ येद्वैवकादशिना भवन्ति । एकादशिनी वा ऽइदꣳ सर्वम्प्रजापतिर्ह्येकादशिनी सर्वꣳ हि प्रजापतिः सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥ स वा ऽएष पुरुषमेधः पञ्चरात्रो यज्ञ-

---

( १ ) शु० य० सं० ३१. ५ ।

( २ ) 'ग' 'ज' पुस्तकयोः "एकादशाग्निषोमीयाः" इति पाठो दृश्यते, स तु प्रामादिक एव, 'ईदग्नेः सोमवरुणयोः' ( पा० ६. ३. २७ ) इति सूत्रेण—ईद्विधानात् ।

† का० श्रौ० सू० २१. १. ५ ।

क्रतुर्ब्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँव-त्सरो यत्किञ्च पञ्चविधमधिदेवतमद्ध्यात्मन्तदेनेन सर्व्व-माप्नोति ॥ ७ ॥ तस्याग्निष्टोमः प्प्रथममहर्ब्भवति । अथोक्क्थ्योऽथातिरात्रोऽथोक्क्थ्योऽथाग्निष्टोमः स वा ऽएष ऽउभयतोज्ज्योतिरुभयतऽउक्क्थ्यः ॥ ८ ॥ यवमद्ध्यः पञ्चरात्रो भवति । इमे वै लोकाः पुरुषमेध ऽउभयतो-ज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदित्येनामुतस्त-स्म्मादुभयतोज्ज्योतिरन्नमुक्क्थ्य ऽआत्मातिरात्रस्तद्यदेता ऽउ-क्क्थ्यावतिरात्रमभितो भवतस्तस्म्मादयमात्मान्नेन परि-वृढोऽथ यदेष वर्षिष्ठोऽतिरात्रोऽह्नाᳫं स मद्ध्ये तस्म्मा-द्यवमद्ध्यो युते ह वै द्विषन्तम्भ्रातृव्व्यमयमेवास्ति नास्य द्विषन्भ्रातृव्व्य ऽइत्याहुर्य्य ऽएवं वेद ॥ ९ ॥ तस्याय-मेव लोकः प्प्रथममहः । अयमस्य लोको वसन्त ऽऋ-तुर्य्यदूर्द्ध्वमस्म्माल्लोकादर्व्वाचीनमन्तरिक्षात्तद्द्वितीयमहस्तद्धस्य ग्ग्रीष्म्म ऽऋतुरन्तरिक्षमेवास्य मद्ध्यममहरन्तरिक्षमस्य वर्षाशरदावृतू यदूर्द्ध्वमन्तरिक्षादर्व्वाचीनन्दिवस्तच्चतुर्त्थमह-स्तद्धस्य हेमन्त ऽऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिशिर ऽऋतुरित्यधिदेवतम् ॥ १० ॥ अथाद्ध्यात्मम् । प्रतिष्ठैवास्य प्प्रथममहः प्प्रतिष्ठो ऽअस्य वसन्त ऽऋतुर्य्यदूर्द्ध्व-म्प्रतिष्ठाया ऽअवाचीनम्मद्ध्यात्तद्द्वितीयमहस्तद्धस्य ग्ग्रीष्म्म ऽऋतुर्म्मद्ध्यमेवास्य मद्ध्यममहर्म्मद्ध्यमस्य वर्षाशरदावृतू यदूर्द्ध्वम्मद्ध्यादवाचीनᳬ शीर्ष्णस्तच्चतुर्त्थमहस्तद्धस्य हेमन्त ऽऋतुः शिर ऽएवास्य पञ्चममहः शिरोऽस्य शिशिर ऽऋतु-

रेवमिमे च लोकाः सँव्वत्सरश्चात्मा च पुरुषमेधमभिसम्पद्यन्ते सर्वं व्वा ऽइमे लोकाः सर्वꣳ सँवत्सरः सर्वमात्मा सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ११ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—— ० ——

[ ब्राह्मणादीनामष्टाचत्वारिंशत्संख्यकानामग्निष्ठे यूपे नियोजनादि ]

अथ यस्म्मात्पुरुषमेधो नाम । इमे वै लोकाः पूरयमेव पुरुषो योऽयम्पवते सोऽस्याम्पुरि शेते तस्म्मात्पुरुषस्तस्य यदेषु लोकेष्ष्वन्नन्तदस्यान्नम्मेधस्तद्यदस्यैतदन्नम्मेधस्तस्म्मात्पुरुषमेधोऽथो यदस्मिन्मेद्ध्यान्पुरुषानालभते तस्म्माद्वेव पुरुषमेधः ॥ १ ॥ तान्वै मद्ध्यमेऽहन्नालभते । अन्तरिक्षं व्वै मद्ध्यममहरन्तरिक्षमु वै सर्व्वेषाम्भूतानामायतनमथो ऽअन्नं व्वा ऽएते पशव ऽउदरम्मद्ध्यममहरुदरे तदन्नन्दधाति ॥ २ ॥ तान्वै दश दशालभते । दशाक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै ॥ ३ ॥ एकादश दशत ऽआलभते । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानो मद्ध्यतः पाप्मानमपहते ॥ ४ ॥ अष्टाचत्वारिꣳशतम्मद्ध्यमे यूप ऽआलभते । अष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्म्मै पशूनवरुन्द्धे ॥५॥ एकादशैकादशेतरेषु । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानोऽभितः पाप्मानमपहते ॥ ६ ॥ अष्टा ऽउत्तमानालभते । अष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मैवैतदस्य

सर्व्वस्योत्तमङ्करोति तस्म्माद्ब्रह्मास्य सर्व्वस्योत्तममित्त्याहुः ॥ ७ ॥ ते वै प्प्राजापत्त्या भवन्ति । ब्ब्रह्म वै प्प्रजापति-ब्र्ब्राह्मो हि प्प्रजापतिस्तस्म्मात्प्राजापत्त्या भवन्ति ॥ ८ ॥ स वै पशूनुपाकरिष्ष्यन् * । एतास्तिस्त्रः सावित्त्री-राहुतीर्ज्जुहोति 'देव सवितस्तत्सवितुर्व्वरेण्ण्यं व्विश्श्वानि देव सवित'रिति सवितारम्प्रीणाति सोऽस्म्मै प्प्रीत ऽएतान्न्पु-रुषान्प्रसौति तेन प्प्रसूतानालभते ॥ ९ ॥ ब्रह्मणे ब्ब्राह्म-णमालभते । ब्ब्रह्म वै ब्ब्राह्मणो ब्ब्रह्मैव तद्ब्रह्मणा समर्द्ध-यति क्षत्राय राजन्न्यं क्षत्रं वै राजन्न्यः क्षत्रमेव तत्क्षत्त्रेण समर्द्धयति मरुद्भ्यो व्वैश्श्यं व्विशो वै मरुतो व्विशमेव तद्विशा समर्द्धयति तपसे शूद्रन्तपो वै शूद्रस्तप ऽएव तत्त-पसा समर्द्धयत्त्येवमेता देवता यथारूपम्पशुभिः समर्द्धयति ता ऽएनꣳ समृद्धाः समर्द्धयन्ति सर्व्वैः कामैः ॥ १० ॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्म्मिँस्त-त्तेजो दधात्त्याज्येन जुहोत्त्येतद्वै देवानाम्प्रियन्धाम यदाज्य-म्प्रियेणैवैनान्धाम्म्ना समर्द्धयति त ऽएनꣳ समृद्धाः सम-र्द्धयन्ति सर्व्वैः कामैः ॥ ११ ॥ नियुक्तान्पुरुषान् । ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति 'सहस्रशीर्षा[२] पुरुषः सहस्राक्षः सहस्रपा'दित्त्येतेन षोडशर्च्चेन षोडशकलं व्वा ऽइदꣳ सर्व्वꣳ सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्या ऽइत्थमसी-त्थमसीत्त्युपस्तौत्त्येवैनमेतन्महयत्त्येवाथो यथैष तथैनमेतदाह

* 'पशूनुपाकरिष्यन्नतिरात्रेण देव सवितरिति प्रत्यृचं जुहोति' ( का० श्रौ० सू० २१. १. ६ ) इति ।

( १ ) शु० य० सं० ३० । १-३ । ( २ ) शु० य० सं० ३१. १ ।

तत्पर्य्यग्निकृताः पशवो बभूवुरसंज्ञप्ताः ॥ १२ ॥ अथ हैनं वागभ्युवाद । पुरुष मा सन्तिष्ठिपो यदि सꣳस्थापयिष्यसि पुरुष ऽएव पुरुषमत्स्यतीति तान्पर्य्यग्निकृतानेवोदसृजत्तद्देवत्या ऽआहुतीरजुहोत्ताभिस्ता देवता ऽअप्रीणात्ता ऽएनम्प्रीता ऽअप्रीणन्त्सर्व्वैः कामैः ॥ १३ ॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधाति ॥ १४ ॥ ऐकादशिनैः सꣳस्थापयति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानो मद्ध्यतः पाप्मानमपहते ॥ १५ ॥ उदयनीयायाꣳ सꣳस्थितायाम् । एकादश वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्व्वैश्वदेवीर्ब्बार्हस्पत्या ऽएतासान्देवतानामाप्त्यै तद्यद्बार्हस्पत्या ऽअन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्येवान्ततः प्रतितिष्ठति ॥ १६ ॥ अथ यदेकादश भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानोऽन्ततः पाप्मानमपहते त्रैधातव्व्युदवसानीयासावेव बन्धुः ॥ १७ ॥ अथातो दक्षिणानाम् । मद्ध्यम्प्रति राष्ट्रस्य यदन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्सपुरुषम्प्राची दिग्घोतुर्द्दक्षिणा ब्रह्मणः प्रतीच्यद्ध्वर्य्योरुदीच्युद्गातुस्तदेव होतृका ऽअन्वाभक्ताः ॥१८॥ अथ यदि ब्राह्मणो यजेत । सर्व्ववेदसन्दद्यात्सर्व्वं वै ब्राह्मणः सर्व्वꣳ सर्व्ववेदसꣳ सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै

( १ ) 'ग' 'ज' पुस्तकयोः "मध्यतः" इति पाठः

॥१९॥ अथात्मन्नग्नी समारोह्य *। उत्तरनारायणेनादित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्प्रेयात्तदेव मनुष्येभ्यस्तिरो भवति यद्यु ग्ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणनैवादित्यमुपस्थाय † गृहेषु प्प्रत्यवस्येदथ तान्न्यज्ञक्रतूनाहरेत यानभ्याप्नुयात्स वा ऽएष न सर्वस्मा ऽअनुवक्तव्यः सर्वᳪ हि पुरुषमेधो नेत्सर्वस्मा ऽइव सर्वम्ब्रवाणीति यो न्न्वेव ज्ञातस्तस्मै ब्रूयादथ योऽनूचानोऽथ योऽस्य प्प्रियः स्यान्नेत्त्वेव सर्वस्मा ऽइव ॥ २० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

—— ० ——

[ सर्वमेधः ]

ब्रह्म वै स्वयम्भु तपोऽतप्प्यत । तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहम्भूतेष्वात्मानञ्जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानᳪ हुत्वा भूतानि चात्मनि सर्वेषाम्भूतानाᳫ श्रैष्ठ्यᳫ स्वाराज्यमाधिपत्यम्पर्य्यैत्तथैवैतद्यजमानः सर्वमेधे सर्वान्मेधान्हुत्वा [2]सर्वेषाम्भूतानाᳫ

---

* का० श्रौ० सू० २१. १. १७। 'गार्हपत्येऽधरारणिमनुप्रहृत्याहवनीय उत्तरारणिमात्मन्यग्नी समारोप्यारण्यं व्रजेत्' इति शाङ्खायनोक्तिः । तथा च मनुः 'आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' ( मनु० ६. ३८ ) इति ।

'त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्यवेयात्' 'ग्रामे वा विवत्सन्नरण्योः' ( का० श्रौ० सू० २१ । १ । १७–१८ ) इति कात्यायनोक्तिः ।

( १ ) "अद्भ्यः सम्भृतः" इत्यादिषण्णां कण्डिकानामुत्तरनारायणमिति संज्ञा ।

( २ ) 'ग' 'ज' पुस्तकयोः 'सर्व्वेषाम्भूतानाम्' इत्यस्य स्थाने 'सर्व्वाणि भूतानि' इति पाठः समुपलभ्यते ।

श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यम्पर्य्येति ॥ १ ॥ स वा ऽएष सर्वमेधो दशरात्रो यज्ञक्रतुर्ब्भवति । दशाक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नग्निम्परार्द्ध्यञ्चिनोति परमो वा ऽएष यज्ञक्रतूनां यत्सर्वमेधः परमेणैवैनम्परमताङ्गमयति ॥ २ ॥ तस्याग्निष्टुदग्निष्टोमः प्प्रथममहर्ब्भवति । अग्निर्वा ऽअग्निष्टुदग्निष्टोमोऽग्निमुखा ऽउ वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्याग्नेया ग्ग्रहा भवन्त्याग्नेय्यः पुरोरुचः सर्वमाग्नेयमसदिति ॥ ३ ॥ इन्द्रस्तुदुक्थ्यो द्वितीयमहर्ब्भवति । इन्द्रो वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्यैन्द्रा ग्ग्रहा भवन्त्यैन्द्र्यः पुरोरुचः सर्वमैन्द्रमसदिति ॥ ४ ॥ सूर्य्यस्तुदुक्थ्यस्तृतीयमहर्ब्भवति । सूर्य्यो वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै [1]तस्य सौर्य्या ग्ग्रहा भवन्ति सौर्य्यः पुरोरुचः सर्वꣳ सौर्य्यमसदिति ॥ ५ ॥ वैश्वदेवश्चतुर्थमहर्ब्भवति । विश्वे वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै त[2]स्य वैश्वदेवा ग्ग्रहा भवन्ति वैश्वदेव्यः पुरोरुचः सर्वं वैश्वदेवमसदिति ॥ ६ ॥ आश्वमेधिकम्मद्ध्यमम्पञ्चममहर्ब्भवति । तस्मिन्नश्वम्मेद्ध्यमालभतेऽश्वमेधस्यैवाप्त्यै ॥ ७ ॥ पौरुषमेधिकम्मद्ध्यमꣳ षष्ठमहर्ब्भवति । तस्मिन्मेद्ध्यान्पुरुषानालभते पुरुषमेधस्यैवाप्त्यै ॥ ८ ॥ अप्तोर्य्यामः सप्तममहर्ब्भवति । सर्वेषां यज्ञक्रतूनामाप्त्यै तस्मिन्त्सर्वान्मेद्ध्यानालभते यच्च प्प्राणि यच्चाप्प्राणं वपा वपावताञ्जुहोति

( १-२ ) 'ग' 'ज' पुस्तकयोः 'तस्य' इति पाठो नोपलभ्यते

त्त्रच ऽउत्कर्त्तमवपाकानाॐ संव्वृश्चमोषधिवनस्पतीनाम्प्र-
किरन्ति शुष्काणाञ्चार्द्राणाञ्चान्नमन्नञ्जुहोत्यन्नस्यान्नस्याप्त्यै
सर्वञ्जुहोति सर्वस्मै जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै
प्प्रातःसवने हुतासु व्वपास्वेवमेव तृतीयसवने हुतेषु
हविःषु ॥ ९ ॥ त्रिणवमष्टममहर्ब्भवति । व्वज्ज्रो वै त्रिणवो
व्वज्ज्रेण खलु वै क्षत्रॐ स्पृतन्तद्वज्ज्रेणैव क्षत्रॐ स्पृणोति
॥ १० ॥ त्रयस्त्रिꣳशन्नवममहर्ब्भवति । प्प्रतिष्ठा वै त्रय-
स्त्रिꣳशः प्प्रतिष्ठित्यै ॥ ११ ॥ विश्वजित्सर्वपृष्ठोऽति-
रात्रो दशममहर्ब्भवति । सर्वं वै विश्वजित्सर्वपृष्ठोऽति-
रात्रः सर्वꣳ सर्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १२ ॥
अथातो दक्षिणानाम् । मद्ध्यम्प्रति राष्ट्रस्य यदन्यद्ब्रा-
ह्मणस्य वित्तात्सभूमि सपुरुषम्प्राची दिग्घोतुर्द्दक्षिणा
ब्ब्रह्मणः प्प्रतीच्यद्ध्वर्य्योरुदीच्युद्गातुस्तदेव होतृका
ऽअन्वाभक्ताः ॥ १३ ॥ तेन हैतेन विश्वकर्म्मा भौवन
ऽईजे । तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवदति-
तिष्ठति सर्वाणि भूतानीदꣳ सर्वम्भवति य ऽएवं विद्वा-
न्त्सर्वमेधेन यजते यो वैतदेवं व्वेद ॥ १४ ॥ तꣳ ह कश्यपो
याजयाञ्चकार । तदपि भूमिः श्लोकञ्जगौ न मा मर्त्यः
कश्चन दातुमर्हति विश्वकर्म्मन्भौवन मन्द ऽआसिथ ॥
उपमङ्क्ष्यति स्या सलिलस्य मद्ध्ये मृषैष ते सङ्गरः
कश्यपायेति ॥ १५ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ ब्राह्मणचतुष्टयेन पितृमेधनिरूपणम् ]

* अथास्म्मै श्म्मशानङ्कुर्वन्ति । गृहान्न्वा प्प्रज्ञानं वा यो वै कश्च म्म्रियते स शवस्तस्म्मा ऽएतदन्नङ्करोति तस्म्माच्छवान्नꣳ शवान्नꣳ ह वै तच्छ्मशानमित्त्याचक्षते परोक्षꣳ श्मशा ऽउ हैव नाम पितॄणामत्तारस्ते हामुष्मिँल्लोकेऽकृतश्म्मशानस्य साधुकृत्त्यामुपदम्भयन्ति तेभ्य ऽएतदन्नङ्करोति तस्म्माच्छ्मशान्नꣳ श्मशान्नꣳ ह वै तच्छ्मशानमित्त्याचक्षते परोऽक्षम् ॥ १ ॥ तद्वै न क्षिप्प्रङ्कुर्य्यात् । नेन्नवमघङ्करवाणीति चिर ऽएव कुर्य्यादघमेव तत्तिरꣳ करोति यत्र समा नानु चन स्म्मरेयुरश्श्रुतिमेव तदघङ्गमयति यद्यनुस्म्मरेयुꣳ ॥ २ ॥ अयुङ्क्षेषु सँव्वत्त्सरेषु कुर्य्यात् । अयुङ्गꣳ हि पितॄणामेकनक्षत्र ऽएकनक्षत्रꣳ हि पितॄणाममावास्यायाममावास्या वा ऽएकनक्षत्रमेको हि यद्वेताꣳ रात्रिꣳ सर्व्वाणि भूतानि सँव्वसन्ति तेनो तङ्काममाप्नोति यꣳ सर्व्वेषु नक्षत्रेषु ॥ ३ ॥ शरदि कुर्य्यात् । स्वधा वै शरत्स्वधो वै पितॄणामन्नन्तदेनमन्ने स्वधायान्दधाति माघे वा मा नोऽघमभूदिति निदाघे वा नि नोऽघन्धीयाता ऽइति ॥४॥ [अर्धप्रपाठकः ॥५०॥] चतुꣳस्त्रक्ति । देवाश्चासुराश्चोभये प्प्राजापत्त्या दिक्ष्वस्प्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्व्यान्दिग्भ्योऽनुदन्त तेऽदिक्काꣳ पराभवँस्तस्म्माद्या दैव्व्यꣳ प्प्रजा-

* अत्राध्यायारम्भे 'अथास्मै कल्ल्याणङ्कुर्व्वन्ति' इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोरुपलभ्यते । स तु प्रामादिक एव प्रतीयते, प्राचीनतमहस्तलिखितपुस्तकेष्वदर्शनात् ।

श्चतुःस्रक्तीनि ताः श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यः प्प्राच्च्यास्त्वद्ये त्वत्परिमण्डलानि तेऽनुदन्त ह्येनान्दिग्भ्य ऽउभे दिशावन्तरेण विदधाति प्प्राचीञ्च दक्षिणाञ्चैत-स्याᳬह दिशि पितृलोकस्य द्वारन्द्वारैवैनम्पितृलोकम्प्रपाद-यति स्रक्तिभिर्द्दिक्षु प्प्रतितिष्ठतीतरेणात्मनावान्तरदिक्षु तदेनᳬ सर्व्वासु दिक्षु प्प्रतिष्ठापयति ॥ ५ ॥ अथातो भूमिजोषणस्य । उदीचीनप्प्रवणे करोत्युदीची वै मनु-ष्ष्याणान्दिक्तदेनम्मनुष्ष्यलोक ऽआभजत्येतद्ध वै पितरो मनुष्ष्यलोक ऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्प्रजा हास्य श्श्रेयसी भवति ॥ ६ ॥ दक्षिणाप्प्रवणे * कुर्य्या-दित्याहुः । दक्षिणाप्प्रवणो वै पितृलोकस्तदेनम्पितृलोक ऽआभजतीति न तथा कुर्य्यादामीवद्ध नाम तच्छ्मशान-करणङ्क्षिप्प्रे हैषामपरोऽनुप्प्रैति ॥ ७ ॥ दक्षिणाप्प्रवणस्य प्प्रत्त्यर्षे कुर्य्यादित्त्यु हैक ऽआहुः । तत्प्रत्युच्छ्रितमघम्भव-तीति नो ऽएव तथा कुर्य्याद्यद्वा ऽउदीचीनप्प्रवणे करोति तदेव प्प्रत्युच्छ्रितमघम्भवति ॥ ८ ॥ यस्यैव समस्य सतः । दक्षिणतः पुरस्तादाप ऽएत्त्य सᳬस्थायाप्प्रग्घ्नत्य ऽएता-न्दिशमभिनिष्प्पद्याक्षय्या ऽअपोऽपिपद्येरँस्तत्कुर्य्यादन्नं वा ऽआपोऽन्नाद्यमेवास्म्मा ऽएतत्परस्तात्प्रत्त्यग्दधात्त्यमृतमु वा ऽआप ऽएषो ह जीवानान्दिगन्तरेण सप्तऽर्षीणाञ्चो-दयनमादित्त्यस्य चास्तमयनममृतमेव तज्जीवेषु दधाति तद्धैतत्प्रतिमीवन्नाम श्म्मशानकरणञ्जीवेब्भ्यो हितं यद्वाव

* 'दक्षिणाप्रवण एके' ( का० श्रौ० सू० २१. ३. १७ ) ।

जीवेभ्यो हितन्तत्पितृभ्यः ॥ ९ ॥ कम्वति * कुर्य्यात् । कम्मेऽसदित्यथो शम्वति शम्मेऽसदिति नाधिपथङ्कुर्य्यान्नाकाशे नेदाविरघङ्करवाणीति ॥ १० ॥ गुहा सदवतापि स्यात् । तद्यद्गुहा भवत्यघमेव तद्गुहा करोत्यथ यदवताप्यसौ वा ऽआदित्यः पाप्मनोऽपहन्ता स ऽएवास्म्मात्पाप्मानमपहन्त्यथो ऽआदित्यज्योतिषमेवैनङ्करोति ॥११॥ न तस्म्मिन्न्कुर्य्यात् । यस्येत्थादनूकाशः स्याद्याचमानꣳ ह नाम तत्क्षिप्प्रे हैषामपरोऽनुप्प्रैति ॥ १२ ॥ चित्रम्पश्चात्स्यात् । प्रजा वै चित्रश्चित्रꣳ हास्य प्प्रजा भवति यदि चित्रन्न स्यादापः पश्चाद्वोत्तरतो वा स्युरापो ह्येव चित्रश्चित्रꣳ हैवास्य प्प्रजा भवति ॥ १३ ॥ ऊषरे करोति । रेतो वा ऽऊषाः प्प्रजननन्तदेनम्प्रजनन ऽआभजत्येतद्ध वै पितरः प्प्रजनन ऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्प्रजा हास्य श्श्रेयसी भवति ॥ १४ ॥ समूले समूलꣳ हि पितृणां वीरिणमिश्र[1] ऽएतद्धास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्बद्धं करोति ॥ १५ ॥ न भूमिपाशमभिविदध्यात् । न शरन्नाश्म्मगन्धान्नाध्याण्डान्न पृश्निपर्ण्णीन्नाश्श्वत्थस्यान्तिकङ्कुर्य्यान्न विभीतकस्य न तिल्वकस्य न स्फूर्ज्जकस्य न हरिद्रोर्न्न न्न्यग्ग्रोधस्य ये चान्न्ये पापनामानो मङ्गलोपेप्प्सया नाम्म्नामेव परिहाराय ॥ १६ ॥ अथात ऽआवृदेव । अग्निविधयाग्निचितः श्मशानङ्करोति

* 'शम्वति कम्वति वा' ( का० श्रौ० सू० २१. ३. २२. ) इति ।

( १ ) 'वीरिणमिश्रमेतद्धास्याः' इति 'ग' पुस्तके । 'वीरिणमिश्रमेतमेतद्धास्याः' इति च 'ज' पुस्तके ।

यद्वै यजमानोऽग्निञ्चिनुतेऽमुष्म्मै तल्लोकाय यज्ञेनात्मानꣳ संस्कुरुत ऽएतदु ह यज्ञियङ्कर्म्मासꣳस्थितमा श्मशानकरणात्तद्यदग्निविधयाग्निचितꣳ श्मशानङ्करोत्यग्निचित्यामेव तत्सꣳस्थापयति ॥१७॥ तद्वै न महत्कुर्य्यात् । नेन्महदघङ्करवाणीति यावानपक्षपुच्छोऽग्निस्तावत्कुर्य्यादित्यु हैक ऽआहुꣳ समानो ह्यस्यैष ऽआत्मा यथैवाग्नेस्तथेति ॥ १८ ॥ पुरुषमात्रन्त्वेव कुर्य्यात् । तथापरस्म्मा ऽअवकाशन्न करोति पश्चाद्वरीयꣳ प्प्रजा वै पश्चात्प्रजामेव तद्वरीयसीङ्कुरुत ऽउत्तरतो व्वर्षीयꣳ प्प्रजा वा ऽउत्तराꣳ प्प्रजामेव तद्वर्षीयसीङ्कुरुते तद्विधायापसलविसृष्टाभि स्फ्यन्याभिꣳ पर्य्यातनोत्यपसलवि पित्र्यꣳ हि कर्म्म ॥ १९ ॥ अथोद्धन्तवा ऽआह । स यावत्येव निवप्प्स्यन्त्स्यात्तावदुद्धन्न्यात्पुरुषमात्रन्त्वेवोद्धन्न्यात्तथापरस्म्मा ऽअवकाशन्न करोत्यथो ऽओषधिलोको वै पितर ऽओषधीनाꣳ ह मूलान्न्युपसर्प्पन्त्यथो नेदस्या ऽअन्तर्हितोऽसदिति ॥ २० ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

अन्तर्द्धायो हैके निवपन्ति । देवाश्चासुराश्चोभये प्प्राजापत्या ऽअस्मिँल्लोकेऽस्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्व्यानस्म्माल्लोकादनुदन्त तस्म्माद्या दैव्व्यꣳ प्प्रजा ऽअनन्तर्हितानि ताꣳ श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यꣳ प्प्राच्च्यास्त्वद्ये त्वदन्तर्हितानि ते चम्वान्त्वद्यस्मिँस्त्वत् ॥ १ ॥ अथैनत्परिश्रिद्भिꣳ परिश्रयति ।

या ऽएवामूः परिश्श्रितस्ता ऽएता यजुषा ताः परिश्श्रयति तूष्णीमिमा दैवश्चैव तत्पित्र्यश्च व्व्याकरोत्त्यपरिमिता-भिरपरिमितो ह्यसौ लोकः ॥ २ ॥ अथैनत्त्पलाशशाखया व्व्युदूहति * । यदेवादो व्व्युदूहनन्तदेत'दपेतो [1]यन्तु पणयोऽसुम्म्ना देवपीयव, ऽइति पणीनेवैतदसुम्म्नान्देव-पीयूनसुररक्षसान्यस्म्माल्लोकादपह'न्त्यस्य[2] लोकः सुतावत' ऽइति सुतवान्हि य ऽईजानो '[3]द्युभिरहोभिरक्तुभिर्व्यक्त'-मिति तदेनमृतुभिश्चाहोरात्रैश्च सलोकङ्करोति ॥ ३ ॥ '[4]यमो ददात्ववसानमस्म्मा' ऽइति । यमो ह वा ऽअस्या-मवसानस्येष्टे तमेवास्म्मा ऽअस्यामवसानं य्याचति तान्द-क्षिणोदस्यत्युदगितरान्दैवश्चैव तत्पित्र्यश्च व्व्याकरोति ॥ ४ ॥ अथ दक्षिणतः सीरं य्युनक्ति । उत्तरत ऽइत्यु हैक ऽआहुः स यथा कामयेत तथा कुर्य्याद्युक्तेति सम्प्रेष्याभिमन्त्रयते 'सवि[5]ता ते शरीरेब्भ्यः पृथिव्याँ-ल्लोकमिच्छत्वि'ति सवितैवास्यैतच्छरीरेब्भ्यः पृथिव्याँ-ल्लोकमिच्छति 'तस्म्मै [6]युज्यन्तामुस्रिया' ऽइत्येतस्म्मा ऽउ हि कर्म्मण ऽउस्रिया युज्यन्ते ॥ ५ ॥ षड्गवम्भवति । षडृतवः सँव्वत्सर ऽऋतुष्ष्वेवैनमेतत्सँव्वत्सरे प्प्रतिष्ठाया-म्प्रतिष्ठापयति तदपसलवि पर्य्याहृत्योत्तरतः प्प्रतीचीम्प्र-थमाᳪ सीताङ्कृषति[7] 'वायुः पुनात्वि'ति 'सविता

* का० श्रौ० सू० २१. १. ११ ।

( १ ) शु० य० सं० ३५. १ । ( २ ) शु० य० सं० ३५. १ । ( ३ ) शु० य० ३५. १ । ( ४ ) शु० य० सं० ३५. १ । ( ५ ) शु० य० सं० ३५. २ । ( ६ ) शु० य० सं० ३५. २ । ( ७ ) शु० य० सं० ३५. ३ । ( ८ ) शु० य० सं० ३५. ३ ।

पुनात्वि’ति जघनार्द्धेन दक्षिणा‘ग्नेर्भ्राजसे’ति दक्षिणार्द्धेन प्प्राचीॐ ‘सूर्य्यस्य वर्च्चसे’त्यग्ग्रेणोदीचीम् ॥ ६ ॥ *

चतस्रः सीता यजुषा कृषति †। तद्यच्चतसृषु दिक्ष्वन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥ ७ ॥ अथात्मानं विकृषति। तद्यदेव सँवत्सरेऽन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तूष्णीमपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ ८ ॥ अथैनद्विमुञ्चति। कृत्वा तत्कर्म्म यस्मै कर्म्मण ऽएनद्युङ्क्ते ‘विमुच्यन्तामुस्रिया’ ऽइत्येतस्मा ऽउ हि कर्म्मण ऽउस्रिया युज्यन्ते तद्दक्षिणोदस्यत्युदगितरद्देवश्चैव तत्पितृभ्यश्च व्याकरोति॥९॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

——०——

अथ सर्वौषधं वपति। यदेवादः सर्वौषधन्तदेतद्बह्वीभिस्तद्वपत्येकयेदन्देवश्चैव तत्पितृभ्यश्च व्याकरो‘त्यश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृते’ति ज्योग्जीवातुमेवैभ्य ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्प्रैति ॥ १ ॥ अथैनन्निवपति। इयं वै पृथिवी प्प्रतिष्ठास्यामेवैनमेतत्प्रतिष्ठायाम्प्रतिष्ठापयति पुरादित्यस्योदयात्तिर ऽइव वै पितरस्तिर ऽइव रात्रिस्तिर ऽएव तत्करोति यथा कुर्वतोऽभ्यु-

(१) शु० य० सं० ३५. १। (२) शु० य० सं० ३५. २

* अत्र शतम् ६८००।

† का० श्रौ० सू० २१. ४. १।

(३) शु० य० सं० ३५. ३।(४) शु० य० सं० ३५. ४।

दियात्तदेनमुभयोरहोरात्रयोः प्रतिष्ठापयति ॥२॥ 'सविता ते शरीराणि। मातुरुपस्थ ऽआवपत्वि'ति सवितैवास्यैतच्छरीराण्यस्यै पृथिव्यै मातुरुपस्थ ऽआवपति 'तस्यै पृथिवि शम्भवे'ति यथैवास्मा ऽइयꣳ शꣳ स्यादेवमेतदाह 'प्रजापतौ त्वा देवतायामुपोदके लोके निदधाम्यसा'विति नाम गृह्णात्ययं वै लोक ऽउपोदकस्तदेनम्प्रजापतौ देवतायामुपोदके लोके निदधाति ॥ ३ ॥ अथ कश्चिदाह। एतान्दिशमनवानन्त्सृत्वा कुम्भम्प्रक्षीयानपेक्षमाण ऽएहीति तत्र जपति 'परम्मृत्यो ऽअनु परेहि पन्थां यस्ते ऽअन्य ऽइतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरा'निति ज्योग्जीवातुमेवैभ्य ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्रैति ॥ ४ ॥ अथैनं यथाङ्कल्पयति। 'शं वातः शꣳ हि ते घृणिः शन्ते भवन्त्विष्टकाः॥ शन्ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन्' ॥ 'कल्पन्तान्ते दिशस्तुभ्यमापः शिवतमास्तुभ्यम्भवन्तु सिन्धवः ॥ अन्तरिक्षꣳ शिवन्तुभ्यङ्कल्पन्तान्ते दिशः सर्वा' ऽइत्येतदेवास्मै सर्वङ्कल्पयत्येतदस्मै शिवङ्करोति ॥ ५ ॥ अथ त्रयोदश पादमात्र्य ऽइष्टका ऽअलक्षणाः कृता भवन्ति। या ऽएवामूरग्नाविष्टकास्ता ऽएता यजुषा ता ऽउपदधाति तूष्णीमिमा दैवञ्चैव तत्पित्र्यञ्च व्याकरोति ॥ ६ ॥ त्रयोदश भवन्ति। त्रयोदश मासाः

(१) शु० य० सं० ३५.५। (२) शु० य० सं० ३५.५। (३) शु० य० सं० ३५.६। (४) शु० य० सं० ३५.७। (५) शु० य० सं० ३५.८। (६) शु० य० सं० ५१.९।

सँव्वत्सर ऽऋतुष्ष्वेवैनमेतत्सँव्वत्सरे प्प्रतिष्ठायाम्प्रतिष्ठापयति ॥ ७ ॥ पादमात्र्यो भवन्ति । प्प्रतिष्ठा वै पादः प्प्रतिष्ठामेवास्म्मै करोत्त्यलक्षणा भवन्ति तिर ऽइव वै पितरस्तिर ऽइव तद्यदलक्षणन्तिर ऽएव तत्तिरः करोति ॥ ८ ॥ तासामेकाम्मद्ध्ये प्प्राचीमुपदधाति । स ऽआत्मा तिस्रः पुरस्तान्मूर्द्धसꣳहितास्तच्छिरस्तिस्रो दक्षिणतः स दक्षिणः पक्षस्तिस्र ऽउत्तरतः स ऽउत्तरः पक्षस्तिस्रः पश्चात्तत्पुच्छꣳ सोऽस्यैष पक्षपुच्छवानात्मा यथैवाग्नेस्तथा ॥ ९ ॥ अथ प्प्रदरात्पुरीषमाहर्त्तवा ऽआह । एतद्धास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्बद्ध करोत्त्यस्मिन्नु हैकेऽवान्तरदेशे कर्षूङ्खात्वा ततोऽभ्याहारङ्कुर्वन्ति परिकृषन्त्यु हैके दक्षिणतः पश्चादुत्तरतस्ततोऽभ्याहारङ्कुर्वन्ति स यथा कामयेत तथा कुर्य्यात् ॥ १० ॥ तद्वै न महत्कुर्य्यात् । नेन्महदघङ्करवाणीति यावानुद्बाहुः पुरुषस्तावत्क्षत्रियस्य * कुर्य्यान्मुखदघ्नम्ब्राह्मणस्योपस्थदघ्नꣳ स्त्रिया ऽऊरुदघ्नं वैश्यस्याष्ठीवद्दघ्नꣳ शूद्रस्यैवं वीर्य्या ह्येत ऽइति ॥ ११ ॥ अधोजानु त्वेव कुर्य्यात् । तथापरस्म्मा ऽअवकाशन्न करोति तस्य क्रियमाणस्य तेजनीमुत्तरतो धारयन्ति प्प्रजा ह सा प्प्रजामेव तदुत्तरतो धारयन्ति तान्न न्यस्येद्धृत्वा वैनामूद्वा वा गृहेषूच्छ्रयेत्प्रजामेव तद्गृहेषूच्छ्रयति ॥ १२ ॥ कृत्वा यवान्न्वपति । अघम्मे यवयानित्त्यवकाभिः प्प्रच्छादयति कम्मेऽसदिति दर्भैः प्प्रच्छादयत्त्यरूक्षतायै ॥ १३ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

अथैनञ्छङ्कुभिः परिणिहन्ति । पालाशम्पुरस्ताद्ब्रह्म वै पलाशो ब्रह्मपुरोगवमेवैनꣳ स्वर्गँल्लोकङ्गमयति शमीमयमुत्तरतः शम्मेऽसदिति वारणम्पश्चादघम्मे वारयाता ऽइति व्वृत्रशङ्कुन्दक्षिणतोऽघस्यैवानत्ययाय ॥ १ ॥ अथ दक्षिणतः परिवक्के खनन्ति । ते क्षीरेण चोदकेन च पूरयन्ति ते हैनममुष्मिँल्लोकेऽक्षिते कुल्ये ऽउपधावतः सप्तोत्तरतस्ता ऽउदकेन पूरयन्ति न ह वै सप्त स्रवन्तीरघमत्येतुमर्हत्यघस्यैवानत्ययाय ॥ २ ॥ अश्मनस्त्रींस्त्रीन्प्रकिरन्ति । ता ऽअभ्युत्तरन्त्य[1]'श्मन्न्वती रीयते सꣳरभद्ध्वमुत्तिष्ठत प्प्रतरता सखायः ॥ अत्रा जहीमोऽशिवा ये ऽअसञ्छिवान्न्वयमुत्तरेमाभि व्वाजा'निति यथैव यजुस्तथा बन्धुः ॥ ३ ॥ अपामार्ग्गैरपमृजते । अघमेव तदुपमृजतेऽ'[2]पाघमप किल्विषमप कृत्यामपो रपः ॥ अपामार्ग्ग त्वमस्म्मदप दुःष्वप्न्यꣳ सुवे'ति यथैव यजुस्तथा बन्धुः ॥ ४ ॥ यत्रोदकम्भवति तत्स्नान्ति । '[3]सुमित्त्रिया न ऽआप ऽओषधयः सन्त्वि'त्यञ्जलिनाप ऽउपाचति व्वज्जो वा ऽआपो व्वज्जेणैवैतन्मित्रधेयङ्कुरुते 'दुर्म्मित्त्रियास्तस्म्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयन्द्विष्म्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ५ ॥ स यदि स्थावरा ऽआपो भवन्ति । स्थापयन्त्येषाम्पाप्म्मानमथ यदि व्वहन्ति व्वहन्त्येवैषाम्पाप्म्मानꣳ स्नात्वाहतानि व्वा-

* 'उरः क्षत्रियस्योर्ध्वबाहु वा' ( का० श्रौ० सू० २१. ४. १३ ) इति ।

( १ ) शु० य० सं० ३५. १० । ( २ ) शु० य० सं० ३५. ११ । ( ३ ) शु० य० सं० ३५. १२ । ( ४ ) शु० य० सं० ३५. १२ ।

साꣳसि परिधायानडुहः पुच्छमन्वारभ्यायन्त्याग्नेयो वा ऽअनड्वानग्निमुखा ऽएव तत्पितृलोकाज्जीवलोकमभ्यायन्त्यथो ऽअग्निर्वै पथोऽतिवोढा स ऽएनानतिवहति ॥ ६ ॥ 'उद्वयन्तमसस्परी'[1]ति । एतामृचञ्जपन्तो यन्ति तत्तमसः पितृलोकादादित्यञ्ज्योतिरभ्यायन्ति तेभ्य ऽआगतेभ्य ऽआञ्जनाभ्यञ्जने प्रयच्छन्त्येष ह मानुषोऽलङ्कारस्तेनैव तम्मृत्युमन्तर्दधते ॥ ७ ॥ अथ गृहेष्वग्निꣳ समाधाय । वारणान्परिधीन्परिधाय वारणेन स्रुवेणाग्नय ऽआयुष्मत ऽआहुतिञ्जुहोत्यग्निर्वा ऽआयुष्मानायुष ऽईष्टे तमेवैभ्य ऽआयुर्याचत्य'[2]ग्न ऽआयूꣳषि पवस' ऽइति पुरोऽनुवाक्याभाजनम् ॥ ८ ॥ अथ जुहोति । '[3]आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ॥ घृतम्पीत्वा मधु चारु गव्यम्पितेव पुत्रमभिरक्षतादिमान्त्स्वाहे'ति यथैवैनानभिरक्षेद्यथाभिगोपायेदेवमेतदाह ॥ ९ ॥ तस्य पुराणोऽनड्वान्दक्षिणा * । पुराणा यवाः पुराण्यासन्दी सोपबर्हणैषा न्वादिष्टा दक्षिणा कामं यथाश्रद्धम्भूयसीन्दद्यादिति न्वग्निचितः ॥ १० ॥ अथानग्निचितः । एतदेव भूमिजोषणमेतत्समानङ्कर्म्म यदन्यदग्निकर्म्मणः कुर्यादाहिताग्नेः शर्करा ऽइत्यु हैक ऽआहुर्या ऽएवामूरग्न्याधेयशर्करास्ता ऽएता ऽइति न कुर्यादित्येक ऽईश्वरो हैता ऽअनग्निचितꣳ सन्तप्तोरिति स यथा कामयेत तथा

(१) शु० य० सं० ३५. १४। (२) शु० य० सं० ३५. १६। (३) शु० य० सं० ३५. १७।

* तथा च कात्यायनः "आसन्दी सोपधाना दक्षिणाऽनड्वान्यवाश्च सर्वं पुराणम् ( का० श्रौ० सू० २१. ४. २९ ) इति।

कुर्य्यात् ॥ ११ ॥ मर्य्यादाया ऽएव लोष्टमाहृत्य । अन्तरेण निदधाती'मञ्जीवेभ्यः[1] परिधिन्दधामि मैषान्नु गादपरो ऽअर्थमेतम् ॥ शतञ्जीवन्तु शरदः पुरूचीरन्तर्म्मृत्युन्दधताम्पर्वतेने'ति जीवेभ्यश्चैवैताम्पितृभ्यश्च मर्य्यादाङ्करोत्यसम्भेदाय तस्मादु हैतज्जीवाश्च पितरश्च न सन्दृश्यन्ते ॥ १२ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१००॥

इत्यऽष्टमोऽध्यायः ॥ ८ ॥

अश्वमेधनाम त्रयोदशं काण्डं † समाप्तम् ॥ १३ ॥



( १ ) शु० य० सं० ३५. १५।

† अस्मिन्काण्डे कण्डिकासंख्या ४३२।

# अथोपनिषन्नाम* चतुर्दशं काण्डम्

—— ० ——

काण्डेऽस्मिन्प्रतिपाद्या विषयाः—घर्मः, प्रवर्ग्यः, महावीरः, प्रवर्ग्योत्सादनम्' प्रवर्ग्यकर्तृनियमः, बृहदारण्यकम्, काम्यहवनादि, गर्भाधानादि, जातकर्म, वंशब्राह्मणमिति ।

[ घर्मोपक्रमः ]

॥ ॐ ॥ देवा ह वै सत्रन्निषेदुः । अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवा ऽअन्यत्रैवाश्विभ्याम् ॥ १ ॥ तेषाङ्कुरुक्षेत्रन्देवयजनमास । तस्मादाहुः कुरुक्षेत्रन्देवानान्देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यत ऽइदन्देवयजनमिति तद्धि देवानान्देवयजनम् ॥ २ ॥ त ऽआसत । श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति तथो ऽएवेमे सत्रमासते ये[1] सत्रमासते श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति ॥३॥ ते होचुः । यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचम्पूर्वोऽवगच्छात्स नः श्रेष्ठोऽसत्तदु नः सर्वेषाꣳ सहेति तथेति ॥ ४ ॥ तद्विष्णुः प्रथमः प्राप । स देवानाꣳ श्रेष्ठोऽभवत्तस्मादाहुर्विष्णुर्देवानाꣳ श्रेष्ठ ऽइति ॥ ५ ॥ स यः स विष्णुर्यज्ञः सः । स यः स यज्ञोऽसौ स ऽआदित्यस्तद्धेदं यशो विष्णुर्न शशाक सँयन्तुन्तदिद-

* उपनिषच्छब्देन मुख्यया वृत्त्या ब्रह्मविद्यैवोच्यते । उप समीपस्थं प्रत्यगात्मैकत्वं नीति निश्चितं सत् तत्पराणं सहेतुं संसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्थकत्वेनोपचारादुपनिषदित्युच्यते ।

(१) "ये सत्रमासते" इति पाठः 'ग' 'ज' पुस्तकयोर्न दृश्यते ।

मप्प्येतर्हि नैव सर्व्वं ऽइव यशः शक्क्नोति सँय्यन्तुम् ॥ ६ ॥ स तिस्रधन्वमादायापचक्राम । स धनुरात्न्यां शिर ऽउपस्तभ्य तस्थौ तन्देवा ऽअनभिधृष्णुवन्तः समन्तम्परिण्यविशन्त ॥ ७ ॥ ता ह व्वम्म्र्य ऽऊचुः । इमा वै व्वम्म्रयो यदुपदीका योऽस्य ज्यामप्प्यद्यारिकमस्म्मै प्प्रयच्छेतेत्यन्नाद्यमस्म्मै प्प्रयच्छेमापि धन्वन्नपोऽधिगच्छेत्तथास्म्मै सर्व्वमन्नाद्यम्प्रयच्छेमेति तथेति ॥ ८ ॥ तस्योपपरासृत्य । ज्यामपिजक्षुस्तस्याञ्छिन्नायान्धनुरात्न्यौ व्विष्फुरन्त्यौ व्विष्णोः शिरः प्प्रचिच्छिदतुः ॥ ९ ॥ तद्घृङ्ङिति पपात । तत्पतित्वासावादित्योऽभवदथेतरः प्प्राङेव प्प्रावृज्यत तद्यद्घृङ्ङित्यपतत्तस्म्माद्घर्म्मोऽथ यत्प्रावृज्यत तस्म्मात्प्रवर्ग्यः ॥ १० ॥ ते देवा ऽअब्ब्रुवन् । महान्बत नो व्वीरोऽपादीति तस्म्मान्महावीरस्तस्य यो रसो व्व्यक्षरत्तम्पाणिभिः सम्ममृजुस्तस्म्मात्सम्राट् ॥ ११ ॥ तन्देवा ऽअभ्यमृज्यन्त । यथा व्वित्तिं व्वेत्स्यमाना ऽएवन्तमिन्द्रः प्प्रथमः प्प्राप तमन्वङ्गमनुन्यपद्यत तम्पर्य्यगृह्णात्तम्परिगृह्येदं य्यशोऽभवद्यदिदमिन्द्रो यशो यशो ह भवति य ऽएवं व्वेद ॥ १२ ॥ स ऽउ ऽएव मखः स व्विष्णुः । तत ऽइन्द्रो मखवानभवन्मखवान्ह वै तम्मघवानित्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवाः ॥ १३ ॥ ताभ्यो व्वम्म्रीभ्योऽन्नाद्यम्प्रायच्छन् । आपो वै सर्व्वमन्नन्ताभिर्हीदमभिक्क्नूयमिवादन्ति यदिदङ्किञ्चादन्ति[1] ॥ १४ ॥ अथेमं व्विष्णुं य्यज्ञन्त्रेधा व्व्यभजन्त ।

(१) 'ग' 'ज' पुस्तकयोः 'किम्वदन्ति" इति ।

वसवः प्रातःसवनꣳ रुद्रा माध्यन्दिनꣳ सवनमादित्या-स्तृतीयसवनम् ॥ १५ ॥ अग्निः प्रातःसवनम् । इन्द्रो माध्यन्दिनꣳ सवनं विश्वे देवास्तृतीयसवनम् ॥ १६ ॥ गायत्री प्रातःसवनम् । त्रिष्टुम्माध्यन्दिनꣳ सवनञ्जगती तृतीयसवनन्तेनापशीर्ष्णा यज्ञेन देवा ऽअर्चन्तः श्राम्यन्तश्चेरुः ॥ १७ ॥ तद्ध्यङ् ह वा ऽआथर्वणः । एतꣳ शुक्रमेतं यज्ञं विदाञ्चकार यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥ स हेन्द्रेणोक्त ऽआस । एतञ्चेदन्यस्मा ऽअनुब्रूयास्तत ऽएव ते शिरश्छिन्द्यामिति ॥ १९ ॥ तदु हाश्विनोरनुश्रुतमास । दध्यङ्ङु ह वा ऽआथर्वण ऽएतꣳ शुक्रमेतं यज्ञं वेद यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २० ॥ तौ हेत्योचतुः । उप त्वायावेति किमनुवक्ष्यमाणावित्येतꣳ शुक्रमेतं यज्ञं यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २१ ॥ स होवाच । इन्द्रेण वा ऽउक्तोऽस्म्येतञ्चेदन्यस्मा ऽअनुब्रूयास्तत ऽएव ते शिरश्छिन्द्यामिति तस्माद्वै बिभेमि यद्वै मे स शिरो न ·च्छिन्द्यान्न वामुपनेष्य ऽइति ॥ २२ ॥ तौ होचतुः । आवान्त्वा तस्मात्त्रास्यावहे[2] ऽइति कथम्मा त्रास्येथे ऽइति यदा नौ ऽउपनेष्यसेऽथ ते शिरश्छित्त्वान्यत्रापनिधास्यावोऽथाश्वस्य शिर ऽआहृत्य तत्ते प्रतिधास्यावस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः

(१) "भवति" इति 'ग' 'ज' पुस्तकयोः । (२) 'ग' 'ज' पुस्तकयोः "व्वहे" इति ।

शिरश्छेत्स्यत्त्यथ ते स्वꣳ शिर ऽआहृत्य तत्ते प्प्रतिधास्याव ऽइति तथेति ॥२३॥ तौ ह्रोपनिन्न्ये। तौ यदोपनिन्न्येऽथास्य शिरश्छित्त्वान्न्यत्त्रापनिदधतुरथाश्श्वस्य शिर ऽआहृत्य तद्धास्य प्प्रतिदधतुस्तेन हाब्भ्यामनूवाच स यदाब्भ्यामनूवाचा-थास्य तदिन्द्रः शिरश्चिच्छेद्दाथास्य स्वꣳ शिर ऽआहृत्य तद्धास्य प्प्रतिदधतुः ॥२४॥ तस्म्मादेतदृषिणाब्भ्यनूक्तम् । दद्ध्यङ् ह यन्मद्ध्वाथर्व्वणो वामश्श्वस्य शीर्ष्णा प्प्र यदी-मुवाचेत्त्ययतन्तदुवाचेति हैव तदुक्तम् ॥ २५ ॥ तन्न सर्व्वस्म्मा ऽअनुब्ब्रूयात् । एतस्यꣳ हि तदुथो नेन्म ऽइन्द्रः शिरश्छि-नदिति यो न्वेव ज्ञातस्तस्म्मै ब्ब्रूयादुथ योऽनूचानोऽथ योऽस्य प्प्रियः स्यान्न त्त्वेव सर्व्वस्म्मा ऽइव ॥ २६ ॥ सँव-त्त्सरवासिनेऽनुब्ब्रूयात् । एष वै सँवत्त्सरो य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्सँवत्त्सरवासिनेऽ-नुब्ब्रूयात् ॥ २७ ॥ तिस्रो रात्त्रीर्व्रतञ्चरति । त्त्रयो वा ऽऋ-तवः सँवत्त्सरस्य सँवत्त्सर ऽएष य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्तिस्रो रात्त्रीर्व्रतञ्चरति ॥२८॥ तप्प्तमाचामति । तपस्व्यनुब्ब्रवा ऽइत्त्यमाꣳसाश्श्य-नुब्ब्रूते तपस्व्यनुब्ब्रवा ऽइति ॥ २९ ॥ अमृन्न्मयपायी । अस्ति वा ऽअस्याꣳ सꣳसृष्टमिव यदस्यामनृतं व्वदति तस्म्मादमृन्मयपायी ॥ ३० ॥ अशूद्रोच्छिष्टी । एष वै घर्म्मो य ऽएष तपति सैषा श्श्रीः सत्त्यञ्ज्योतिरनृतꣳ स्त्री शूद्रः श्वा कृष्ण्णः शकुनिस्तानि न प्प्रेक्षेत नेच्छ्रियञ्च पाप्प्मानञ्च नेज्ज्योतिश्च तमश्च नेत्सत्त्यानृते सꣳसृजा-

नीति ॥ ३१ ॥ अथैष वाव यशः । य ऽएष तपति तद्य-त्तदादित्यो यशो यज्ञो हैव तद्यशस्तद्यत्तद्यज्ञो यशो यज-मानो हैव तद्यशस्तद्यत्तद्यजमानो यश ऽऋत्विजो हैव तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्या-मस्मै दक्षिणामानयेयुर्न्न तां[१] सद्योऽन्यस्मा ऽअति-दिशेन्नेद्यन्मेदं यश आगँस्तत्सद्योऽन्यस्मा ऽअतिदिशा-नीति श्वो वैव भूते द्व्यहे वा तदात्मन्न्येवैतद्यशः कृत्वा यदेव तद्भवति तस्य ददाति हिरण्यङ्गां वासोऽश्वं वा ॥ ३२ ॥ अथैतद्व्रतं[२] । आयुरेतज्ज्योतिः प्प्रविशति य ऽएत-मनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या नातपति प्प्रच्छादयेत नेदेतस्मात्तिरोऽसानीति नातपति निष्ठी-वेन्नेदेतमभिनिष्ठीवानीति नातपति प्प्रस्रावयेत नेदेतमभि-प्प्रस्रावया ऽइति यावद्वा ऽएष ऽआतपति तावानेष नेदेत-मेतौर्हिनसानीत्यवज्योत्य रात्रावश्नीयात्तदेतस्य[३] रूपङ्क्रियते य ऽएष तपति तदु होवाचासुरिरेकः ह वै देवा व्रतञ्च-रन्ति यत्सत्यन्तस्मादु सत्यमेव वदेत् ॥ ३३ ॥

प्रथमाध्याये प्रथमं ब्रह्मणम् ॥ १ ॥

——०——

[ प्रवर्ग्यः * ]

स वै सम्भारान्त्सम्भरति । स यद्वा ऽएनानित्थाच्चे-त्थाच्च सम्भरति तत्सम्भाराणाᳩं सम्भारत्वᳪ स वै यत्र

( १ ) "ता ऽइत्सद्यो०" इति 'ग' 'ज' पुस्तकयोः ।

( २ ) "अथैतद्वा" इति 'ग' 'ज' पुस्तकयोः ।

( ३ ) "०तदस्य" इति 'ग' 'ज' पुस्तकयोः पाठः ।

* तप्ते घृते पयःप्रक्षेपादिना प्रणीयते 'घर्मः' खाद्यविशेषः । स एव प्रक्षेपः प्रवृञ्जन-

यत्र यज्ञस्य न्न्यक्कन्ततस्ततꣳ सम्भरति ॥ १ ॥ कृष्णाजिने[1] सम्भरति । यज्ञो वै कृष्णाजिनं य्यज्ञ ऽएवैनमेतत्सम्भरति लोमतश्छन्दाꣳसि वै लोमानि च्छन्दꣳस्वेवैनमेतत्सम्भरत्युत्तरत ऽउदीची हि मनुष्याणान्दिक्प्राचीनग्ग्रीवे तद्धि देवत्रा ॥ २ ॥ अब्भ्र्या । व्वज्रो वा ऽअभ्रिर्व्वीर्य्यं वै व्वज्रो व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ४ ॥ अथो वैकङ्कती । प्प्रजापतिर्य्याम्प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्न्यमृष्ट ततो व्विकङ्कतꣳ समभवद्यज्ञो वा ऽआहुतिर्य्यज्ञो व्विकङ्कतो यज्ञेनैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ अरत्निमात्री भवति । बाहुर्व्वा ऽअरत्निर्ब्बाहुनो वै व्वीर्य्यङ्क्रियते व्वीर्य्यसम्मितैव तद्भवति व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ६ ॥ तामादत्ते । 'देवस्य[2] त्वा सवितुꣳ प्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्याम्पूष्णो हस्ताब्भ्यामाददे नारिरसी'त्त्यसावेव बन्धुꣳ ॥ ७ ॥ ताꣳ सव्व्ये पाणौ कृत्वा । दक्षिणेनाभिमृश्श्य जपति 'युञ्जते[3] मन ऽउत युञ्जते धियो व्विप्प्रा व्विप्प्रस्य बृहतो व्विपश्चितꣳ । वि होत्रा दधे वयुनाविदेक ऽइन्न्मही देवस्य सवितुꣳ परिष्टुति'रित्त्यसावेव बन्धुꣳ ॥ ८ ॥ अथ मृत्पिण्डं

मुच्यते । तादृशप्रवृञ्जननिबन्धनैवास्य कर्मणः समाख्या प्रवर्ग्य इति । तत्र घर्मपाकाय मृन्निर्मित उलूखलाकारपात्रविशेषो महावीरः । गौण्या तु वृत्त्या घर्मः, प्रवर्ग्यः, महावीरः' इति त्रीण्येव पदानि समानार्थानीति विवेकः । (तै० साय० भा० ५. ११. १. । शत० ब्रा० १४. १. १-११)

(१) 'ग' 'ज' पुस्तकयोः '०जिनꣳ स०'' इति पाठः ।

(२) शु० य० सं० ३७. १ । (३) शु० य० सं० ३७. २ ।

परिगृह्णाति *। अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतो 'देवी द्यावापृथिवी' इति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स इमे द्यावापृथिवी अगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति तस्मादाह देवी द्यावापृथिवी इति 'मखस्य वामद्य शिरो राध्यास'मिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह 'देवयजने पृथिव्या' इति देवयजने हि पृथिव्यै सम्भरति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' इति यज्ञो वै मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्ण इत्येवैतदाह ॥ ९ ॥ अथ वल्मीकवपाम्। 'देव्यो वम्र्य' इत्येता वा एतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'भूतस्य प्रथमजा' इतीयं वै पृथिवी भूतस्य प्रथमजा तदनयैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'मखस्य वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुः ॥ १० ॥ अथ वराहविहतम्। 'इयत्यग्र आसी'दितीयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष इति वराह उज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नङ्करोति 'मखस्य तेऽद्य शिरो राध्यासन्देवयजने

* 'मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी' ( का० श्रौ० सू० २६. १. ४ ) इति।

(१) शु० य० सं० ३७. ३। (२) शु० य० सं० ३७. ३। (३) शु० य० सं० ३७. ३। (४) शु० य० सं० ३७. ३। ( ५ ) शु० य० सं० ३७. ४। ( ६ ) शु० य० सं० ३७. ४। ( ७ ) शु० य० सं० ३७. ४। ( ८ ) शु० य० सं० ३७. ५। ( ९ ) शु० य० सं० ३७. ५।

पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥ ११ ॥ अथादारान् । 'इन्द्रस्यौज स्त्थे'ति यत्र वा ऽएनमिन्द्र ऽओजसा पर्य्यगृह्णात्तदस्य परिगृहीतस्य रसो व्व्यक्षरत्स पूयन्निवाशेत सोऽब्रवीदादृतोर्वैव बत म ऽएष रसोऽस्तौषीदिति तस्म्मादादारा ऽअथ यत्पूयन्निवाशेत तस्म्मात्पूतीकास्तस्म्मादग्नावाहुतिरिवाभ्याहिता ज्वलन्ति तस्म्मादु सुरभयो यज्ञस्य हि रसात्सम्भूता ऽअथ यदे-नन्तदिन्द्र ऽओजसा पर्य्यगृह्णात्तस्म्मादाहेन्द्रस्यौज स्त्थेति 'मखस्य वोऽद्य शिरो राद्ध्यासन्देवयजने पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥१२॥ अथाजा-क्षीरम् । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्ततोऽजा समभवत्त-यैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥१३॥ तान्न्वा ऽएतान्पञ्च सम्भारात्सम्भरति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्य-स्तदेतमेवैतत्प्रीणाति तान्त्सम्भृतानभिमृशति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥१४॥ अथोत्तरतः परिश्रितम्भवति । तदभिप्प्रयन्तो जपन्ति 'प्प्रैतु ब्ब्रह्मण-स्प्पतिरि'त्त्येष वै ब्ब्रह्मणस्प्पतिर्य्य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह प्प्रैतु ब्ब्रह्मण-स्प्पतिरिति 'प्प्र देव्व्येतु सूनृते'ति देवी ह्येषा सूनृता-

(१) शु० य० सं० ३७. ६ । (२) शु० य० सं० ३७. ६ । (३) शु० य० सं० ३७. ६ । (४) शु० य० सं० ३७. ६ । (५) शु० य० सं० ३७. ७ । (६) शु० य० सं० ३७. ७ ।

'च्छो वीरन्नर्ष्यम्पङ्क्ति राधस'मित्युपस्तौत्येवैनमेतन्महयत्येव 'देवाँ यज्ञन्नयन्तु न' ऽइति सर्वानेवास्मा ऽएतद्देवानभिगोप्तृन्करोति ॥ १५ ॥ परिश्रितम्भवति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाᳬसि नाष्ट्रा न हन्युरिति तस्मा ऽएताम्पुरम्पर्यश्रयँस्तथैवास्मा ऽअय मेताम्पुरम्परिश्रयति ॥ १६ ॥ अथ खरे सादयति । 'मखायँ त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णे ऽइत्यसावेव बन्धुरथ मृत्पिण्डमुपादाय महावीरङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः प्रादेशमात्रम्प्रादेशमात्रमिव हि शिरो मद्ध्ये सङ्गृहीतम्मद्ध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलम्मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधाति तन्निष्ठितमभिमृशति 'मखस्य शिरोऽसी'ति मखस्य ह्येतत्सौम्यस्य शिर ऽएवमितरौ तूष्णीम्पिन्वने तूष्णीᳬ रौहिणकपाले ॥ १७ ॥ प्रजापतिर्वा ऽएष यज्ञो भवति । उभयं वा ऽएतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तम्परिमितᳬ रूपन्तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितᳬ रूपन्तदस्य तेन संस्करोति स ह वा ऽएतᳬ सर्वङ्कृत्स्नम्प्रजापतिᳬ संस्करोति य ऽएवं विद्वानेतदेवङ्करोत्यथोपशयायै पिण्डम्परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥ अथ गवेधुकाभिर्हिन्वति ।

(१) शु० य० सं० ३७. ७। (२) शु० य० सं० ३७. ७। (३) शु० य० ३७. ७। (४) शु० य० सं० ३७. ८। (५) शु० य० सं० ३७. ८।

यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्न्वने तूष्णीᳬं रौहिणकपाले ॥ १९ ॥ अथैनान्धूपयति। 'अश्वस्य त्वा वृष्णः शक्ना धूपयामी'ति वृषा वा ऽअश्वो वीर्यं वै वृषा वीर्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्न्वने तूष्णीᳬं रौहिणकपाले ॥२०॥ अथैनाञ्छ्रपयति। श्रृतᳬं हि देवानामिष्टकाभिः श्रपयन्त्येता वा ऽएतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति तदु येनैव सुश्रृताः स्युस्तेन श्रपयेदुथ पचनमवधाय महावीरमवदधाति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्न्वने तूष्णीᳬं रौहिणकपाले तान्दिवैवोपवपेद्दिवोद्वपेदुद्ह हि देवानाम् ॥ २१ ॥ स ऽउद्वपति। 'ऋजवे त्वे'त्यसौ वै लोक ऽऋजुः सत्यᳬं ह्यृजुः सत्यमेष य ऽएष तपत्येष ऽउ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहऽर्जवे त्वेति ॥ २२ ॥ 'साधवे त्वे'ति। अयं वै साधुर्योऽयम्पवत ऽएष हीमाँल्लोकान्त्सिद्धोऽनुपवत ऽएष ऽउ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति ॥ २३ ॥

---

(१) शु० य० सं० ३७.८। (२) शु० य० सं० ३७.९। (३) शु० य० सं० ३७.९। (४) शु० य० सं० ३७.९। (५) शु० य० सं० ३७.१०। (६) शु० य० सं० ३७.१०।

'सुक्षित्यै त्त्वे'ति । अयं वै लोकः सुक्षितिरस्म्मिन्न्हि लोके सर्वाणि भूतानि क्षियन्त्यथो ऽअग्निर्वै सुक्षितिरग्निर्ह्येवा- स्स्मिँल्लोके सर्वाणि भूतानि क्षियन्त्येष ऽउ तृतीयः प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह सुक्षित्यै त्त्वेति तूष्णणीम्पिन्न्वने तूष्णणीꣳ रौहिणकपाले ॥ २४ ॥ अथैनानाच्छृणत्ति । अजायै पयसा 'मखाय त्त्वा मखस्य त्त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुरेवमितरौ तूष्णणीम्पिन्न्वने तूष्णणीꣳ रौहिणकपाले ॥ २५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ २६ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—— ० ——

[ महावीरसंस्काराः ]

स यदैतदातिथ्येन प्प्रचरति । अथ प्प्रवर्ग्येण चरिष्ष्यन्न्पुरोपसदोऽग्ग्रेण गार्हपत्यम्प्राचः कुशान्त्सꣳस्तीर्य्य द्वन्द्वम्पात्त्राणण्युपसादयत्त्युपयमनीम्महावीरम्परीशासौ पिन्न्वने रौहिणकपाले रौहिणहवन्न्यौ स्त्रुचौ यदु चान्न्यद्भवति तद्दश दशाक्षरा वै विराड्विराडु यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्त्यथ यद्द्वन्द्वन्द्वन्द्वं वै वीर्य्यं यदा वै द्वौ सꣳरभेते ऽअथ तौ वीर्य्यङ्कुरुतो द्वन्द्वं वै मिथुनम्प्रजननम्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति कृत्स्नङ्करोति ॥ १ ॥ अथाद्ध्वर्युः । प्रोक्षणीरादायोपोत्तिष्ठन्नाह

(१) शु० य० सं० ३७. १०। (२) शु० य० सं० ३७. १०।

ब्ब्रह्मन्प्रचरिष्ष्यामो होतरभिष्टुहीति ब्ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्तेऽभिगोप्ता तमेवैतदाहाप्प्रमत्त ऽआस्स्व यज्ञस्य शिरꣳ प्प्रतिधास्याम ऽइति होतरभिष्टुहीति यज्ञो वै होता तमेवैतदाह यज्ञस्य शिरꣳ प्प्रतिधेहीति प्प्रतिपद्यते होता ॥ २ ॥ 'ब्रह्म[1] जज्ञानम्प्रथमम्पुरस्ताद्'ति । असौ वा ऽआदित्यो ब्ब्रह्माहरहꣳ पुरस्ताज्जायत ऽएष ऽउ प्प्रवर्ग्ग्यस्त-देतमेवैतत्प्रीणाति तस्म्मादाह ब्ब्रह्म जज्ञानम्प्रथमम्पुरस्ता-दित्यथ प्प्रोक्षत्यसावेव बन्धुꣳ ॥ ३ ॥ स प्प्रोक्षति । 'यमाय[2] त्त्वे'त्त्येष वै यमो य ऽएष तपत्त्येष हीदꣳ सर्व्वं य्यमयत्त्येतेनेदꣳ सर्व्वं य्यतमेष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्री-णाति तस्म्मादाह यमाय त्त्वेति ॥ ४ ॥ 'मखाय[3] त्त्वे'ति । एष वै मखो य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्री-णाति तस्म्मादाह मखाय त्त्वेति ॥ ५ ॥ 'सूर्य्यस्य[4] त्त्वा तपस' ऽइति । एष वै सूर्य्यो य ऽएष तपत्त्येष प्प्रवर्ग्ग्यस्त-देतमेवैतत्प्रीणाति तस्म्मादाह सूर्य्यस्य त्त्वा तपस ऽइति ॥ ६ ॥ पूर्व्वया द्वारा स्त्थूणान्निर्हृत्त्य । दक्षिणतो निमि-न्न्वन्ति यथैनाꣳ होताभिष्टुवन्न्परापश्श्येद्यज्ञो वै होता स ऽएवास्यामेतद्यज्ञम्प्रतिदधाति तथैषा घर्म्मम्पिन्न्वते ॥ ७ ॥ [अर्धः प्रपाठकः ॥६६॥] अग्ग्रेणाहवनीयꣳ सम्म्राडासन्दीम्पर्य्या-हृत्त्य दक्षिणतꣳ प्प्राचीमासादयत्त्युत्तराꣳ राजासन्द्यै ॥ ८ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन स-मर्द्धयति कृत्स्नङ्करोति ॥९॥ अꣳसदघ्ना भवति । अꣳसयोर्व्वा

---

(१) शु० य० सं० १३. ३ । (२) शु० य० सं० ३७. ११ । (३) शु० य० सं० ३७. ११ । (४) शु० य० सं० ३७. ११ ।

ऽइदꣳ शिरꣳ प्प्रतिष्ठितन्तदुꣳसयोरेवैतच्छिरꣳ प्प्रतिष्ठापयति ॥ १० ॥ बाल्वजीभी रज्जुभिर्व्युता भवति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ११ ॥ अथ यदुत्तरत ऽआसादयति । यज्ञो वै सोमꣳ शिरꣳ प्प्रवर्ग्य ऽउत्तरं वै शिरस्तस्म्मादुत्तरत ऽआसादयत्त्यथो राजा वै सोमꣳ सम्म्राट् प्रवर्ग्य ऽउत्तरं वै राज्यात्साम्म्राज्यन्तस्म्मादुत्तरत ऽ(१)आसादयत्त्युत्तरो वै प्प्रजा तस्म्मादुत्तरत ऽआसादयति ॥ १२ ॥ स यत्रैताꣳ होतान्न्वाह । '(२)अञ्जन्ति यम्प्रथयन्तो न विप्प्रा' ऽइति तदेतम्प्रचरणीयम्महावीरमाज्येन समनक्ति '(३)देवस्त्वा सविता मद्ध्वानक्त्व'ति सविता वै देवानाम्प्रसविता सर्वं वा ऽइदम्मधु यदिदङ्किञ्च तदेनमनेन सर्व्वेण समनक्ति तदस्म्मै सविता प्प्रसविता प्प्रसौति तस्म्मादाह देवस्त्वा सविता मद्ध्वानक्त्विति ॥ १३॥ * अथोत्तरतꣳ सिकता ऽउपकीर्ण्णा भवन्ति । तद्रजतꣳ हिरण्ण्यमधस्तादुपास्यति '(४)पृथिव्व्याꣳ सꣳस्पृशस्प्पाही'त्त्येतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममधस्ताद्रक्षाꣳसि नाष्ट्रा न हन्न्युरित्त्यग्नेर्वा ऽएतद्रेतो यद्धिरण्ण्यन्नाष्ट्राणाꣳ रक्षसामपहत्त्या ऽअथो पृथिव्व्यु ह वा ऽएतस्म्माद्बिभयाञ्चकार यद्वै मायन्तप्तꣳ शुशुचानो न

(१) "आसादयत्त्युत्तरो वै प्प्रजा तस्म्मादुत्तरत" इति पाठः 'ग' ज' पुस्तकयोर्न दृश्यते ।
(२) ऋ० सं० ४. २. २१ । (३) शु० य० सं० ३७. ११ ।
* शतम् ६६०० ।
(४) शु० य० सं० ३७ ११ ।

हिꣳस्यादिति तदेवास्या ऽएतदन्तर्दधाति रजतम्भवति रजतेव हीयम्पृथिवी ॥ १४ ॥ स यत्रैताꣳ होताऽन्वाह । 'सꣳसीदस्व महाँ२॥ ऽअसी'ति तदुभयत ऽआदीप्ता मौञ्जाः प्प्रलवा भवन्ति तानुपास्य तेषु प्प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो व्व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ १५ ॥ अथ यदुभयत ऽआदीप्ता भवन्ति । सर्व्वाभ्य ऽएवैतद्दिग्ग्भ्यो रक्षाꣳसि नाष्ट्रा ऽअपहन्ति तस्मिन्प्रवृज्यमाने पत्नी शिरः प्प्रोर्णुते तप्तो वा ऽएष शुशुचानो भवति नेन्न्मेऽयन्तप्तः शुशुचानश्चक्षुः प्प्रमुष्णादिति ॥ १६ ॥ स प्प्रवृणक्ति । 'अर्चिरसि शोचिरसि तपोऽसी'त्येष वै घर्म्मो य ऽएष तपति सर्व्वं व्वा ऽएतदेष तदेतमेवैतत्प्रीणाति तस्मादाहार्च्चिरसि शोचिरसि तपोऽसीति ॥ १७ ॥ अथास्यामाशिष ऽआशास्ते । इयं व्वै यज्ञोऽस्यामेवैतदाशिष ऽआशास्ते ता ऽअस्म्मा ऽइयꣳ सर्व्वाः समर्द्धयति ॥ १८ ॥ 'अनाधृष्टा पुरस्ता'दिति । अनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्न्नाष्ट्राभि'रग्नेराधिपत्य' ऽइत्यग्निमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाꣳ रक्षसामपहत्या 'ऽआयुर्म्मे दा' ऽइत्यायुरेवात्मन्धत्ते तथो ह सर्व्वमायुरेति ॥ १९ ॥ 'पुत्रवती दक्षिणत' ऽइति । नात्र तिरोहितमिवास्ती'न्द्रस्याधिपत्य' ऽइतीन्द्रमेवास्या ऽअधिपतिङ्करोति

(१) ऋ० सं० १. ३. ९। (२) शु० य० सं० ३७. ११। (३) शु० य० सं० ३७. १२। (४) शु० य० सं० ३७. १२। (५) शु० य० सं० ३७. १२। (६) शु० य० सं० ३७. १२। (७) शु० य० सं० ३७. १२।

नाष्ट्राणाᳪं रक्षसामपहत्यै 'प्रजाम्मे दा' इति प्रजामेव पशूनात्मन्धत्ते तथो ह पुत्री पशुमान्भवति ॥ २० ॥ 'सुषदा पश्चा'दिति । नात्र तिरोहितमिवास्ति 'देवस्य सवितुराधिपत्य' इति देवमेवास्यै सवितारमधिपतिङ्करोति नाष्ट्राणाᳪं रक्षसामपहत्यै 'चक्षुर्म्मे दा' इति चक्षुरेवात्मन्धत्ते तथो ह चक्षुष्मान्भवति ॥ २१ ॥ 'आश्रुतिरुत्तरत' इति । आश्रावयन्नुत्तरत इत्येवैतदाह 'धातुराधिपत्य' इति धातारमेवास्या अधिपतिङ्करोति नाष्ट्राणाᳪं रक्षसामपहत्यै 'रायँस्पोषम्मे दा' इति रयिमेव पुष्टिमात्मन्धत्ते तथो ह रयिमान्पुष्टिमान्भवति ॥ २२ ॥ 'विधृतिरुपरिष्टा'दिति । विधारयन्नुपरिष्टादित्येवैतदाह 'बृहस्पतेराधिपत्य' इति बृहस्पतिमेवास्या अधिपतिङ्करोति नाष्ट्राणाᳪं रक्षसामपहत्या 'ओजो मे दा' इत्योज एवात्मन्धत्ते तथौजस्वी बलवान्भवति ॥ २३ ॥ अथ दक्षिणत उत्तानेन पाणिना निह्नुते । 'विश्वाभ्यो मा नाष्ट्राभ्यस्पाही'ति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ २४ ॥ अथेमामभिमृश्य जपति । 'मनोरश्वासी'त्यश्वा ह

(१) शु० य० सं० ३७. १२ । (२) शु० य० सं० ३७. १२ । (३) शु० य० सं० ३७. १२ । (४) शु० य० सं० ३७. १२ । (५) शु० य० सं० ३७ १२ । (६) शु० य० सं० ३७. १२ । (७) शु० य० सं० ३७. १२ । (८) शु० य० सं० ३७. १२ । (९) शु० य० सं० ३७. १२ । (१०) शु० य० सं० ३७. १२ । (११) शु० य० सं० ३७. १२ ।

* अत्र "रसो व्यक्षरत्स" इत्यधिकः पाठः । 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

(१२) शु० य० सं० ३७. १२ ।

वा ऽइयम्भूत्वा मनुमुवाह सोऽस्याः पतिः प्प्रजापति-
स्तेनैवैनमेतन्मिथुनेन प्प्रियेण धाम्म्ना समर्द्धयति कृत्स्न-
ङ्करोति ॥ २५ ॥ अथ वैकङ्कतौ शकलौ परिश्श्रयति
प्प्राञ्चौ । '[१]स्वाहा मरुद्भिः परिश्श्रीयस्वे'त्त्यवरꣳ स्वाहाकारङ्क-
रोति परान्देवतामेष वै स्वाहाकारो य ऽएष तपत्त्येष
ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादवरꣳ स्वाहाकार-
ङ्करोति परान्देवताम् ॥ २६ ॥ मरुद्भिः परिश्श्रीयस्वेति ।
विशो वै मरुतो विशैवैतत्क्षत्रम्परिबृꣳहति तदिदङ्क्षत्रमु-
भयतो विशा परिबृढन्तूष्ष्णीमुदञ्चौ तूष्ष्णीम्प्राञ्चौ तूष्ष्णी-
मुदञ्चौ तूष्ष्णीम्प्राञ्चौ ॥ २७ ॥ त्रयोदश सम्पादयति ।
त्रयोदश वै मासाः सँव्वत्सरस्य सँव्वत्सर ऽएष य ऽएष तपत्त्येष
ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्त्रयोदश सम्पादयति
॥ २८ ॥ अथ सुवर्ण्णꣳ हिरण्ण्यमुपरिष्टान्निदधाति ।
'[२]दिवꣳ सꣳस्पृशस्प्पाही'त्त्येतद्वै देवा ऽअबिभयुर्य्यद्वै न
ऽइममुपरिष्टाद्रक्षाꣳसि नाष्ट्रा न हन्न्युरित्त्यग्ग्नेर्व्वा ऽएत-
द्रेतो यद्धिरण्ण्यन्नाष्ट्राणाꣳ रक्षसामपहत्त्या ऽअथो द्यौर्ह
वा ऽएतस्म्माद्बिभयाञ्चकार यद्वै मायन्तप्प्तः शुशुचानो न
हिꣳस्यादिति तदेवास्या ऽएतदन्तर्द्दधाति हरितम्भवति
हरिणीव हि द्यौः ॥ २९ ॥ अथ धवित्रैराधूनोति । '[३]मधु
मद्ध्वि'ति त्रिः प्प्राणो वै मधु प्प्राणमेवास्म्मिन्नेतद्दधाति त्रीणि
भवन्ति त्रयो वै प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवा-

(१) शु० य० सं० ३७. १३। (२) शु० य० सं० ३७. १३। (३) शु० य० सं० ३७. १३।

स्मिन्नेतद्दधाति ॥ ३० ॥ अथापसलवि त्रिर्द्धूश्वन्ति । यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तैरेवै- नमेतत्समीरयति ॥ ३१ ॥ अप वा ऽएतेभ्यः प्प्राणाः क्रामन्ति । य यज्ञे धुवनन्तन्वते पुनः प्प्रसलवि त्रिर्द्धूश्वन्ति षट् सम्पद्यन्ते षड्वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्द- धाति श्श्रपयन्ति रौहिणौ स यदार्च्चिर्ज्जायतेऽथ हिरण्य- मादत्ते ॥ ३२ ॥ स यत्रैताᳬं होतान्न्वाह । 'अप्नस्वतीम- श्विना व्वाचमस्मे' ऽइति तदद्धूरुर्युरुपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति स यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्य- तीति विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति विद्या- दथ यदि नैव रुचितो नारुचितो नैव श्श्रेयान्न पापी- यान्न्भविष्यतीति विद्याद्यथा त्वेवै रुचितः स्यात्तथा धवितव्व्यम् ॥३३॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनुवा ब्ब्रूते भक्षयति वा तस्य व्व्रतचर्य्या या सृष्टौ ॥३४॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

स यदैतदद्धूरुर्युः । उपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति तदुपोत्थायावकाशैरुपतिष्ठन्ते प्प्राणा वा ऽअवकाशाः प्प्राणानेवास्मिन्नेतद्दधाति षडुपतिष्ठन्ते षड्वा ऽइमे शीर्ष- न्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ १ ॥ 'गैर्भो देवाना'मिति।

---

* अत्र ''रसो व्व्यक्षररस'' इत्यधिकः पाठः [ ] इति चिह्नान्तर्गतः 'ग' 'ज' पुस्तकयो- रुपलभ्यते ।

( १ ) शु० य० सं० १४. २९ । ( २ ) ''त्वेव'' इति 'ग' 'ज' पुस्तकयोः । ( ३ ) ''धवितव्व्यः'' इति 'ग' 'ज' पुस्तकयोः । ( ४ ) शु० य० सं० ३७. १४ ।

एष वै गर्ब्भो देवानां रुष ऽएष तपत्त्येष हीदꣳ सर्व्वङ्गृभ्[1]णा-त्त्येतेनेदꣳ सर्व्वङ्गृभीतमेष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्त्प्रीणाति तस्म्मादाह गर्ब्भो देवानामिति ॥ २ ॥ 'पि[2]ता मतीना'-मिति । पिता ह्येष मतीना'म्प[3]तिः प्प्रजाना'मिति पतिर्ह्येष प्प्रजानाम् ॥ ३ ॥ 'स[4]न्देवो देवेन सवित्र्त्रा गते'ति सꣳ हि देवो देवेन सवित्र्त्रा गत 'स[5]ꣳ सूर्य्येण रोचत' ऽइति सꣳ हि सूर्य्येण रोचते ॥ ४ ॥ 'स[6]मग्निरग्निना गते'ति । सꣳ ह्यग्निरग्निना गत 'स[7]न्दैवेन सवित्र्त्रे'ति सꣳ हि दैवेन सवित्र्त्रा गत 'स[8]ꣳ सूर्य्येणारोचिष्टे'ति सꣳ हि सूर्य्येणारो-चिष्ट ॥ ५ ॥ 'स्वा[9]हा समग्निस्तपसा गते'ति सꣳ ह्यग्निस्तपसा गतावरꣳ स्वाहाकारङ्करोति परान्देवतामसा-वेव बन्धुः 'सन्दै[10]व्व्येन सवित्र्त्रे'ति सꣳ हि दैव्व्येन सवि-त्र्त्रा गत 'स[11]ꣳ सूर्य्येणारूरुचते'ति सꣳ हि सूर्य्येणारूरुचत ॥ ६ ॥ ते वा ऽएते त्त्रयोऽवकाशा भवन्ति । त्त्रयो वै प्प्राणाः प्प्राण ऽउदानो व्व्यानस्ता[12]नेवास्मिन्नेतद्दधाति ॥ ७ ॥ 'ध[13]र्त्ता दिवो विभाति तपसस्पृथिव्व्या'मिति । धर्त्ता ह्येष दिवो विभाति तपसस्पृथिव्व्या'न्ध[14]र्त्ता देवो देवानाम-मर्त्त्यस्तपोजा' ऽइति धर्त्ता ह्येष देवो देवानाममर्त्त्यस्तपोजा 'वा[15]चमस्म्मे नियच्छ देवायुव'मिति यज्ञो वै वाग्ग्यज्ञमस्म्म-

(१) "गृह्णा०" इति 'ग' 'ज' पुस्तकयोः । (२) शु० य० सं० ३७. १४ । (३) शु० य० सं० ३७. १४ । (४) शु० य० सं० ३७. १४ । (५) शु० य० सं० ३७. १४ । (६) शु० य० सं० ३७. १५ । (७) शु० य० सं० ३७. १५ । (८) शु० य० सं० ३७. १५ । (९) शु० य० सं० ३७. १५ । (१०) शु० य० सं० ३७. १५ । (११) शु० य० सं० ३७. १५ । (१२) "०स्तेनै" इति 'ग' 'ज' पुस्तकयोः । (१३) शु० य० सं० ३७. १६ । (१४) शु० य० सं० ३७. १६ । (१५) शु० य० सं० ३७. १६ ।

ब्भ्यम्प्रयच्छ येन देवान्प्रीणामेत्त्येवैतदाह ॥ ८ ॥ '[1]अपश्श्य-ङ्गोपामनिपद्यमान'मिति । एष वै गोपा य ऽएष तपत्त्येष हीदꣳ सर्वङ्गोपायत्त्यथो न निपद्यते तस्म्मादाहापश्श्यङ्गोपा-मनिपद्यमानमिति ॥ ९ ॥ '[2]आ च परा च पथिभिश्श्चरन्त'-मिति । आ च ह्येष परा च देवैः पथिभिश्श्चरति '[3]स सद्ध्रीचीः स विषूचीर्व्वसान' ऽइति सद्ध्रीचीश्श्च ह्येष विषू-चीश्श्च दिशो वस्तेऽथो रश्श्मी'र्नावरीवर्त्ति[4] भुवनेष्ष्वन्त'रिति पुनः पुनर्ह्येष ऽएषु लोकेषु वरीवर्त्त्यमानश्श्चरति ॥ १० ॥ '[5]विश्श्वासाम्भुवाम्पते । विश्श्वस्य मनसस्प्पते विश्श्वस्य वचसस्प्पते सर्व्वस्य वचसस्प्पत' ऽइत्त्येतस्य सर्व्वस्य पत ऽइत्त्येत'[6]द्देवश्श्रुत्त्वन्देव घर्म्म देवो देवान्न्पाही'ति नात्र तिरोहितमिवास्ति ॥ ११ ॥ '[7]अत्र प्प्रावीरनु वान्देववीतय' ऽइति । अश्श्विनावेवैतदाहाश्श्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणाति तस्म्मादाहात्र प्प्रावीरनु वान्दे-ववीतय ऽइति ॥ १२ ॥ '[8]मधु माद्ध्वीब्भ्याम्मधु माधूचीब्भ्या'-मिति । दद्ध्यङ् ह वा ऽआब्भ्यामाथर्व्वणो मधु नाम ब्ब्राह्म-णमुवाच तदेनयोः प्प्रियन्धाम तदेवैनयोरेतेनोपगच्छति तस्म्मादाह मधु माद्ध्वीब्भ्याम्मधु माधूचीब्भ्यामिति ॥ १३ ॥ '[9]हृदे त्त्वा मनसे त्त्वा दिवे त्त्वा सूर्य्याय त्त्वा । ऊर्द्ध्वो ऽअद्ध्वरन्दिवि देवेषु धेही'ति नात्र तिरोहितमि-

( १ ) शु० य० सं० ३७. १७ । ( २ ) शु० य० सं० ३७. १७ । ( ३ ) शु० य सं० ३७. १७ । ( ४ ) शु० य० सं० ३७. १७ । ( ५ ) शु० य० सं० ३७. १८ । ( ६ ) शु० य० सं० ३७. १८ । ( ७ ) शु० य० सं० ३७. १८ । ( ८ ) शु० य० सं० ३७. १८ । ( ९ ) शु० य० सं० ३७. १९ ।

वास्ति ॥ १४ ॥ 'पिता नोऽसि पिता नो बोधी'ति । एष वै पिता य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पिता नोऽसि पिता नो बोधीति 'नमस्ते ऽअस्तु मा मा हिꣳसी'रित्याशिषमेवैतदाशास्ते ॥ १५ ॥ अथ पत्न्यै शिरोऽपावृत्य । महावीरमीक्षमाणां वाचयति 'त्वष्टृमन्तस्त्वा सपेमे'ति वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १६ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ ॥ १७ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

---

[ रौहिणहोमः, महावीरेषु अजापयस आसेकश्च ]

अथातो रौहिणौ जुहोति । 'अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा प्राता 'रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा सायम् ॥ १ ॥ तद्यद्रौहिणौ जुहोति । अग्निश्च ह वा ऽआदित्यश्च रौहिणावेताभ्याꣳ हि देवताभ्यां यजमानाः स्वर्गं लोकꣳ रोहन्ति ॥ २ ॥ अथो ऽअहोरात्रे वै रौहिणौ । आदित्यः प्रवर्ग्योऽमुन्तदादित्यमहोरात्राभ्या-

(१) शु० य० सं० ३७. २० । (२) शु० य० सं० ३७. २० । (३) "०प०" इति 'ग' 'ज' पुस्तकयोः । (४) शु० य० सं० ३७. २० । (५) शु० य० सं० ३७ २१ । (६) शु० य० सं० ३७. २१ ।

म्परिगृह्णाति तस्म्मादेषोऽहोरात्राब्भ्याम्परिगृहीतः ॥ ३ ॥ अथो ऽइमौ वै लोकौ रौहिणौ आदित्यः प्प्रवर्ग्योऽमुन्तदादित्यमाब्भ्याँल्लोकाब्भ्याम्परिगृह्णाति तस्म्मादेष ऽआब्भ्याँल्लोकाब्भ्याम्परिगृहीतः ॥ ४ ॥ अथो चक्षुषी वै रौहिणौ। शिरः प्प्रवर्ग्यः शीर्षंस्तच्चक्षुर्द्दधाति ॥५॥ अथ रज्जुमादत्ते। 'देवस्य[१] त्वा सवितुः प्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्याम्पूष्ण्णो हस्ताब्भ्यामाददेऽदित्यै[२] रास्नासी'त्यसावेव बन्धुः ॥६॥ अथ गामाह्वयति। जघनेन गार्हपत्यं स्थ'न्निडे[३] ऽएह्यदित ऽएहि सरस्वत्येही'तीडा हि गौरदितिर्हि गौः सरस्वती हि गौरथो चै[४]राह्वयति नाम्म्ना'[५]सावेह्यसावेही'ति त्रिः ॥ ७ ॥ तामागतामभिदधाति। 'अदित्यै[६] रास्नासीन्द्राण्ण्या ऽउष्ण्णीष' ऽइतीन्द्राणी ह वा ऽइन्द्रस्य प्प्रिया पत्नी तस्या ऽउष्ण्णीषो विश्श्वरूपतमः सोऽसीति तदाह तमेवैनमेतत्करोति ॥ ८ ॥ अथ वत्सममुपार्ज्जति। 'पूषासी'त्ययं वै पूषा योऽयन्पवत ऽएष हीदं सर्वम्पुष्ण्यत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह पूषासीति ॥ ९ ॥ अथोन्नयति। 'घर्म्माय दीष्ष्वे'त्येष वा ऽअत्र घर्म्मो रसो भवति यमेषा पिन्न्वते तस्यै दयस्वेत्येवैतदाह ॥ १० ॥ अथ पिन्न्वने पिन्न्वयति। 'अश्श्विब्भ्याम्पिन्न्वस्वे'त्यश्श्विनावेवैतदाहाश्श्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्म्मादाहा-

(१) शु० य० सं० ३८. १। (२) 'ग' 'ज' पुस्तकयोः "ऽदित्यै" इति पाठो न दृश्यते। (३) शु० य० सं० ३८. २। (४) "तै" इति 'ग' 'ज' पुस्तकयोः। (५) शु० य० सं० ३८. २। (६) शु० य० ३८. ३। (७) शु० य० सं० ३८. ३। (८) शु० य० सं० ३८. ३। (९) शु० य० सं० ३८. ४।

श्विवभ्यामिपन्न्वस्वेति ॥ ११ ॥ 'सरस्वत्यै पिन्न्वस्वे'ति । वाग्वै सरस्वती वाचा वा ऽएतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्न्वस्वेति ॥ १२ ॥ 'इन्द्राय पिन्न्वस्वे'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राय पिन्न्वस्वेति ॥ १३ ॥ अथ विप्रुषोऽभिमन्त्रयते । 'स्वाहेन्द्रवत्स्वाहेन्द्रव'दितीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञोऽवरंः स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ अथास्यै स्तनमभिपद्यते । 'यस्ते स्तनः शशयो यो मयोभू'रिति यस्ते स्तनो निहितो गुहायामित्येवैतदाह 'यो रत्नधा वसुविद्यः सुदत्र' ऽइति यो धनानान्दाता वसुवित्पणाय्य ऽइत्येवैतदाह 'येन विश्वा पुष्यसि वार्याणी'ति येन सर्वान्देवान्त्सर्वाणि भूतानि बिभर्षीत्येवैतदाह 'सरस्वति तमिह धातवेऽक'रिति वाग्वै सरस्वती सैषा घर्म्मदुघा यज्ञो वै वाग्यज्ञमस्मभ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाहाथ गार्हपत्यस्यार्द्धमे'त्युर्वन्तरिक्षमन्वेमी'त्यसावेव बन्धुः ॥ १५ ॥ अथ शफावादत्ते । 'गायत्रञ्छन्दोऽसि त्रैष्टुभञ्छन्दोऽसी'ति गायत्रेण चैवैना-

(१) शु० य० सं० ३८. ४। (२) शु० य० सं० ३८. ४। (३) शु० य० सं० ३८. ४। (४) शु० य० सं० ३८. ५। (५) शु० य० सं० ३८. ५। (६) शु० य० सं० ३८. ५। (७) शु० य० सं० ३८. ५। (८) शु० य० सं० ३८. ५। (९) शु० य० सं० ३८. ६।

वेतत्त्रैष्टुभेन च च्छन्दसादत्ते 'द्यावापृथिवीब्भ्यान्त्वा परि-गृह्णामी'तीमे वै द्यावापृथिवी परीशासावादित्यः प्प्रवर्ग्योऽ-मुन्तदादित्यमाब्भ्यान्द्यावापृथिवीब्भ्याम्परिगृह्णात्यथ मौञ्जेन वेदेनोपमाष्टर्थसावेव बन्धुः ॥ १६ ॥ अथोपयमन्न्योपगृह्णणाति । 'अन्तरिक्षेणोपयच्छामी'त्यन्तरिक्षं वा ऽउपयमन्न्यन्तरिक्षेण हीदꣳ सर्वमुपयतमथो ऽउदरं वा ऽउपयमन्न्युदुरेण हीदꣳ सर्वमन्नाद्यमुपयतन्तस्मादाहान्तरिक्षेणोपयच्छामीति ॥ १७ ॥ अथाजाक्षीरमानयति । तप्तो वा ऽएष शुशुचानो भवति तमेवैतच्छमयति तस्मिमञ्छान्ते गोक्षीरमानयति ॥ १८ ॥ 'इन्द्राश्विने'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणात्यश्विनेत्यश्विनावेवैतदाहाश्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राश्विनेति ॥ १९ ॥ 'मधुनः सारघस्ये'ति । एतद्वै मधु सारघ'ङ्घर्म्मम्पाते'ति रसम्पातेत्त्येवैतदाह 'वसवं' ऽइत्येते वै वसव ऽएते हीदꣳ सर्वं वासयन्ते 'यजँत वा'ड़िति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ २० ॥ 'स्वाहा सूर्य्यस्य रश्म्मये व्वृष्टिवनय' ऽइति। सूर्य्यस्य ह वा ऽएको रश्मिम्मर्व्वृष्टिवनिर्न्नाम येनेमाः सर्वाः प्प्रजा बिभर्त्ति तमेवैतत्प्रीणाति तस्मादाह स्वाहा सूर्य्यस्य रश्म्मये व्वृष्टिवनय ऽइत्त्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥२१॥ अथैतद्वै । आयुरेतज्ज्योतिः

(१) शु० य० सं० ३८. ६ । (२) शु० य० सं० ३८. ६ । (३) शु० य० सं० ३८. ६ । (४) शु० य० सं० ३८. ६ । (५) शु० य० सं० ३८. ६ । (६) शु० य० सं० ३८. ६ । (७) शु० य० सं० ३८. ६ । (८) शु० य० सं० ३८. ६ ।

प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य ब्रत-चर्य्या या सृष्टौ ॥ २२ ॥

## द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १३२ ॥

—०—

[ प्रवर्ग्यानुष्ठानम् ]

स यत्रैताꣳ होतान्न्वाह । 'प्प्रैतु[1] ब्ब्रह्मणस्प्पतिः प्प्र देव्व्येतु सूनृते'ति तदद्ध्वर्य्युः प्प्राङुदायन्न्वातनामानि जुहोत्त्येतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममन्तरा रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तमेतत्पुरैवाहवनीयात्स्वाहाकारेणा-जुहवुस्तꣳ हुतमेव सन्तमग्ग्नावजुहवुस्तथो ऽएवैनमेष ऽएत-त्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तꣳ हुतमेव सन्त-मग्ग्नौ जुहोति ॥ १ ॥ 'समुद्राय[2] त्त्वा व्वाताय स्वाहे'ति । अयं व्वै समुद्रो योऽयम्पवत ऽएतस्म्माद्वै समुद्रात्सर्व्वे देवाः सर्व्वाणि भूतानि समुद्रवन्ति तस्म्मा ऽएवैनञ्जुहोति तस्म्मा दाह समुद्राय त्त्वा व्वाताय स्वाहा ॥ २ ॥ 'सरिराय[3] त्त्वा व्वाताय स्वाहे'ति । अयं व्वै सरिरो योऽयम्पवत ऽएत-स्म्माद्वै सरिरात्सर्व्वे देवाः सर्व्वाणि भूतानि सहेरते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह सरिराय त्त्वा व्वाताय स्वाहा ॥ ३ ॥ 'अनाधृष्ष्याय[4] त्त्वा व्वाताय स्वाहा प्प्रतिधृष्ष्याय त्त्वा

(१) शु० य० सं० ३७. ७। (२) शु० य० सं० ३८. ७। (३) शु० य० सं० ३८. ७। (४) शु० य० सं० ३८. ७।

वाताय स्वाहे'ति । अयं वा ऽअनाधृष्ष्योऽप्रतिधृष्ष्यो षोऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहानाधृष्ष्याय त्वा वाताय स्वाहा प्रतिधृष्ष्याय त्वा वाताय स्वाहेति ॥ ४ ॥ '[1]अवस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहे'ति । अयं वा ऽअवस्युरशिमिदो षोऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहावस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहेति ॥ ५ ॥ '[2]इन्द्राय त्वा वसुमते रुद्रवते स्वाहे'ति । अयं वा ऽइन्द्रो षोऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेति वसुमते रुद्रवत ऽइति तदिन्द्रमेवानु वसूँश्च रुद्राँश्चाभजत्यथो प्रातःसवनस्य चैवैतन्माध्यन्दिनस्य च सवनस्य रूपङ्क्रियते ॥ ६ ॥ '[3]इन्द्राय त्वादित्यवते स्वाहे'ति । अयं वा ऽइन्द्रो षोऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेत्यादित्यवत ऽइति तदिन्द्रमेवान्वादित्यानाभजत्यथो तृतीयसवनस्यैवैतद्रूपङ्क्रियते ॥ ७ ॥ '[4]इन्द्राय त्वाभिमातिघ्ने स्वाहे'ति । अयं वा ऽइन्द्रो षोऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेत्यभिमातिघ्न ऽइति सपत्नो वा ऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्येवैतदाह सोऽस्योद्धारो षथा श्रेष्ठस्योद्धार ऽएवमस्यैष ऽऋते देवेभ्यः ॥ ८ ॥ '[5]सवित्रे त्व ऽऋभुमते विभुमते वाजवते स्वाहे'ति । अयं वै सविता षोऽयम्पवते तस्मा

(१) शु० य० सं० ३८. ७ । (२) शु० य० सं० ३८. ८ । (३) शु० य० सं० ३८. ८ । (४) शु० य० सं० ३८. ८ । (५) शु० य० सं० ३८. ८ ।

ऽएवैनञ्जुहोति तस्म्मादाह सवित्रे त्वेत्त्यृभुमते विभुमते व्वाजवत ऽइति तदस्म्मिन्विश्श्वान्देवानन्न्वाभजति ॥ ९ ॥ 'बृहस्प्पतये त्वा विश्श्वदेव्व्यावते स्वाहे'ति । अयं वै बृहस्प्पतिर्य्योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह बृहस्प्पतये त्वेति विश्श्वदेव्व्यावत ऽइति तदस्म्मिन्विश्श्वान्त्सर्व्वान्देवानन्न्वाभजति ॥ १० ॥ 'यमाय त्वाङ्गिरस्वते पितृमते स्वाहे'ति । अयं वै यमो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह यमाय त्वेत्त्यङ्गिरस्वते पितृमत ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तानेवैतदन्न्वाभजति ॥ ११ ॥ द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः सँव्वत्सरस्य सँव्वत्सर ऽएष य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्माद्द्वादश भवन्ति ॥ १२ ॥ अथोपयमन्न्या महावीर ऽआनयति । 'स्वाहा घर्म्मायेत्त्येष वै घर्म्मो य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह स्वाहा घर्म्मायेत्त्यवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १३ ॥ आनीते जपति । 'स्वाहा घर्म्मः पित्र' ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तानेवैतत्प्रीणात्त्यवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ नानुवाक्क्या-

(१) शु० य० सं० ३८. ८। (२) शु० य० सं० ३८. ९।

* अत्र "रसो व्व्यक्षरत्त्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते।

(३) शु० य० सं० ३८. ९। (४) शु० य० सं० ३८. ६।

मन्न्वाह । सकृदु ·ह्येव पराञ्चः पितरस्तस्म्मान्नानुवाक्क्यामन्न्वाहातिक्क्रम्म्याश्श्राऽव्याह घर्म्मस्य यजेति व्वषट्कृते जुहोति ॥ १५ ॥ 'व्विश्श्वा ऽआशा दक्षिणस'दिति । सर्व्वा ऽआशा दक्षिणसदित्त्येवैतदाह 'व्विश्श्वान्देवानयाडिहे'ति[2] सर्व्वान्देवानयाक्षीदिहेत्त्येवैतदाह 'स्वाहाकृतस्य[3] घर्म्मस्य मधोः पिबतमश्श्विने'त्त्यश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणात्त्यवरर्ठ्ठं स्वाहाकारङ्क्करोति परान्देवतामसावेव बन्धुः ॥ १६ ॥ अथ हुत्वोर्द्ध्वमुत्कम्पयति । 'दिवि धा[4] ऽइमं रुयज्ञमिमं रुयज्ञन्दिवि धा' ऽइत्त्यसौ वा ऽआदित्त्यो घर्म्मो यज्ञो दिवि वा ऽएष हितो दिवि प्प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्म्मादाह दिवि धा ऽइमं रुयज्ञमिमं रुयज्ञन्दिवि धा ऽइत्त्यनुवषट्कृते जुहोति ॥ १७ ॥ 'स्वाहाग्नये[5] यज्ञियाये'ति । तत्स्विष्टकृद्भाजनमग्निर्हि स्विष्टकृ'च्छं[6] रुयजुर्ब्भ्यः' ऽइति यजुर्भिर्ह्येषोऽस्मिँल्लोके प्प्रतिष्ठितस्तान्न्येवैतत्प्रीणात्त्यवरर्ठ्ठं स्वाहाकारङ्क्करोति परान्देवतामसावेव बन्धुः ॥ १८ ॥ अथ ब्ब्रह्मानुमन्त्रयते । ब्ब्रह्मा वा ऽऋत्त्विजाम्भिषक्क्तमस्तद्य ऽएवऽर्त्त्विजाम्भिषक्क्तमस्तेनैवैतँद्यज्ञम्भिषज्ज्यति[7] ॥ १९ ॥ 'अश्श्विना[8] घर्म्मम्पात'मिति । अश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणाति ॥ २० ॥

---

(१) शु० य० सं० ३८. १० । (२) शु० य० सं० ३८. १० । (३) शु० य० सं० ३८. १० । (४) शु० य० सं० ३८. ११ । (५) शु० य० सं० ३८. ११ । (६) शु० य० सं० ३८. ११ । (७) "स्तेनैवैनमेत०" इति 'ग' 'ज' पुस्तकयोः पाठः । (८) शु० य० सं० ३८. १२ ।

'हार्द्दानिमहार्द्दिवाभिरूतिभि'रिति । अनिरुक्तमनिरुक्तो वै प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्यति ॥ २१ ॥ 'तन्त्रायिण' ऽइति । एष वै तन्त्रायी य ऽएष तपत्त्येष हीमाँल्लोकाँस्तन्त्रमिवानुसञ्चरत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह तन्त्रायिण ऽइति ॥ २२ ॥ 'नमो द्यावापृथिवीब्भ्या'मिति । तदाब्भ्यान्द्यावापृथिवीब्भ्यान्निह्नुते ययोरिदꣳ सर्व्वमधि ॥ २३ ॥ अथ यजमानः । यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञम्भिषज्यति ॥२४॥ 'अपीतामश्श्विना घर्म्म'मिति । अश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणाति ॥ २५ ॥ 'अनु द्यावापृथिवी ऽअमꣳसाता'मिति । तदिमे द्यावापृथिवी ऽआह ययोरिदꣳ सर्व्वमधी'हैव रातयः सन्त्विती'हैव नो धनानि सन्त्वित्त्येवैतदाह ॥ २६ ॥ अथ पिन्न्वमानमनुमन्त्रयते *। 'इषे पिन्न्वस्वे'ति व्वृष्ट्यै तदाह यदाहेषे पिन्न्वस्वेत्त्यू'र्ज्जे पिन्न्वस्वे'ति यो व्वृष्टादूर्ग्ग्रसो जायते तस्म्मै तदाह 'ब्ब्रह्मणे पिन्न्वस्वे'ति तद्ब्रह्मण ऽआह 'क्षत्त्राय पिन्न्वस्वे'ति तत्क्षत्त्रायाह 'द्यावापृथिवीब्भ्याम्पिन्न्वस्वे'ति तदाब्भ्यान्द्यावापृथिवीब्भ्यामाह ययोरिदꣳ सर्व्वमधि ॥ २७ ॥ स यदूर्द्ध्वः पिन्न्वते । तद्यजमानाय पिन्न्वते

---

(१) शु० य० सं० ३८. १२। (२) शु० य० सं० ३८. १२। (३) शु० य० सं० ३८. १२। (४) शु० य० सं० ३८. १३। (५) शु० य० सं० ३८. १३। (६) शु० य० सं० ३८. १३।

* का० श्रौ० सू० २६. ६. ८।

(७) शु० य० सं० ३८. १४। (८) शु० य० सं० ३८. १४। (९) शु० य० सं० ३८. १४। (१०) शु० य० सं० ३८. १४। (११) शु० य० सं० ३८. १४।

यत्प्राङ् तद्देवेभ्यो यद्दक्षिणा तत्पितृभ्यो यत्प्रत्यङ् तत्पशुभ्यो यदुदङ् तत्प्रजाया ऽअनपराद्धन्त्वेवं[1] यजमानस्योर्द्धो ह्येव पिन्न्वित्त्वाथ[2] यान्दिशम्पिन्न्वते ताम्पिन्न्वते यदा शाम्म्यन्ति विप्रुषः ॥ २८ ॥ अथ प्राङिवोदङ्ङुत्क्रामति*। 'धर्म्मासि[3] सुधर्म्मे'त्येष वै धर्म्मो य ऽएष तपत्येष हीदꣳ सर्वन्धारयत्येतेनेदꣳ सर्वन्धृतमेष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह धर्म्मासि सुधर्म्मेति ॥ २९ ॥ अथ खरे सादयति । 'अमेन्न्यस्म्मे[4] नृम्म्णानि धारये'त्यक्रुद्ध्यन्नो धनानि धारयेत्त्येवैतदाह 'ब्रह्म[5] धारय क्षत्रन्धारय विशन्धारये'त्येतत्सर्वन्धारयेत्त्येवैतदाह ॥३०॥ अथ शाकलैर्ज्जुहोति । प्राणा वै शाकलाः प्राणानेवास्म्मिन्नेतद्दधाति ॥ ३१ ॥ 'स्वाहा[6] पूष्णणे शरस' इति । अयं वै पूषा योऽयम्पवत ऽएष हीदꣳ सर्वम्पुष्यत्येष ऽउ प्राणः प्राणमेवास्म्मिन्नेतद्दधाति तस्म्मादाह स्वाहा पूष्णणे शरस ऽइत्त्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुर्हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३२ ॥ 'स्वाहा[7] ग्ग्रावभ्य' ऽइति । प्राणा वै ग्ग्रावाणः प्राणानेवास्म्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३३ ॥ 'स्वाहा[8] प्रतिरवेभ्य' ऽइति । प्राणा वै प्रतिरवाः प्राणान्हीदꣳ सर्वम्प्रतिरत-

(१) "न्वेव" इति 'ग' 'ज' पुस्तकयोः । (२) "पिन्न्वत्याथ" इति 'ग' 'ज' पुस्तकयोः ।
* 'धर्म्मासीत्युत्क्रामत्युत्तरपूर्वार्द्धम्' का० श्रौ० सू० २६. ६. ९ ) इति ।
( ३ ) शु० य० सं० ३८. १४ । ( ४ ) शु० य० सं० ३८. १४ । ( ५ ) शु० य० सं० ३८. १४ । ( ६ ) शु० य० सं० ३८. १५ ।
(७) शु० य० सं० ३८. १५ । ( ८ ) शु० य० सं० ३८. १५ ।

न्प्राणानेवास्मिम्मन्नेतद्दधाति हुत्त्वा मद्ध्यमे परिधा ऽउपश्रयति ॥ ३४ ॥ 'स्वाहा[1] पितृब्भ्य ऽऊर्द्ध्वबर्हिब्भ्यो घर्म्मपावब्भ्य' ऽइति । अहुत्त्वैवोदङ्ङीक्षमाणो दक्षिणार्द्धे बर्हिष ऽउपगूहति यज्ञस्य शीर्षच्छिन्नस्य * पितृनगच्छन्रया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्प्रेक्षते सकृदु ह्येव पराञ्चः पितरः ॥ ३५ ॥ 'स्वाहा[2] द्यावापृथिवीब्भ्या'मिति । प्प्राणोदानौ वै द्यावापृथिवी प्प्राणोदानावेवास्मिन्नेतद्दधाति हुत्त्वा मद्ध्यमे परिधा ऽउपश्रयति ॥ ३६ ॥ 'स्वाहा[3] विश्वेब्भ्यो देवेब्भ्य ऽइति । प्प्राणा वै विश्वे देवाः प्प्राणानेवास्मिम्मन्नेतद्दधाति हुत्त्वा मद्ध्यमे परिधा ऽउपश्रयति ॥ ३७ ॥ 'स्वाहा[4] रुद्राय रुद्रहूतय' ऽइति । अहुत्त्वैव दक्षिणेक्षमाणः प्प्रतिप्प्रस्त्थात्रे प्प्रयच्छति तक्ष स ऽउत्तरतः शालाया ऽउदङ्ङ्निरस्यत्त्येषा ह्येतस्य देवस्य दिक्स्वायामेवैनमेतद्दिशि प्प्रीणात्यथ यन्न प्प्रेक्षते नेद्दमा रुद्रो हिनसदिति ॥ ३८ ॥ सप्तैता ऽआहुतयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिम्मन्नेतद्दधाति ॥ ३९ ॥ अथ महावीरादुपयमन्न्यामप्रत्यानयति । 'स्वाहा[5] सञ्ज्योतिषा ज्योति'रिति ज्योतिर्वा ऽइतरस्मिम्मन्पयो भवति ज्योतिरितरस्यान्ते ह्येतदुभे ज्योतिषी सङ्गच्छेते ऽअवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः

---

* अत्र "रसो व्यक्षरत्त्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

( १ ) शु० य० सं० ३८. १५ । ( २ ) शु० य० सं० ३८. १५ । ( ३ ) शु० य० सं० ३८. १५ । ( ४ ) शु० य० सं० ३८. १६ । ( ५ ) शु० य० सं० ३८. १६ ।

॥ ४० ॥ * अथ रौहिणौ जुहोति । 'अहः केतुना जुषताᳬं सुज्ज्योतिर्ज्योतिषा स्वाहे'त्यसावेव बन्धू 'रात्रिः केतुना जुषताᳬं सुज्योतिर्ज्योतिषा स्वाहे'त्यसावेव बन्धुः ॥ ४१ ॥ अथ यजमानाय घर्म्मोच्छिष्टम्प्रयच्छति । स ऽउपहवमिष्ट्वा भक्षयति 'मधु हुतमिन्द्रतमे ऽअग्नावि'ति मधु हुतमिन्द्रियवत्तमेऽग्नावित्येवैतदाहा'श्याम ते देव घर्म्म नमस्ते ऽअस्तु मा मा हिᳬंसी'रित्याशिषमेवैतदाशास्ते ॥ ४२ ॥ अथ दक्षिणतः सिकता ऽउपकीर्ण्णा भवन्ति । तन्न्मार्ज्जयन्ते य ऽएव मार्ज्जालीये बन्धुः सोऽत्रानुप्प्रहरति शाकलानथोपसदा चरन्त्येतदु यज्ञस्य शिरः संस्कृतं रुयथा यथैनन्तदश्विनौ प्प्रत्यधत्ताम् ॥ ४३ ॥ तन्न प्प्रथमयज्ञे प्प्रवृञ्ज्यात् । एनस्यᳪ हि तदथो नेन्न्म ऽइन्द्रः शिरश्छिनददिति द्वितीये वैव तृतीये वापशीर्ष्णा ह्येवाग्ग्रे यज्ञेन देवा ऽअर्च्चन्तः श्राम्म्यन्तश्चेरुस्तस्म्माद्द्वितीये वैव तृतीये वाथो तप्तो वा ऽएष शुशुचानो भवति ॥ ४४ ॥ तं रुयत्प्रथमयज्ञे प्प्रवृञ्ज्यात् । एषोऽस्य तप्तः शुशुचानः प्प्रजाश्च पशूँश्च प्प्रदहेदथो ऽआयुः प्प्रमायुको यजमानः स्यात्तस्म्माद्द्वितीये वैव तृतीये वा ॥ ४५ ॥ तन्न सर्व्वस्म्मा ऽइव प्प्रवृञ्ज्यात् । सर्वं वै प्प्रवर्ग्यो नेत्सर्व्वस्म्मा ऽइव सर्व्वङ्करवाणीति यो न्न्वेव ज्ञातस्तस्म्मै प्प्रवृञ्ज्याद्यो वास्यप्प्रियः स्याद्यो वानूचानोऽनूक्तेनैनम्प्राप्प्नुयात् ॥ ४६ ॥

* अत्र शतम् ७०००।

(१) शु० य० सं० ३८. १६। (२) शु० य० सं० ३८. १६। (३) शु० य० सं० ३८. १६। (४) शु० य० सं० ३८. १६।

सहस्रे प्रवृञ्ज्यात् । सर्वं वै सहस्रꣳ सर्वमेष सर्ववेदसे प्रवृञ्ज्यात्सर्वं वै सर्ववेदसꣳ सर्वमेष विश्वजिति सर्वपृष्ठे प्रवृञ्ज्यात्सर्वं वै विश्वजित्सर्वपृष्ठः सर्वमेष वाजपेये राजसूये प्रवृञ्ज्यात्सर्वꣳ हि तत्सत्रे प्रवृञ्ज्यात्सर्वं वै सत्रꣳ सर्वमेष ऽएतान्यस्य प्रवर्जनान्यतो नान्यत्र ॥ ४७ ॥ तदाहुः । यदुपशिरा ऽअप्रवर्ग्योऽथ केनास्याग्निहोत्रꣳ शीर्षण्वद्भवतीत्याहवनीयेनेति ब्रूयात्कथन्दर्शपूर्णमासाविन्याज्येन च पुरोडाशेन चेति ब्रूयात्कथञ्चातुर्मास्यानीति पयस्ययेति ब्रूयात्कथम्पशुबन्ध ऽइति पशुना च पुरोडाशेन चेति ब्रूयात्कथꣳ सौम्योऽध्वर ऽइति हविर्धानेनेति ब्रूयात् ॥ ४८ ॥ अथो ऽआहुः । यज्ञस्य शीर्षच्छिन्नस्य शिर ऽएतद्देवाः प्रत्यदधुर्यदातिथ्यन्न ह वा ऽअस्यापशीर्ष्णा केन चन यज्ञेनेष्टम्भवति य ऽएवमेतद्वेद ॥ ४९ ॥ तदाहुः । यत्प्रणीताः प्रणयन्ति यज्ञेऽथ कस्मादत्र न प्रणयतीति शिरो वा ऽएतद्यज्ञस्य यत्प्रणीताः शिरः प्रवर्ग्यो नेच्छिरसा शिरोऽभ्यारोहयाणीति ॥ ५० ॥ तदाहुः । यत्प्रयाजानुयाजा ऽअन्यत्र भवन्त्यथ कस्मादत्र न भवन्तीति प्राणा वै प्रयाजानुयाजाः प्राणा ऽअवकाशाः प्राणाः शाकला नेत्प्राणैः प्राणानभ्यारोहयाणीति ॥ ५१ ॥ तदाहुः । यदाज्यभागावन्यत्र जुह्वत्यथ कस्मादत्र न जुहोतीति चक्षुषी वा ऽएते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ नेच्चक्षुषा चक्षुरभ्यारोहयाणीति ॥ ५२ ॥ तदाहुः । यद्वा-

नस्प्पत्त्यैर्द्देवेब्भ्यो जुह्वत्यथ कस्म्मादेतम्मृन्न्मयेनैव जुहोतीति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्न्मृदियन्तद्यदापोऽसौ तन्न्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवेनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ५३ ॥ स यद्वानस्प्पत्त्यः स्यात् । प्रदह्येत यद्धिरण्ण्मयः स्यात्प्रलीयेत यल्लोहमयः स्यात्प्रसिच्च्येत यदयस्म्मयः स्यात्प्रदहेत्परीशासात्वथैष ऽएवैतस्म्मा ऽअतिष्ठत तस्म्मादेतम्मृन्न्मयेनैव जुहोति ॥ ५४ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ५५ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

[ प्रवर्ग्योत्सादनम् ]

स वै तृतीयेऽहन् । षष्ठे वा द्वादशे वा प्प्रवर्ग्योपसदौ समस्य प्प्रवर्ग्यमुत्सादयन्त्युत्सन्नमिव हीदꣳ शिरस्तद्यदेतमभितो भवति तत्सर्वꣳ समादायाग्ग्रेण शालामन्तर्वेद्युपसमायन्ति ॥ १० ॥ अथाग्नीध्रः । आहवनीये* त्रीञ्छालाकानुपकल्प्पयते तेषामेकमुज्ज्वलय्य मुखदग्घ्ने धारयमाणो जुहोति यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्सेमाँ-

* तथा च कात्यायनः—'आहवनीये त्रीञ्छालाकान्प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोमं प्रमाणेषु' ( का० श्रौ० सू० २६. ७. ३ ) इति ।

ल्लोकानाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ २ ॥ अथ यन्न्मुखदघ्ने । उपरीव वै तद्यन्न्मुखदघ्न-मुपरीव तद्यदसौ लोकस्तद्यामुँल्लोकꣳ शुगाविशत्तयैवैनमे-तच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ 'या[1] ते घर्म्म दिव्व्या शु'गिति । यैव दिव्व्या शु'ग्या[2] गायत्र्याꣳ हवि-र्द्धान' इति यैव गायत्र्याꣳ हविर्द्धाने 'सा[3] त ऽआप्प्या-यतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ४ ॥ अथ द्वितीयमुज्ज्वलख्य । नाभिदघ्ने धारयमाणो जुहोति मद्ध्यमिव वै तद्यन्नाभिदघ्नम्मद्ध्यमिवान्तरिक्षलोक-स्तद्यान्तरिक्षलोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ 'या[4] ते घर्म्मान्तरिक्षे शु'गिति । यैवा-न्तरिक्षे शु'ग्या[5] त्रिष्टुब्भ्याग्नीध्र' ऽइति यैव त्रिष्टुब्भ्याग्नीध्रे 'सा[6] त ऽआप्प्यायतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरो-हितमिवास्ति ॥६॥ [अर्धः प्रपाठकः ॥ ६१ ॥] अथ तृतीयम-भ्याधाय। तस्मिन्नासीनो जुहोत्यध ऽइव वै तद्यदासीनोऽध ऽइव तद्यदयँल्लोकस्तद्येमँल्लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ७ ॥ 'या[7] ते घर्म्म पृथिव्व्याꣳ शु'गिति । यैव पृथिव्व्याꣳ शु'ग्या जगत्त्याꣳ सदस्ये'[8]ति यैव जगत्त्याꣳ सदस्या 'सा[9] त ऽआप्प्यायतान्निष्ट्यायता-न्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ८ ॥ अथो-

(१) शु० य० सं० ३८. १८। (२) शु० य० सं० ३८. १८। (३) शु० य० सं० ३८. १८। (४) शु० य० सं० ३८. १८। (५) शु० य० सं० ३८. १८। (६) शु० य० सं० ३८. १८। (७) शु० य० सं० ३८. १८। (८) शु० य० सं० ३८. १८। (९) शु० य० सं० ३८. १८।

पनिष्क्रामति । 'क्षत्रस्य त्वा परस्पाये'[1] त्येतद्वै दैवं क्षत्रं य्य ऽएष तपत्यस्य त्वा मानुषस्य क्षत्रस्य परस्पत्वायेत्त्येवैतदाह[2] 'ब्रह्मणस्तन्त्वम्पाही'[3]ति ब्रह्मण ऽआत्मानङ्गोपायेत्त्येवैतदाह 'विशस्त्वा धर्म्मणा वय'[4]मिति यज्ञो वै विड्यज्ञस्य त्वारिष्ट्या ऽइत्त्येवैतदाहा'नुक्रामाम सुविताय नव्व्यस'[5] ऽइति यज्ञस्य त्वारिष्ट्या ऽअह्वलाया ऽइत्त्येवैतदाह ॥ ९ ॥ अथाह साम गायेति । साम ब्रूहीति वा गायेति त्त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिमाङ्बहिर्द्धा यज्ञाच्छरीरान्नाष्ट्रा रक्षाꣳसि हिनसन्निति साम हि नाष्ट्राणाꣳ रक्षसामपहन्ता ॥ १० ॥ आग्नेय्याङ्गायति । अग्निर्हि रक्षसामपहन्तातिच्छन्दसि गायत्त्येषा वै सर्वाणि छन्दाꣳसि यदुतिच्छन्दास्तस्मादुतिच्छन्दसि गायति ॥ ११ ॥ स गायति । अग्निष्टपति प्प्रतिदहत्त्यहावोऽहाव ऽइति तन्नाष्ट्रा ऽएवै[6]तद्रक्षाꣳस्यतोऽपहन्ति ॥ १२ ॥ त ऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्ग्रेणाग्नीध्रमेषा हि यज्ञस्य द्वाः स यस्यान्ततो दिश्यापो भवन्ति तद्यन्ति ॥ १३ ॥ तं वै परिष्यन्द ऽउत्सादयेत् । तप्तो वा ऽएष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुगृच्छेद्यदप्स्वुत्सादयेदपोऽस्य शुगृच्छेदथ यत्परिष्यन्द ऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यदहाप्सु न प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वा ऽआप-

(१) शु० य० सं० ३८. १९ । (२) "परस्पाये०" इति 'ग' 'ज' पुस्तकयोः । (३) शु० य० सं० ३८. १९ । (४) शु० य० सं० ३८. १९ । (५) शु० य० सं० ३८. १९ । (६) "वै तद्र०" इति 'ग' 'ज' पुस्तकयोः ।

स्तेनो ऽइमान्न हिनस्ति तस्मात्परिष्ष्यन्द ऽउत्सादयेत् ॥ १४ ॥ उत्तरवेदौ त्वेवोत्सादयेत् । यज्ञो वा ऽउत्तरवेदिः शिरः प्रवर्ग्यो यज्ञ ऽएवैतच्छिरः प्रतिदधाति ॥ १५ ॥ उत्तरनाभ्या सꣳस्पृष्टम् । प्रथमम्प्रवर्ग्यमुत्सादयति वाग्वा ऽउत्तरनाभिः शिरः प्रवर्ग्यः शीर्षंस्तद्वाचन्दधाति ॥ १६ ॥ 'चतुःस्रक्ति'रिति । एष वै चतुःस्रक्तिर्य ऽएष तपति दिशो ह्येतस्य स्रक्तयस्तस्मादाह चतुःस्रक्तिरिति ॥ १७ ॥ 'नाभिर्ऋतस्य सप्रथा' ऽइति । सत्यं वा ऽऋतꣳ सत्यस्य नाभिः सप्रथा ऽइत्येवैतदाह 'स नो विश्वायुः सप्रथा' ऽइति स नः सर्वायुः सप्रथा ऽइत्येवैतदाह ॥ १८ ॥ 'अप द्वेषो ऽअप ह्वर' ऽइति । नात्र तिरोहितमिवास्त्य'न्यव्रतस्य सश्चिमे'त्यन्यद्वा ऽएतस्य व्रतमन्यन्मनुष्याणान्तस्मादाहान्यव्रतस्य सश्चिमेत्यवमितरौ प्राश्नौ तत्त्रिवृत्त्रिवृद्धीदꣳ शिरः ॥ १९ ॥ पुरस्तादुपशयाम्मृदम् । माꣳसमेवास्मिन्नेतद्दधाति तदभितः परीशासौ * बाहू ऽएवास्मिन्नेतद्दधात्यभितः परे रौहिणहवन्यौ स्रुचौ हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥ उत्तरतोऽग्निम् † । तद्धि तस्या ऽआयतनन्दक्षिणतः सम्राडासन्दीन्तद्धि तस्या ऽआयतनमुत्तरतः कृष्णाजिनन्तद्धि तस्यायतनꣳ सर्वतो धवित्राणि ‡ प्राणा वै धवित्राणि प्राणानेवास्मिन्नेतद्-

( १ ) शु० य० सं० ३८. २० । ( २ ) शु० य० सं० ३८. २० । ( ३ ) शु० य सं० ३८. २० । ( ४ ) शु० य० सं० ३८. २० । ( ५ ) शु० य० सं० ३८. २० ।

* 'परीशासावभितः' ( का० श्रौ० सू० २६. ७. १७ ) इति ।

† 'अग्निमुत्तरतः' ( का० सू० २६. ७. १९ ) इति ।

‡ का० श्रौ० सू० २६. ७. २२ ।

धाति त्रीणि भवन्ति त्रयो वै प्प्राणाः प्प्राण ऽउदानो व्यानस्तानेवास्मिन्नेतद्दधाति ॥२१॥ अथैतद्रज्जुसन्दानम् । उपयमन्न्यामाधाय पश्चात्प्राचीमासादयत्त्युदरमेवास्मिन्नेतद्दधाति तदभितः पिन्न्वने ऽआण्डावेवास्मिन्नेतद्दधात्याण्डाभ्याᳬं हि वृषा पिन्न्वते पश्चात्स्थूणामयूखमूरू ऽएवास्मिन्नेतद्दधाति पश्चाद्रौहिणकपाले जानुनी ऽएवास्मिन्नेतद्दधाति ते यदेककपाले भवत ऽएककपाले ऽइव हीमे जानुनी पश्चाद्धृष्टी पादावेवास्मिन्नेतद्दधाति पादाभ्याᳬं हि धृष्टम्प्रहरत्त्युत्तरतः खरौ प्प्रचरणीयौ तद्धि तयोरायतनन्दक्षिणतो मार्ज्जालीयन्तद्धि तस्यायतनम् ॥२२॥ अथास्मिन्नुपय ऽआनयति । 'घर्म्मैतत्ते[1] पुरीष'मित्त्यन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधाति 'तेन[2] वर्द्धस्व चा च प्प्यायस्वे'ति नात्र तिरोहितमिवास्ति 'वर्द्धिषीमहि[3] च वयमा च प्प्यासिषीमही'त्त्याशिषमेवैतदाशास्ते ॥ २३ ॥ स वै न सर्वमिवानयेत् । नेद्यजमानात्परागन्नमसदित्त्यर्द्धं वा भूयो वा परिशिनष्टि तस्मिन्नपराह्णे यजमानाय व्रतमभ्युत्सिच्च्य प्प्रयच्छति तद्यजमान ऽएवैतदन्नाद्यन्दधाति तथो ह यजमानान्न परागन्नम्भवति ॥ २४ ॥ अथैनमद्भिः परिषिञ्चति । शान्तिर्वा ऽआपः शमयत्त्येवैनमेतत्सर्वतः परिषिञ्चति सर्वत ऽएवैनमेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृद्धि यज्ञः ॥ २५ ॥ अथाह

(१) शु० य० सं० ३८. २१। (२) शु० य० सं० ३८. २१। (३) शु० य० सं० ३८. २१।

वार्षाहरꣳ साम गायेति। एष वै वृषा हरिर्य्य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह वार्षाहरꣳ साम गायेति ॥ २६ ॥ अथ चात्वाले मार्ज्जयन्ते। 'सुमित्रिया न आप ओषधयः सन्त्वि'त्यञ्जलिनाप उपाचति वज्रो वा आपो वज्रेणैवैतन्मित्रधेयङ्कुरुते 'दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म' इति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ २७ ॥ अथ प्राङिवोदङ्ङुत्क्रामति। 'उद्वयन्तमसस्परी'ति पाप्मा वै तमः पाप्मानमेव तमोऽपहते 'स्वः पश्यन्त उत्तर'मित्ययं वै लोकोऽन्नथ उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति 'देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तम'मिति स्वर्ग्गो वै लोकः सूर्य्यो ज्योतिरुत्तमꣳ स्वर्ग्ग एव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीये समिधमभ्यादधाति 'समिदसि तेजोऽसि तेजो मयि धेही'त्याशिषमेवैतदाशास्ते ॥ २८ ॥ अथ प्रसुते दधिघर्म्मेण चरन्ति। यज्ञो वै सोमः शिरः प्रवर्ग्यो यज्ञ एवैतच्छिरः प्रतिदधाति माध्यन्दिने सवन एतद्वा इन्द्रस्य निष्केवल्यꣳ सवनं यन्माध्यन्दिनꣳ सवनꣳ स्व एवैनमेतद्भागे प्रीणाति स्तुते माध्यन्दिने पवमाने प्राणो वै माध्यन्दिनः पवमानः प्राणमेवास्मिन्नेतद्दधात्यग्निहोत्रहवण्या मुखं वा एतद्यज्ञानां यदग्निहोत्रꣳ

(१) शु० य० सं० ३८. २३। (२) शु० य० सं० ३८. २३। (३) शु० य० सं० ३८. २४। (४) शु० य० सं० ३८. २४। (५) शु० य० सं० ३८. २४। (६) शु० य० सं० ३८. २५।

शीर्षंस्तन्मुखन्दधाति ॥ २९ ॥ स ऽआनीयमान ऽआह । होतर्वदस्व यत्ते वाच्यमिति वदते ह्यत्र होताथोपोत्तिष्ठन्नाह '[1]ऽश्रातꣳ हवि'रिति श्रातꣳ हि भवत्त्यतिक्रम्म्याऽश्राव्याह दधिघर्म्मस्य यजेति वषट्कृते जुहोत्त्यनुवषट्कृत ऽआहरति भक्षन्तं यजमानाय प्प्रयच्छति ॥ ३० ॥ स ऽउपहवमिष्ट्वा भक्षयति । '[2]मयि त्यदिन्द्रियम्बृह'दित्त्येतद्वा ऽइन्द्रियम्बृहद्य ऽएष तपति '[3]मयि दक्षो मयि क्रतु'रिति क्रतूदक्षावेवात्मन्धत्ते '[4]घर्म्मस्त्रिशुग्विराजती'ति घर्म्मो ह्येष त्रिशुग्विराजति '[5]विराजा ज्योतिषा सहे'ति विराजा ह्येष ज्योतिषा सह '[6]ब्रह्मणा तेजसा सहे'ति ब्रह्मणा ह्येष तेजसा सह '[7]पयसो रेत ऽआभृत'मिति पयसो ह्येतद्रेत ऽआभृत'[8]न्तस्य दोहमशीमह्युत्तरामुत्तराꣳ समा'मित्त्याशिषमेवैतदाशास्तेऽथ चात्वाले मार्ज्जयन्तेऽसावेव बन्धुः ॥ ३१ ॥ अथातो दक्षिणानाम् । सुवर्ण्णꣳ हिरण्ण्यꣳ शतमानम्ब्रह्मणे ददात्त्यासीनो वै ब्रह्मा यशः शयानꣳ हिरण्ण्यन्तस्मात्सुवर्ण्णꣳ हिरण्ण्यꣳ शतमानम्ब्रह्मणे ददाति ॥ ३२ ॥ अथ यैषा घर्म्मदुघा । तामद्ध्वर्यवे ददाति तप्त ऽइव वै घर्म्मस्तप्तमिवाद्ध्वर्युर्न्निष्क्रामति तस्मात्तामद्ध्वर्यवे ददाति ॥ ३३ ॥ अथ यैषा यजमानस्य व्रतदुघा । ताꣳ होत्रे ददाति यज्ञो वै होता यज्ञो यजमानस्तस्मात्ताꣳ होत्रे ददाति ॥ ३४ ॥ अथ यैषा पत्त्न्यै व्रतदुघा ।

(१) ऋ० सं० ८. ८. ३७। (२) शु० य० सं० ३८. २७। (३) शु० य० सं० ३८. २७। (४) शु० य० सं० ३८. २७। (५) शु० य० सं० ३८. २७। (६) शु० य० सं० ३८. २७। (७) शु० य० सं० ३८. २८। (८) शु० य० सं० ३८. २८।

तामुद्गातृभ्यो ददाति पत्नीकर्म्मैव वा ऽएतेऽत्र कुर्वन्ति यदुद्गातारस्तस्मात्तामुद्गातृभ्यो ददाति ॥ ३५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३६ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

*[ घर्मभेदे प्रायश्चित्तम्, प्रवर्ग्यप्रशंसा च ]*

सर्वेषां वा ऽएष भूतानाम् । सर्वेषान्देवानामात्मा यद्यज्ञस्तस्य समृद्धिमनु यजमानः प्रजया पशुभिर्ऋद्ध्यते वि वा ऽएष प्रजया पशुभिर्ऋध्यते यस्य घर्म्मो विदीर्य्यते तत्र प्रायश्चित्तिः ॥ १ ॥ पूर्णाहुतिञ्जुहोति । सर्वं वै पूर्णः सर्वेणैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ २ ॥ 'स्वाहा प्राणेभ्यः साधिपतिकेभ्य' ऽइति । मनो वै प्राणानामधिपतिर्म्मनसि हि सर्वे प्राणाः प्रतिष्ठितास्तन्मनसैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ३ ॥ 'पृथिव्यै स्वाहे'ति । पृथिवी वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ४ ॥ 'अग्नये स्वाहे'ति । अग्निर्वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ५ ॥ 'अन्तरिक्षाय स्वाहे'ति । अन्तरिक्षं वै सर्वेषान्देवानामायतनन्तत्सर्वाभि-

(१) शु० य० सं० ३९. १ । (२) शु० य० सं० ३९. १ । (३) शु० य० सं० ३९. १ । (४) शु० य० सं० ३९. १ ।

रेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ६ ॥ 'वायवे स्वाहे'ति । वायुर्वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ७ ॥ 'दिवे[2] स्वाहे'ति । द्यौर्वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ८ ॥ 'सूर्याय[3] स्वाहे'ति । सूर्यो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ९ ॥ 'दिग्भ्यः[4] स्वाहे'ति । दिशो वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १० ॥ 'चन्द्राय[5] स्वाहे'ति । चन्द्रो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ११ ॥ 'नक्षत्रेभ्यः[6] स्वाहे'ति । नक्षत्राणि वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १२ ॥ 'अद्भ्यः[7] स्वाहे'ति । आपो वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १३ ॥ 'वरुणाय[8] स्वाहे'ति । वरुणो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १४ ॥ 'नाभ्यै[9] स्वाहा पूताय स्वाहे'ति । अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्ज्यति ॥ १५ ॥

---

(१) शु० य० सं० ३६. १ । (२) शु० य० सं० ३९. १ । (३) शु० य० सं० ३९. १ । (४) शु० य० सं० ३९. २ । (५) शु० य० सं० ३९. २ । (६) शु० य० सं० ३९. २ । (७) शु० य० सं० ३९. २ । (८) शु० य० सं० ३९. २ । (९) शु० य० सं० ३९. २ ।

त्रयोदशैता ऽआहुतयो भवन्ति । त्रयोदश वै मासाः सँवत्सरस्य सँवत्सरः प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्ज्यति ॥ १६ ॥ 'वाचे[1] स्वाहे'ति । मुखमेवास्मिन्नेतद्दधाति 'प्प्राणाय[2] स्वाहा प्प्राणाय स्वाहे'ति नासिके ऽएवास्मिन्नेतद्दधाति 'चक्षुषे[3] स्वाहा चक्षुषे स्वाहे'त्यक्षिणी ऽएवास्मिन्नेतद्दधाति 'श्रोत्राय[4] स्वाहा श्रोत्राय स्वाहे'ति कर्ण्णावेवास्मिन्नेतद्दधाति ॥ १७ ॥ सप्तैता ऽआहुतयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति पूर्ण्णाहुतिमुत्तमाञ्जुहोति सर्व्वं वै पूर्ण्णꣳ सर्व्वेणैवैतद्भिषज्ज्यति यत्किञ्च विवृढं ऽयज्ञस्य ॥ १८ ॥ 'मनसः[5] काममाकूति'मिति । मनसा वा ऽइदꣳ सर्व्वमाप्तन्तन्मनसैवैतद्भिषज्ज्यति यत्किञ्च विवृढं ऽयज्ञस्य ॥ १९ ॥ 'वाचꣳ[6] सत्यमशीये'ति । वाचा वा ऽइदꣳ सर्व्वमाप्तन्तद्वाचैवैतद्भिषज्ज्यति यत्किञ्च विवृढं ऽयज्ञस्य 'पशूनां[7] रूपमन्नस्य रसो यशः श्रीः श्रयताम्मयि स्वाहे'त्याशिषमेवैतदाशास्ते ॥ २० ॥ अथ तञ्चोपशयाञ्च पिष्ट्वा । मात्स्नेया मृदा सꣳसृज्यावृता करोत्यावृता पचत्युत्सादनार्थमथ य ऽउपशययोर्द्दृढꣳ स्यात्तेन प्प्रचरेत् ॥ २१ ॥ सँवत्सरो वै प्प्रवर्ग्ग्यः । सर्व्वं वै सँवत्सरः सर्व्वम्प्रवर्ग्ग्यः स यत्प्रवृक्तस्तद्वसन्तो यद्रुचितस्तद्ग्रीष्मो यत्पिन्वितस्त-

( १ ) शु० य० सं० ३९. ३ । ( २ ) शु० य० सं० ३९. ३ । ( ३ ) शु० य० सं० ३९. ३ । ( ४ ) शु० य० सं० ३९. ३ । ( ५ ) शु० य० सं० ३९. ४ । ( ६ ) शु० य० सं० ३९. ४ । ( ७ ) शु० य० सं० ३९. ४ ।

द्वर्षा यदा वै वर्षाः पिन्वन्तेऽथैनाः सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पिन्वन्ते ह वा ऽअस्मै वर्षा य ऽएव-मेतद्वेद ॥ २२ ॥ इमे वै लोकाः प्प्रवर्ग्यः । सर्वं वा ऽइमे लोकाः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदयँल्लोको यद्रुचित-स्तदन्तरिक्षलोको यत्पिन्वितस्तदसौ लोको यदा वा ऽअसौ लोकः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्न्युपजी-वन्ति पिन्वते ह वा ऽअस्मा ऽअसौ लोको य ऽएवमे-तद्वेद ॥ २३ ॥ एता वै देवताः प्प्रवर्ग्यः । अग्निर्वायुरा-दित्यः सर्वं वा ऽएता देवताः सर्वम्प्रवर्ग्यः स यत्प्रवृक्त-स्तदग्निरुर्यद्रुचितस्तद्वायुरुर्यत्पिन्वितस्तदसावादित्यो यदा वा ऽअसावादित्यः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पिन्वते ह वा ऽअस्मा ऽअसावादित्यो य ऽएवमेतद्वेद ॥ २४ ॥ यजमानो वै प्प्रवर्ग्यः । तस्या-त्मा प्प्रजा पशवः सर्वं वै यजमानः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदात्मा यद्रुचितस्तत्प्रजा यत्पिन्वितस्तत्पशवो यदा वै पशवः पिन्वन्तेऽथैनान्त्सर्वे देवाः सर्वाणि भूता-न्न्युपजीवन्ति पिन्वन्ते ह वा ऽअस्मै पशवो य ऽएवमेत-द्वेद ॥ ॥ २५ ॥ अग्निहोत्रं वै प्प्रवर्ग्यः । सर्वं वा ऽअ-ग्निहोत्रꣳ सर्वम्प्रवर्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदुन्नी-तन्तद्रुचितो यद्धुतन्तत्पिन्वितो यदा वा ऽअग्निहोत्र-म्पिन्वतेऽथैनत्सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पि-न्वते ह वा ऽअस्मा ऽअग्निहोत्रं रुय ऽएवमेतद्वेद ॥ २६ ॥ दर्शपूर्णमासौ वै प्प्रवर्ग्यः । सर्वं वै दर्शपूर्णमासौ सर्व-

म्प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदुद्वासितस्तद्दुचितो यद्धुतस्तत्पिन्वितो यदा वै दर्शपूर्णमासौ पिन्वेते ऽथैनौ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वेते ह वा ऽअस्मै दर्शपूर्णमासौ य ऽएवमेतद्वेद ॥ २७ ॥ चातुर्म्मास्यानि वै प्रवर्ग्यः । सर्वं वै चातुर्म्मास्यानि सर्वम्प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदुद्वासितस्तद्दुचितो यद्धुतस्तत्पिन्वितो यदा वै चातुर्म्मास्यानि पिन्वन्तेऽथैनानि सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वा ऽअस्मै चातुर्म्मास्यानि य ऽएवमेतद्वेद ॥ २८ ॥ पशुबन्धो वै प्रवर्ग्यः । सर्वं वै पशुबन्धः सर्वम्प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदुद्वासितस्तद्दुचितो यद्धुतस्तत्पिन्वितो यदा वै पशुबन्धः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा ऽअस्मै पशुबन्धो य ऽएवमेतद्वेद ॥ २९ ॥ सोमो वै प्रवर्ग्यः । सर्वं वै सोमः सर्वम्प्रवर्ग्यः स यदभिषुतस्तत्प्रवृक्तो यदुन्नीतस्तद्दुचितो यद्धुतस्तत्पिन्वितो यदा वै सोमः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा ऽअस्मै सोमो य ऽएवमेतद्वेद न ह वा ऽअस्या प्रवर्ग्येण केन चन यज्ञेनेष्टम्भवति य ऽएवमेतद्वेद ॥ ३० ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३१ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥२॥ कण्डिकासंख्या ॥१२२॥

इति तृतीयोऽध्यायः ॥ ३ ॥

[ बृहदारण्यकम् * ]

( कोऽसौ पाप्मा मृत्युः, कुतो वा तस्योद्भवः, केन वा तस्यातिक्रमणम्, कथं चेत्येतत्सर्वं स्पष्टयति )

द्वया ह प्प्राजापत्याः । देवाश्चासुराश्च ततः कानीयसा ऽएव देवा ज्यायसा ऽअसुरास्त ऽएषु लोकेष्वस्पर्द्धन्त ॥ १ ॥ ते ह देवा ऽऊचुः । हन्तासुरान्यज्ञ ऽउद्गीथेनात्ययामेति ॥ २ ॥ ते ह व्वाचमूचुः । त्वन्न ऽउद्गायेति तथेति तेभ्यो व्वागुदगायद्यो व्वाचि भोगस्तन्देवेभ्य ऽआगायद्यत्कल्ल्याणं व्वदति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्प्मनाविध्यन्त्स यः स पाप्प्मा यदेवेदमप्प्रतिरूपं व्वदति स ऽएव स पाप्प्मा ॥ ३ ॥ अथ ह प्प्राणमूचुः । त्वन्न ऽउद्गायेति तथेति तेभ्यः प्प्राण ऽउदगायद्यः प्प्राणे भोगस्तन्देवेभ्य ऽआगायद्यत्कल्ल्याणञ्जिघ्रति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्प्मनाविध्यन्त्स यः स पाप्प्मा यदेवेदमप्प्रतिरूपञ्जिघ्रति स ऽएव स पाप्प्मा ॥४॥ अथ ह चक्षुरूचुः । त्वन्न ऽउद्गायेति तथेति तेभ्यश्चक्षुरुदगायद्यश्चक्षुषि भोगस्तन्देवेभ्य ऽआगायद्यत्कल्ल्याणम्पश्यति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्प्मनाविध्यन्त्स यः स पाप्प्मा यदेवेदमप्प्रतिरूपम्पश्यति स ऽएव स पाप्प्मा ॥ ५ ॥ अथ ह श्रोत्रमूचुः । त्वन्न ऽउद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः

* बृहत्त्वं चास्य ब्रह्मविद्याहेतूनामन्तरङ्गबहिरङ्गभूतानां बहूनामिहोपदेशात्, अर्थतो ग्रन्थपरिमाणतश्च बहुत्वात् । आरण्यकत्वं चास्य नियमपूर्वकमरण्येऽनूच्यमानत्वात् ।

श्रोत्रे भोगस्तन्देवेभ्य ऽआगायद्यत्कल्याणꣳ शृणोति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेद-मप्रातिरूपꣳ शृणोति स ऽएव स पाप्मा ॥ ६ ॥ अथ ह मन ऽऊचुः । त्वन्न ऽउद्गायेति तथेति तेभ्यो मन ऽउदगायद्यो मनसि भोगस्तन्देवेभ्य ऽआगायद्यत्क-ल्याणꣳ सङ्कल्पयति तदात्मने तेऽविदुरनेन वै न ऽउद्गा-त्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्पयति स ऽएव स पाप्मै-वमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मना-विध्यन् ॥ ७ ॥ अथ हेममासन्न्यम्प्राणमूचुः । त्वन्न ऽउ-द्गायेति तथेति तेभ्य ऽएष प्राण ऽउदगायत्तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्स-[1]न्त्सं यथाश्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैव विध्वꣳ-समाना विष्वञ्चो विनेशुस्ततो देवा ऽअभवन्परासुरा भव-त्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ ८ ॥ ते होचुः । क्व नु सोऽभूद्यो न ऽइत्थमसक्तेत्ययम्-मास्येऽन्तरिति सोऽयास्य ऽआङ्गिरसोऽङ्गानाꣳ हि रसः ॥ ९ ॥ सा वा ऽएषा देवता । दूर्नाम दूरꣳ ह्यस्या मृत्युर्दूरꣳ ह वा ऽअस्मान्मृत्युर्भवति य एवं वेद ॥ १० ॥ सा वा ऽएषा देवता । एतासान्देवतानाम्पाप्मानम्मृत्यु-मपहृत्य यत्रासान्दिशामन्तस्तद्गमयाञ्चकार तदासाम्पाप्म-

(१) सन्त्स'' इति 'ग' 'ज' पुस्तकयोः ।

नो विन्न्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानम्मृत्त्युमन्ववायानीति ॥ ११ ॥ सा वा ऽएषा देवता। एतासान्देवतानाम्पाप्मानम्मृत्त्युमपहत्त्याथैना मृत्त्युमत्त्यवहत् ॥ १२ ॥ स वै वाचमेव प्प्रथमामत्त्यवहत्। सा यदा मृत्त्युमत्त्यमुच्च्यत सोऽग्निरभवत्त्सोऽयमग्निः परेण मृत्त्युमतिक्क्रान्तो दीप्प्यते ॥ १३ ॥ अथ प्प्राणमत्त्यवहत्। स यदा मृत्त्युमत्त्यमुच्च्यत स वायुरभवत्त्सोऽयं वायुः परेण मृत्त्युमतिक्क्रान्तः पवते ॥ १४ ॥ अथ चक्षुरत्त्यवहत्। तद्यदा मृत्त्युमत्त्यमुच्च्यत स ऽआदित्त्योऽभवत्त्सोऽसावादित्त्यः परेण मृत्त्युमतिक्क्रान्तस्तपति ॥ १५ ॥ अथ श्श्रोत्रमत्त्यवहत्। तद्यदा मृत्त्युमत्त्यमुच्च्यत ता दिशोऽभवँस्ता ऽइमा दिशः परेण मृत्त्युमतिक्क्रान्ताः ॥ १६ ॥ अथ मनोऽत्त्यवहत्। तद्यदा मृत्त्युमत्त्यमुच्च्यत स चन्द्रमा ऽअभवत्त्सोऽसौ चन्द्रः परेण मृत्त्युमतिक्क्रान्तो भात्त्येवः ह वा ऽएनमेषा देवता मृत्त्युमतिवहति य ऽएवं वेद ॥१७॥ अथात्त्मनेऽन्नाद्यमागायत्। यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत ऽइह प्प्रतितिष्ट्ठति ॥ १८ ॥ * ते देवा ऽअब्ब्रुवन्। एतावद्वा ऽइदः सर्वं य्यदन्नन्तदात्त्मन ऽआगासीरनु नोऽस्मिन्नन्न ऽआभजस्वेति ते वै माभिसँविशतेति तथेति तः समन्तम्परिण्ण्यविशन्त तस्म्माद्यदनेनान्नमत्ति तेनैतास्तृप्प्यन्त्येवः ह वा ऽएनꣳ स्वा ऽअभिसँविशन्ति भर्त्ता स्वानाꣳ श्श्रेष्ट्ठः पुर ऽएता भवत्त्यन्नादोऽधिपतिर्य्य

* अत्र शतम् ७१००।

ऽएवं व्वेद ॥ १९ ॥ य ऽउ हैवंव्विदम् । स्वेषु प्प्रतिप्प्रतिर्ब्बुभूषति न हैवालम्भार्य्येब्भ्यो भवत्यथ य ऽएवैतमनु भवति यो वैतमनु भार्य्यान्न्बुभूर्षति स हैवालम्भार्य्येब्भ्यो भवति ॥ २० ॥ सोऽयास्य ऽआङ्गिरसः । अङ्गानाᳬ हि रसः प्प्राणो वा ऽअङ्गानाᳬ रसः प्प्राणो हि वा ऽअङ्गानाᳬ रसस्तस्म्माद्यस्म्मात्कस्म्माच्चाङ्गात्प्राण ऽउत्क्रामति तदेव तच्छुष्ष्यत्येष हि वा ऽअङ्गानाᳬ रसः ॥२१॥ एष ऽउ ऽएव बृहस्प्पतिः । व्वाग्वै बृहती तस्या ऽएष पतिस्तस्म्मादु बृहस्प्पतिः ॥ २२ ॥ एष ऽउ ऽएव ब्ब्रह्मणस्प्पतिः । व्वाग्वै ब्ब्रह्म तस्या ऽएष पतिस्तस्म्मादु * ब्ब्रह्मणस्प्पतिः ॥ २३ ॥ एष ऽउ ऽएव साम । व्वाग्वै सामैष सा चामश्चेति तत्साम्म्नः सामत्वं यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम ऽएभिस्त्रिभिर्ल्लोकैः समोऽनेन सर्व्वेण तस्म्माद्वेव सामाश्नुते साम्म्नः सायुज्यᳬ सलोकतां य ऽएवमेतत्साम व्वेद ॥ २४ ॥ एष ऽउ वा ऽउद्गीथः । प्प्राणो वा ऽउत्प्राणेन हीदᳬ सर्व्वमुत्तब्धं व्वागेव गीथोच्च गीथा चेति स ऽउद्गीथः ॥ २५ ॥ तद्धापि ब्ब्रह्मदत्तश्चैकितानेयः । राजानम्भक्षयन्नुवाचायन्त्यस्य राजा मूर्द्धानं व्विपातयताद्यदितोऽयास्य ऽआङ्गिरसोऽन्येनोदुगायदिति व्वाचा च ह्येव स प्प्राणेन चोदुगायदिति ॥ २६ ॥ तस्य हैतस्य साम्म्नो यः स्वं व्वेद । भवति हास्य स्वन्तस्य वै स्वर ऽएव स्वन्तस्म्मादार्त्त्विज्ज्यङ्करिष्यन्न्वाचि स्वरमिच्छेत तया

* अत्र 'ग' 'ज' पुस्तकयोः "हु" इत्यधिको दृश्यते ।

वाचा स्वरसम्पन्नयार्त्विज्ज्यङ्कुर्य्यात्तस्म्माद्यज्ञे स्वरवन्त-न्दिदृक्षन्त ऽएवाथो यस्य स्वम्भवति भवति हास्य स्वं य ऽएवमेतत्साम्म्नः स्वं वेद ॥ २७ ॥ तस्य हैतस्य साम्म्नो यः सुवर्ण्णं वेद । भवति हास्य सुवर्ण्णन्तस्य वै स्वर ऽएव सुवर्ण्णम्भवति हास्य सुवर्ण्णं य ऽएवमेत-त्साम्म्नः सुवर्ण्णं वेद ॥ २८ ॥ तस्य हैतस्य । साम्म्नो यः प्प्रतिष्ट्ठां वेद प्प्रति ह तिष्ट्ठति तस्य वै वागेव प्प्रतिष्ट्ठा वाचि हि खल्ल्वेष ऽएतत्प्राणः प्रतिष्ट्ठितो गीयतेऽन्न ऽइत्यु हैक ऽआहुः ॥ २९ ॥ अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्प्रस्तोता साम प्प्रस्तौति स यत्र प्प्रस्तुयात्त-देतानि जपेदसतो मा सद्गमय तमसो मा ज्ज्योतिर्ग्गमय मृत्त्योर्म्मामृतङ्गमयेति ॥ ३० ॥ स यदाहासतो मा सद्गम-येति । मृत्त्युर्वा ऽअसत्सदमृतम्मृत्त्योर्म्मामृतङ्गमयामृतम्मा कुर्व्वित्त्येवैतदाह ॥ ३१ ॥ तमसो मा ज्योतिर्ग्गमयेति । मृत्त्युर्वै तमो ज्ज्योतिरमृतम्मृत्त्योर्म्मामृतङ्गमयामृतम्मा कु-र्व्वित्त्येवैतदाह मृत्त्योर्म्मामृतङ्गमयेति नात्र तिरोहितमिवास्ति ॥ ३२ ॥ अथ यानीतराणि स्तोत्राणि । तेष्ष्वात्मनेऽन्नाद्यमा-गायेत्तस्म्मादु तेषु वरं व्वृणीत यङ्कामङ्कामयेत तꣳ स ऽएष ऽएवंविदुद्गातात्मने वा यजमानाय वा यङ्कामङ्कामयते तमा-गायति तद्धैतल्लोकजिदेव न हैवालोक्क्यताया ऽआशास्ति य ऽएवमेतत्साम वेद ॥ ३३ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ ज्ञानकर्मणोः स्तुत्यर्थं तत्फलभूतस्य प्रजापतेर्जगत्सृष्ट्यादौ स्वातन्त्र्यविभूतिवर्णनेन फलोत्कर्षवर्णनम् ]

आत्मैवेदमग्र ऽआसीत् । पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहन्नामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र ऽउक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति ॥ १ ॥ स यत्पूर्वोऽस्मात्सर्वस्मात् । सर्वान्पाप्मन ऽऔषत्तस्मात्पुरुष ऽओषति ह वै स तं [1]यो ऽस्मात्पूर्वो बुभूषति य ऽएवं वेद ॥ २ ॥ सोऽबिभेत् । तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत ऽएवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयम्भवति ॥ ३ ॥ स वै नैव रेमे । तस्मादेकाकी न रमते स द्वितीयमैच्छत्स हैतावानास यथा स्त्रीपुमाꣳसौ सम्परिष्वक्तौ ॥ ४ ॥ स ऽइममेवात्मानन्द्वेधापातयत् । ततः पतिश्च पत्नी चाभवतान्तस्मादिदमर्द्धवृगलमिव स्व ऽइति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत ऽएव ताꣳ समभवत्ततो मनुष्या ऽअजायन्त ॥५॥ सो हेयमीक्षाञ्चक्रे । कथन्नु मात्मन ऽएव जनयित्वा सम्भवति हन्त तिरोऽसानीति ॥ ६ ॥ सा गौरभवत् । वृषभ ऽइतरस्ताꣳ समेवाभवत्ततो गावोऽजायन्त ॥ ७ ॥ वडवेतराभवत् । अश्ववृष ऽइतरो गर्दभीतरा गर्दभ ऽइतरस्ताꣳ समेवाभवत्तत ऽएकशफमजायत ॥ ८ ॥ अजेतराभवत् । वस्त ऽइतरोऽविरितरा मेष ऽइतरस्ताꣳ समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदि-

(१) "०रो" इति 'ग' 'ज' पुस्तकयोः ।

दद्भिश्च मिथुनमा पिपीलिकाभ्यस्ततस्सर्वमसृजत ॥ ९ ॥ सोऽवेत् । अहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याꣳ हास्यैतस्याम्भवति य ऽएवं वेद ॥ १० ॥ अथेत्यभ्यमन्थत् । स मुखाच्च योनेर्हस्ताभ्याञ्चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः ॥ ११ ॥ तद्यदिदमाहुः । अमुं यजामुं यजेत्येकैकन्देवमेतस्यैव सा विसृष्टिरेष ऽउ ह्येव सर्वे देवाः ॥ १२ ॥ अथ यत्किञ्चेदमार्द्रम् । तद्रेतसोऽसृजत तदु सोम ऽएतावद्वा ऽइदꣳ सर्वमन्नञ्चैवान्नादश्च सोम ऽएवान्नमग्निरन्नादः ॥ १३ ॥ सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्याꣳ हास्यैतस्याम्भवति य ऽएवं वेद ॥ १४ ॥ तद्धेदन्तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियतासौनामायमिदꣳ रूप ऽइति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदꣳ रूप ऽइति ॥ १५ ॥ स ऽएष ऽइह प्रविष्टः । आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तन्न पश्यन्त्यकृत्स्नो हि सः ॥१६॥ प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यꣳश्चक्षुः शृण्वञ्छ्रोत्रम्मन्वानो मनस्तान्यस्यैतानि कर्म्मनामान्येव स योऽत ऽएकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत ऽएकैकेन भवति ॥१७॥ [अर्धः प्रपाठकः ॥५०॥] आत्मेत्येवोपासीत । अत्र ह्येते सर्वे ऽएकम्भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा-

नेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवङ्कीर्त्तिꣳ श्लोकं विन्दते य ऽएवं वेद ॥ १८ ॥ तदेतत्प्रेयः पुत्रात् । प्रेयो वित्तात्प्रेयोऽन्न्यस्म्मात्सर्वस्म्मादन्तरतरं यदयमात्त्मा स योऽन्न्यमात्त्मनः प्प्रियम्ब्रुवाणम्ब्रूयात्प्प्रियꣳ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्प्रियमुपासीत स य ऽआत्मानमेव प्प्रियमुपास्ते न हास्य प्प्रियम्प्रमायुकम्भवति ॥ १९ ॥ तदाहुः । यद्ब्रह्मविद्यया सर्वम्भविष्ष्यन्तो मनुष्ष्या मन्न्यन्ते किमु तद्ब्रह्मावेद्यस्म्मात्तत्सर्वमभवदिति ॥ २० ॥ ब्रह्म वा ऽइदमग्र ऽआसीत् । तदात्मानमेवावेदहम्ब्रह्मास्म्मीति तस्म्मात्तत्सर्वमभवत्तद्यो यो देवानाम्प्रत्यबुद्ध्यत स ऽएव तदभवत्तथऽर्षीणान्तथा मनुष्ष्याणाम् ॥ २१ ॥ तद्धैतत्पश्श्यन्नृषिर्वामदेवः प्प्रतिपेदे । अहम्मनुरभवꣳ सूर्य्यश्चेति तदिदमप्प्येतर्हि य ऽएवं वेदाहम्ब्रह्मास्म्मीति स इदꣳ सर्वम्भवति तस्य ह न देवाश्चनाभूत्त्या ऽईशत ऽआत्मा ह्येषाꣳ स भवत्त्यथ योऽन्न्यान्देवतामुपास्तेऽन्न्योऽसावन्न्योऽहमस्म्मीति न स वेद यथा पशुरेवꣳ स देवानां यथा ह वै बहवः पशवो मनुष्ष्यम्भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्म्मिन्नेव पशावादीयमानेऽप्प्रियम्भवति किमु बहुषु तस्म्मादेषान्तन्न प्प्रियं यदेतन्मनुष्ष्या विद्युः ॥ २२ ॥ ब्रह्म वा ऽइदमग्र ऽआसीत् । एकमेव तदेकꣳ सन्न व्यभवत्तच्छ्रेयो रूपमत्त्यसृजत क्षत्रं यान्न्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्ज्जन्न्यो यमो मृत्युरीशान ऽइति तस्म्मात्क्षत्रात्परन्नास्ति

तस्म्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र ऽएव तद्यशो दधाति सैषा क्षत्रस्य योनिर्य्यद्ब्रह्म तस्म्मा- द्यद्यपि राजा परमताङ्गच्छति ब्ब्रह्मैवान्तत ऽउपनिश्श्रयति स्वां य्योनिं य्य ऽउ एनꣳ हिनस्ति स्वाꣳस योनिमृच्छति स पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्त्वा ॥ २३ ॥ स नैव व्व्यभवत् । स विशमसृजत यान्न्येतानि देवजातानि गणश ऽआख्यायन्ते वसवो रुद्रा ऽआदित्त्या विश्श्वे देवा मरुत ऽइति ॥ २४ ॥ स नैव व्व्यभवत् । स शौद्रं वर्ण्ण- मसृजत पूषणमियं वै पूषेयꣳ हीदꣳ सर्वम्पुष्ष्यति यदि- दङ्किञ्च ॥२५॥ स नैव व्व्यभवत् । तच्छ्रेयो रूपमत्त्यसृजत धर्म्मन्तदेतत्क्षत्रस्य क्षत्रं य्यद्धर्म्मस्तस्म्माद्धर्मात्परन्नास्त्यथो ऽअबलीयान्बलीयाꣳसमाशꣳसते धर्म्मेण यथा राज्ञैवं य्यो वै स धर्म्मः सत्त्यं वै तत्तस्म्मात्सत्त्यं वदन्तमाहुर्द्धर्म्मं वदतीति धर्म्मं वा वदन्तꣳ सत्त्यं वदतीत्त्येतद्ध्येवैतदुभय- म्भवति ॥ २६ ॥ तदेतद्ब्रह्म क्षत्रं विट् शूद्रः । तदग्निन- नैव देवेषु ब्ब्रह्माभवद्ब्राह्मणो मनुष्ष्येषु क्षत्त्रियेण क्षत्त्रियो वैश्श्येन वैश्श्यः शूद्रेण शूद्रस्तस्म्मादग्नावेव देवेषु लोकमि- च्छन्ते ब्ब्राह्मणे मनुष्ष्येष्ष्वेताभ्याꣳ हि रूपाभ्याम्ब्र- ह्माभवत् ॥ २७ ॥ अथ यो ह वा ऽअस्म्माल्लोकात्स्वँल्लो- कमदृष्ट्वा प्प्रैति । स ऽएनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्न्यद्वा कर्म्माकृतं य्यदु ह वा ऽअप्प्यनेवंविन्म- हत्पुण्यङ्कर्म्म करोति तद्धास्यान्ततः क्षीयत ऽएवात्मान-

(१) 'यदि' इति 'ग' 'ज' पुस्तकयोः पाठः ।

मेव लोकमुपासीत स य ऽआत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयतेऽस्म्माद्ध्येवात्मनो यद्यत्कामयते तत्त-त्सृजते ॥ २८ ॥ अथो ऽअयं व्वा ऽआत्मा । सर्व्वेषाम्भूता-नाँल्लोकः स यज्जुहोति यद्यजते तेन देवानाँल्लोकोऽथ यदनु-ब्रूते तेनऽर्षीणामथ यत्प्रजामिच्छते यत्पितृब्भ्यो निपृ-णाति तेन पितृणामथ यन्मनुष्ष्यान्न्वासयते यद्देब्भ्योऽ-शनन्ददाति तेन मनुष्ष्याणामथ यत्पशुब्भ्यस्तृणोदकं व्विन्दति तेन पशूनां ᳪ यदस्य गृहेषु श्वापदा व्वयाᳪस्या पिपीलिकाब्भ्य ऽउपजीवन्ति तेन तेषाँल्लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवᳪ हैवंव्विदे सर्व्वदा सर्व्वाणि भूतान्न्यरिष्टिमिच्छन्ति तद्वा ऽएतद्विदितम्मीमाᳪसितम् ॥ २९ ॥ आत्मैवेदमग्ग्र ऽआसीत् । एक ऽएव सोऽ-कामयत जाया मे स्यादथ प्प्रजायेयाथ व्वित्तम्मे स्यादथ कर्म्म कुर्व्वीयेत्येतावान्न्वै कामो नेच्छँश्चनातो भूयो व्विन्देत्तस्मादप्प्येतर्ह्येकाकी कामयते जाया मे स्या-दथ प्प्रजायेयाथ व्वित्तम्मे स्यादथ कर्म्म कुर्व्वीयेति स यावद-प्प्येतेषामेकैकन्न प्प्राप्प्नोत्यकृत्स्न ऽएव तावन्मन्न्यते तस्यो कृत्स्नता ॥ ३० ॥ मन ऽएवास्यात्मा । व्वाग्ग्जाया प्प्राणः प्प्रजा चक्षुर्म्मानुषं व्वित्तञ्चक्षुषा हि तद्विन्दति श्रोत्र-न्दैवᳪ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्म्मात्मना हि कर्म्म करोति स ऽएष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदᳪ सर्व्वं ᳪ यदिदङ्किञ्च तदिदᳪ सर्व्व-माप्प्नोति यदिदङ्किञ्च य ऽएवं व्वेद ॥ ३१ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ अद्यमानत्वेन सृष्टस्यान्नभूतस्य जगत उपासनार्थं
विभागेन सप्तधा निरूपणम् ]

यत्सप्तान्नानि मेधया तपसाजनयत्पिता ॥ एकमस्य साधारणन्द्वे देवानभाजयत् ॥ त्रीण्यात्मनेऽकुरुत पशुभ्य ऽएकम्प्रायच्छत् ॥ तस्मिन्त्सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा ॥ यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन ॥ स देवानपिगच्छति स ऽऊर्ज्जमुपजीवतीति श्लोकाः ॥ १ ॥ यत्सप्तान्नानि मेधया तपसाजनयत्पितेति । मेधया हि तपसाजनयत्पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य ऽएतदुपास्ते न स पाप्मनो व्यावर्त्तते मिश्रꣳ ह्येतत् ॥ २ ॥ द्वे देवानभाजयदिति । हुतञ्च प्रहुतञ्च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो ऽआहुर्द्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् ॥ ३ ॥ पशुभ्य ऽएकम्प्रायच्छदिति । तत्पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारञ्जातङ्घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्ति ॥ ४ ॥ अथ वत्सञ्जातमाहुः । अतृणाद ऽइति तस्मिन्त्सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदꣳ सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ ५ ॥ तद्यदिदमाहुः । सँवत्सरम्पयसा जुह्वदप पुनर्म्मृत्युञ्जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्म्मृत्युमपजयत्येवं विद्वान्त्सर्वꣳ हि देवेभ्योऽन्नाद्यम्प्रयच्छति कस्मात्तानि न क्षीयन्तेऽद्य-

मानानि सर्व्वंदेति ॥ ६ ॥ पुरुषो वा ऽअक्षितिः । स हीदमन्नम्पुनः पुनर्ज्जनयते यो वै तामक्षितिं वेदेति पुरुषो वा ऽअक्षितिः स हीदमन्नन्धिया धिया जनयते कर्म्मभिर्य्यद्धैतन्न कुर्य्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखम्प्रतीकम्मुखेनेत्येतत्स देवानपिगच्छति स ऽऊर्ज्जमुपजीवतीति प्रशंसा ॥ ७ ॥ त्रीण्यात्मनेऽकुरुतेति । मनो वाचम्प्राणन्तान्यात्मनेऽकुरुतान्यत्रमना ऽअभूवन्नादर्शमन्यत्रमना ऽअभूवन्नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति ॥ ८ ॥ कामः सङ्कल्पः । विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वम्मन ऽएव तस्मादपि पृष्ठत ऽउपस्पृष्टो मनसा विजानाति ॥ ९ ॥ यः कश्च शब्दो वागेव सा । एषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान ऽउदानः समानोऽन ऽइत्येतत्सर्वम्प्राण ऽएवैतन्मयो वा ऽअयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ १० ॥ त्रयो लोका ऽएत ऽएव । वागेवायँल्लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ११ ॥ त्रयो वेदा ऽएत ऽएव । वागेवऽर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ १२ ॥ देवाः पितरो मनुष्या ऽएत ऽएव । वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ १३ ॥ पिता माता प्रजैत ऽएव । मन ऽएव पिता वाङ्माता प्राणः प्रजा ॥ १४ ॥ विज्ञातं विजिज्ञास्यम् । अविज्ञातमेत ऽएव यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनन्तद्भूत्वावति ॥१५॥ यत्किञ्च विजिज्ञास्यम् । मनसस्तद्रूपम्मनो

हि विजिज्ञास्यम्मन ऽएनन्तद्भूत्वावति ॥ १६ ॥ यत्किञ्चा-विज्ञातम् । प्राणस्य तद्रूपम्प्राणो ह्यविज्ञातः प्प्राण ऽएनन्तद्भूत्वावति ॥१७॥ तस्यै व्वाचः पृथिवी शरीरम् । ज्योती रूपमयमग्निस्तद्यावत्येव व्वाक्तावती पृथिवी तावानयमग्निः ॥ १८ ॥ अथैतस्य मनसः । द्यौः शरीरञ्ज्योती रूप-मसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावा-दित्यस्तौ मिथुनᳯ समैतान्ततः प्प्राणोऽजायत स ऽइन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य ऽएवं व्वेद ॥ १९ ॥ अथैतस्य प्प्राणस्यापः । शरीरञ्ज्योती रूपमसौ चन्द्रस्तद्यावानेव प्प्राणस्तावत्य ऽआपस्तावानसौ चन्द्रः ॥२०॥ त ऽएते सर्व्वे ऽएव समाः । सर्व्वेऽनन्ताः स यो हैतानन्तवत ऽउपास्तेऽन्तवन्तᳯ स लोकञ्जयत्यथ यो हैताननन्तानुपास्तेऽनन्तᳯ स लोकञ्ज-यति ॥ २१ ॥ स ऽएष सँव्वत्सरः । प्प्रजापतिः षोडश-कलस्तस्य रात्रय ऽएव पञ्चदश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्य्यतेऽप च क्षीयते सोऽमा-वास्याᳬ रात्रिमेतया षोडश्या कलया सर्व्वमिदम्प्राणभृद-नुप्प्रविश्य ततः प्प्रातर्ज्जायते तस्मादेताᳬ रात्रिम्प्राण-भृतः प्प्राणन्न व्विच्छिन्द्यादपि कृकलासस्यैतस्या ऽएव देवताया ऽअपचित्यै ॥ २२ ॥ यो वै स सँव्वत्सरः । प्प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंव्वित्पुरुषस्तस्य व्वित्तमेव पञ्चदश कला ऽआत्मैवास्य षोडशी कला स

( १–२ ) "एव तद्भूत्वावति" इति 'ग' 'ज' पुस्तकयोः ।

वित्तेनैवा च पूर्ख्यतेऽप च क्षीयते तदेतन्नभ्यं ख्यदयमात्मा प्प्रधिर्व्वित्तन्तस्म्माद्यद्यपि सर्व्वज्यानिञ्जीयत ऽआत्मना चेज्जीवति प्प्रधिनागादित्त्याहुः ॥ २३ ॥ अथ त्रयो वाव लोकाः । मनुष्ष्यलोकः पितृलोको देवलोक ऽइति सोऽयम्मनुष्ष्यलोकः पुत्त्रेणैव जख्यो नान्न्येन कर्म्मणा कर्म्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाᳬं श्रेष्ठस्तस्म्माद्विद्याम्प्रशᳫसन्ति ॥ २४ ॥ अथातः सम्प्रत्तिः । यदा प्प्रैष्ष्यन्न्मन्न्यतेऽथ पुत्त्रमाह त्त्वम्ब्रह्म त्त्वं ख्यज्ञस्त्वँल्लोक ऽइति स पुत्त्रः प्प्रत्त्याहाहम्ब्रह्माहं ख्यज्ञोऽहँल्लोक ऽइति ॥ २५ ॥ यद्वै किञ्चानूक्तम् । तस्य सर्व्वस्य ब्ब्रह्मेत्त्येकता ये वै के च यज्ञास्तेषाᳬं सर्व्वेषां ख्यज्ञ ऽइत्त्येकता ये वै के च लोकास्तेषाᳬं सर्व्वेषाँल्लोक ऽइत्त्येकतैतावद्वा ऽइदᳫ सर्व्वमेतन्न्मा सर्व्वᳫ सन्नयमितोऽभुनजदिति तस्म्मात्त्पुत्त्रमनुशिष्टँल्लोक्क्यमाहुस्तस्म्मादेनमनुशासति स यदैवंविदस्म्माल्लोकात्त्प्रैत्त्यथैभिरेव प्प्राणैः सह पुत्त्रमाविशति स यद्यनेन किञ्चिदक्ष्णया कृतम्भवति तस्म्मादेनᳫ सर्व्वस्म्मात्त्पुत्त्रो मुञ्चति तस्म्मात्त्पुत्त्रो नाम स पुत्त्रेणैवास्मिँमल्लोके प्प्रतितिष्ठत्त्यथैनमेते दैवाः प्प्राणा ऽअमृता ऽआविशन्ति ॥२६॥ पृथिव्व्यै चैनमग्ग्नेश्च । दैवी व्वागाविशति सा वै दैवी व्वाग्ग्यया यद्यदेव व्वदति तत्तद्भवति ॥ २७ ॥ दिवश्चैनमादित्त्याच्च । दैवम्मन ऽआविशति तद्वै दैवम्मनो येनानन्द्येव भवत्त्यथो न शोचति ॥ २८ ॥ अद्भ्यश्चैनञ्चन्द्रमसश्च । दैवः प्प्राण ऽआविशति स वै दैवः प्प्राणो यः

सञ्चरँश्चासञ्चरँश्च न व्यथतेऽथो न रिष्यति स ऽएष ऽएवँवित्सर्वेषाम्भूतानामात्मा भवति यथैषा देवतैवछ स यथैतान्देवताथं सर्वाणि भूतान्न्यवन्त्येवछ हैवंविदछ सर्वाणि भूतान्न्यवन्ति यदु किञ्चेमाः प्प्रजाः शोचन्त्यमैवासान्तद्भवति पुण्ण्यमेवामुङ्गच्छति न ह वै देवान्पापङ्गच्छति ॥ २९ ॥ अथातो व्रतमीमाथंसा । प्प्रजापतिर्ह कर्म्माणि ससृजे तानि सृष्टान्न्यन्न्योऽन्न्येनास्प्पर्द्धन्त वदिष्ष्याम्म्येवाहमिति व्वाग्दद्ध्रे द्रक्ष्याम्म्यहमिति चक्षुः श्रोष्ष्याम्म्यहमिति श्रोत्रमेवमन्न्यानि कर्म्माणि यथाकर्म्म ॥ ३० ॥ तानि मृत्युः श्रमो भूत्त्वोपयेमे । तान्न्याप्प्नोत्तान्न्याप्प्त्वा मृत्युरवारुन्द्ध तस्म्माच्छ्राम्म्यत्त्येव व्वाक्श्राम्म्यति चक्षुः श्राम्म्यति श्रोत्रमथेममेव नाप्प्नोद्योऽयम्मद्ध्यमः प्प्राणः ॥ ३१ ॥ तानि ज्ञातुन्दद्ध्रिरे । अयं वै नः श्रेष्ठो यः सञ्चरँश्चासचरँश्च न व्यथतेऽथो न रिष्यति हन्तास्यैव सर्वे रूपम्भवामेति त ऽएतस्यैव सर्वे रूपमभवँस्तस्म्मादेत ऽएतेनाख्यायन्ते प्प्राणा ऽइति तेन ह वाव तत्कुलमाख्यायते यस्मिन्न्कुले भवति य ऽएवं व्वेद य ऽउ हैवंविदा स्पर्द्धतेऽनुशुष्ष्य हैवान्ततो म्म्रियत ऽइत्त्यद्ध्यात्ममम् ॥ ३२ ॥ अथाधिदेवतम् । ज्वलिष्ष्याम्म्येवाहमित्त्यग्निर्दद्ध्रे तप्प्स्याम्म्यहमित्त्यादित्त्यो भास्याम्म्यहमिति चन्द्रमा ऽएवमन्न्या देवता यथादेवतछ स यथैषाम्प्राणानाम्मद्ध्यमः प्प्राण ऽएवमेतासान्देवतानां व्वायुम्म्लोचन्ति ह्यन्न्या देवता न वायुः सैषानस्तमिता देवता यद्वायुः

॥ ३३ ॥ अथैष श्लोको भवति । यतश्चोदेति सूर्य्योऽस्तं ऽयत्र च गच्छतीति प्प्राणाद्वा ऽएष ऽउदेति प्प्राणेऽस्तमेति तन्देवाश्चक्रिरे धर्म्मँ स ऽएवाद्य स ऽउ श्व ऽइति यद्वा ऽएतेऽमुर्ह्यध्रियन्त तदेवाप्प्यद्य कुर्वन्ति तस्म्मादेकमेव व्रत-ञ्चरेत्प्राण्याच्चैवापान्याच्च नेन्म्मा पाप्म्मा मृत्युराप्नवदिति यद्यु चरेत्समापिपयिषेत्तेनो ऽएतस्यै देवतायै सायुज्यँ सलोकताञ्जयति य ऽएवं वेद ॥ ३४ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—o—

[ प्रपञ्चितस्याविद्याकार्यस्य संक्षेपेणोपसंहारः ]

त्रयं वा ऽइदन्नाम रूपङ्कर्म्म । तेषान्नाम्म्नां वागि-त्येतदेषामुक्क्थमतो हि सर्व्वाणि नामान्न्युत्तिष्ठन्त्येतदेषाँ सामैतद्धि सर्व्वैर्न्नामभिः सममेतदेषाम्ब्रह्मैतद्धि सर्व्वाणि नामानि बिभर्त्ति ॥ १ ॥ अथ रूपाणाम् । चक्षुरित्येत-देषामुक्क्थमतो हि सर्व्वाणि रूपाण्ण्युत्तिष्ठन्त्येतदेषाँ सामैतद्धि सर्व्वै रूपैः सममेतदेषाम्ब्रह्मैतद्धि सर्व्वाणि रूपाणि बिभर्त्ति ॥ २ ॥ अथ कर्म्मणाम् । आत्मेत्येतदेषामुक्क्थ-मतो हि सर्व्वाणि कर्म्माण्ण्युत्तिष्ठन्त्येतदेषाँ सामैतद्धि सर्व्वैः कर्म्मभिः सममेतदेषाम्ब्रह्मैतद्धि सर्व्वाणि कर्म्माणि बिभर्त्ति तदेतत्त्रयँ सदेकमयमात्मात्मो ऽएकः सन्नेतत्त्र-

यन्तदेतदमृतꣳ सत्येन च्छन्नम्प्राणो वा ऽअमृतन्नामरूपे सत्यन्ताभ्यामयम्प्राणश्छन्नः ॥ ३ ॥

## चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ १०१ ॥

## इति चतुर्थोऽध्यायः ॥ ४ ॥

—०—

[ अविद्याविषयमेव आत्मत्वेनोपगतवन्तं गार्ग्यं पूर्वपक्षिणं तद्विपरीतात्मदर्शिनमजातशत्रुं सिद्धान्तिनं चोपस्थाप्य आख्यायिकाप्रदर्शनम् ]

दृप्तबालाकिर्हानूचानो गार्ग्य ऽआस । स होवाचाजातशत्रुङ्काश्यम्ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक ऽइति वै जना धावन्तीति ॥ १ ॥ स होवाच गार्ग्यः । य ऽएवासावादित्ये पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्संवदिष्ठा ऽअतिष्ठाः सर्वेषाम्भूतानाम्मूर्द्धा राजेति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्तेऽतिष्ठाः सर्वेषाम्भूतानाम्मूर्द्धा राजा भवति ॥ २ ॥ स होवाच गार्ग्यः । य ऽएवासौ चन्द्रे पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥ स होवाच गार्ग्यः । य ऽएवायं

विद्युति पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठास्तेजस्वीति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्प्रजा भवति ॥ ४ ॥ स होवाच गार्ग्ग्यः । य ऽएवायमाकाशे पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठाः पूर्ण्णमप्प्रवर्त्तीति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते पूर्य्यते प्प्रजया पशुभिर्न्नास्यास्म्माल्लोकात्प्रजोद्वर्त्तते ॥ ५ ॥ स होवाच गार्ग्ग्यः । य ऽएवायं वायौ पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा ऽइन्द्रो वैकुण्ठोऽपराजिता सेनेति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥ स होवाच गार्ग्ग्यः । य ऽएवायमग्नौ पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा विषासहिरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्प्रजा भवति ॥ ७ ॥ स होवाच गार्ग्ग्यः । य ऽएवायमप्प्सु पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठाः प्प्रतिरूप ऽइति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते प्प्रतिरूपः हैवैनमुपगच्छति नाप्प्रतिरूपमथो प्प्रतिरूपोऽस्म्माज्जायते ॥ ८ ॥ स होवाच गार्ग्ग्यः । य ऽएवायमादर्शे पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मि

न्त्सँव्वदिष्ठा रोचिष्णुरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्प्रजा भवत्त्यथो यैः सन्निगच्छति सर्वांस्तानतिरोचते ॥ ९ ॥ स होवाच गार्ग्यः । य ऽएवायन्दिक्षु पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँव्वदिष्ठा द्वितीयोऽनपग ऽइति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते द्वितीयवान्ह भवति नास्मा-द्गणश्छिद्यते ॥ १० ॥ स होवाच गार्ग्यः । य ऽएवायं य्यन्तम्पश्चाच्छब्दोऽनूदेत्त्येतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँव्वदिष्ठा ऽअसुरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते सर्व्वᳬं हैवा-स्मिँल्लोक ऽआयुरेति नैनम्पुरा कालात्प्राणो जहाति ॥ ११ ॥ स होवाच गार्ग्यः । य ऽएवायञ्छायामयः पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैत-स्मिन्त्सँव्वदिष्ठा मृत्त्युरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते सर्व्वᳬं हैवास्मिँल्लोक ऽआयुरेति नैन-म्पुरा कालान्मृत्त्युरागच्छति ॥ १२ ॥ स होवाच गार्ग्यः । य[1] ऽएवायमात्मनि पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँव्वदिष्ठा ऽआत्मन्वीति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्त ऽआत्मन्वी ह भवत्त्यात्मन्विनी हास्य प्प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥ स होवाचाजातशत्रुः । एतावन्नू३ ऽइत्त्ये-

---

( १ ) "यश्चायमात्मनि" इति 'ग' 'ज' पुस्तकयोः ।

तावद्धीति नैतावता विदितम्भवतीति स होवाच गार्ग्य ऽउप त्वायानीति ॥ १४ ॥ स होवाचाजातशत्रुः । प्प्रतिलोमं वै तद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्व्येव त्वा ज्ञपयिष्यामीति तम्पाणावादायोत्तस्थौ तौ ह पुरुषᳪ सुप्तमाजग्मतुस्तमेतैर्न्नामभिरामन्त्रयाञ्चक्रे बृहत्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तम्पाणिनापेषं बोधयाञ्चकार स होत्तस्थौ ॥ १५ ॥ स होवाचाजातशत्रुः । यत्रैष ऽएतत्सुप्तोऽभूद्य ऽएष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत ऽएतदागादिति तदु ह न मेने गार्ग्यः ॥ १६ ॥ स होवाचाजातशत्रुः । यत्रैष ऽएतत्सुप्तोऽभूद्य ऽएष विज्ञानमयः पुरुषस्तदेषाम्प्राणानां विज्ञानेन विज्ञानमादाय य ऽएषोन्तर्हृदय ऽआकाशस्तस्मिञ्छेते ॥ १७ ॥ * तानि यदा गृह्णाति । अथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत ऽएव प्प्राणो भवति गृहीता व्वाग्गृहीतञ्चक्षुर्ग्गृहीतᳪ श्रोत्रङ्गृहीतम्मनः ॥ १८ ॥ स यत्रैतत्स्वप्न्यया चरति । ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्ब्राह्मण ऽउतेवोच्चावचन्निगच्छति ॥ १९ ॥ स यथा महाराजो जानपदान्गृहीत्वा स्वे जनपदे यथाकामम्परिवर्त्तेतैवमेवैष ऽएतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामम्परिवर्त्तते ॥ २० ॥ अथ यदा सुषुप्तो भवति । यदा न कस्य चन व्वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्प्रतिष्ठन्ते ताभिः प्प्रत्यवसृप्य पुरीतति शेते

* शतम् ७२०० ।

॥२१॥ स यथा कुमारो वा महाब्ब्राह्मणो वा। अतिघ्नीमा-नन्दुस्य गत्वा शयीतैवमेवैष ऽएतच्छेते ॥ २२ ॥ स यथो-र्णवाभिस्तन्तुनोच्चरेत् । यथाग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्त्येवमेवास्म्मादात्मनः सर्व्वे प्प्राणाः सर्व्वे लोकाः सर्व्वे देवाः सर्व्वाणि भूतानि सर्व्व ऽएत ऽआत्मानो व्व्यु-च्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्प्राणा वै सत्यन्ते-षामेष सत्यम् ॥ २३ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ प्राणा वै सत्यमित्यंशेनोक्तायाः प्राणोपनिषदो व्याख्यानम् ]

यो ह वै शिशुम् । साधानꣳ सप्प्रत्याधानꣳ सस्थूणꣳ सदामं व्वेद सप्त ह द्विषतो ब्भ्रातृव्यानवरु-णद्धि ॥ १ ॥ अयं व्वाव शिशुर्य्योऽयम्मद्ध्यमः प्प्राणः । तस्येदमेवाधानमिदम्प्रत्याधानम्प्राण स्त्थूणान्नन्दाम तमेताः सप्ताक्षितय ऽउपतिष्ठन्ते ॥ २ ॥ तद्या ऽइमा ऽअक्षँ-ल्लोहिन्न्यो राजयः । ताभिरेनꣳ रुद्रोऽन्न्वायत्तोऽथ या ऽअंक्षन्नापस्ताभिः पर्ज्जन्न्यो या कनीनका तयादित्यो य-च्छुक्क्लन्तेनाग्निर्य्यत्कृष्णन्तेनेन्द्रोऽधरयैनं व्वर्त्तन्न्या पृथि-व्व्यन्न्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य ऽएवं व्वेद ॥ ३ ॥ तदेष श्लोको भवति । अर्व्वाग्बिलश्चमस ऽऊर्द्ध्व-बुद्ध्नस्तस्म्मिन्न्यशो निहितं विश्श्वरूपम् ॥ तस्यासत ऽऋषयः सप्त तीरे व्वागष्टमी ब्ब्रह्मणा सँविदानेति ॥ ४ ॥

अर्व्वाग्बिलश्चमस ऽऊर्द्ध्वबुद्‌ध्न ऽइति । इदन्तच्छिर ऽएष ह्यर्व्वाग्बिलश्चमस ऽऊर्द्ध्वबुद्‌ध्नस्तस्मिन्न्यशो निहितं विश्श्वरूपमिति प्प्राणा वै यशो निहितं विश्श्वरूपम्प्राणानेतदाह तस्यासत ऽऋषयः सप्त तीर ऽइति प्प्राणा वा ऽऋषयः प्प्राणानेतदाह व्वागष्टमी ब्ब्रह्मणा सँविदानेति व्वाग्घ्यष्टमी ब्ब्रह्मणा सँवित्ते ॥ ५ ॥ इमावेव गोतमभरद्वाजौ । अयमेव गोतमोऽयम्भरद्वाज ऽइमावेव विश्श्वामित्रजमदग्ग्नी ऽअयमेव विश्श्वामित्रोऽयञ्जमदग्ग्निरिमावेव व्वसिष्ठकश्श्यपावयमेव व्वसिष्ठोऽयङ्कश्श्यपो व्वागेवात्रिर्व्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्व्वस्यात्ता भवति सर्व्वमस्यान्नम्भवति य ऽएवं व्वेद ॥ ६ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

ब्रह्मण उपाधिभूतयोर्मूर्तामूर्तयोः कार्यकरणविभागेनाध्यात्माधिदैवतयोः विभागप्रदर्शनम् ]

द्वे वाव ब्ब्रह्मणो रूपे । मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्त्यच्च ॥ १ ॥ तदेतन्म्मूर्त्तम् । यदन्न्यद्वायोश्चान्तरिक्षाच्चैतन्म्मर्त्यमेतत्स्थितमेतत्सत् ॥ २ ॥ तस्यैतस्य मूर्त्तस्य । एतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत ऽएष रसो य ऽएष तपति सतो ह्येष रसः ॥ ३ ॥ अथामूर्त्तम् । व्वायुश्चान्तरिक्षञ्चैतदमृतमेतद्यदेतत्त्यम् ॥ ४ ॥ तस्यैतस्यामूर्त्तस्य । एतस्यामृतस्यैतस्य यत ऽएतस्य त्त्यस्यैष रसो य ऽएष ऽएतस्मिन्न्मण्डले पुरुषस्त्यस्य ह्येष रस

ऽइत्यधिदैवतम् ॥ ५ ॥ अथाध्यात्मम् । इदमेव मूर्त्तं य्यद्-
न्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश ऽएतन्मर्त्यमेतत्स्थि-
तमेतत्सत् ॥ ६ ॥ तस्यैतस्य मूर्त्तस्य । एतस्य मर्त्यस्यै-
तस्य स्थितस्यैतस्य सत ऽएष रसो यच्चक्षुः सतो ह्येष
रसः ॥ ७ ॥ अथामूर्त्तम् । प्राणश्च यश्चायमन्तरात्मन्ना-
काश ऽएतदमृतमेतद्यदेतत्त्यम् ॥ ८ ॥ तस्यैतस्यामूर्त्तस्य ।
एतस्यामृतस्यैतस्य यत ऽएतस्य त्यस्यैष रसो योऽयन्द-
क्षिणेऽक्षन्पुरुषस्त्यस्य ह्येष रसः ॥ ९ ॥ तस्य हैतस्य
पुरुषस्य रूपम् । यथा माहारजनं वासो यथा पाण्ड्वाविकं
य्यथेन्द्रगोपो यथाग्न्यर्च्चिर्य्यथा पुण्डरीकं य्यथा सकृद्वि-
द्युत्तः सकृद्विद्युत्तेव ह वा ऽअस्य श्रीर्भवति य ऽएवं
वेद ॥ १० ॥ अथात ऽआदेशः । नेति नेति न ह्येतस्मा-
दिति नेत्यन्यत्परमस्त्यथ नामधेयः सत्यस्य सत्यमिति
प्प्राणा वै सत्यन्तेषामेष सत्यम् ॥ ११ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ प्रस्तुताया ब्रह्मविद्याया अङ्गत्वेन संन्यासविधानार्थं याज्ञवल्क्य-
मैत्रेयीसंवादरूपाख्यायिका ]

मैत्रेयीति होवाच याज्ञवल्क्यः । उद्यास्यन्वा ऽअरेऽ-
हमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्त-
ङ्करवाणीति ॥ १ ॥ सा होवाच मैत्रेयी । यन्नु म ऽइयम्भगोः
सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथन्तेनामृता स्यामिति
नेति होवाच याज्ञवल्क्यो यथैवोपकरणवताञ्जीवितन्तथैव

ते जीवितꣳ स्यादमृतत्त्वस्य तु .नाशास्ति वित्तेनेति ॥ २ ॥ सा होवाच मैत्रेयी । येनाहन्नामृता स्याङ्किमहन्तेन कुर्य्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ३ ॥ स होवाच याज्ञवल्क्यः । प्प्रिया बतारे नः सती प्प्रियम्भाषस ऽएह्यास्व व्व्याख्यास्यामि ते व्व्याचक्षाणस्य तु मे निदिध्यासस्वेति ब्रवीतु भगवानिति ॥ ४ ॥ स होवाच याज्ञवल्क्यः । न वा ऽअरे पत्युः कामाय पतिः प्प्रियो भवत्यात्मनस्तु कामाय पतिः प्प्रियो भवति न वा ऽअरे जायायै कामाय जाया प्प्रिया भवत्यात्मनस्तु कामाय जाया प्प्रिया भवति न वा ऽअरे पुत्राणाङ्कामाय पुत्राः प्प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्प्रिया भवन्ति न वा ऽअरे वित्तस्य कामाय वित्तम्प्रियम्भवत्यात्मनस्तु कामाय वित्तम्प्रियम्भवति न वा ऽअरे ब्रह्मणः कामाय ब्रह्म प्प्रियम्भवत्यात्मनस्तु कामाय ब्रह्म प्प्रियम्भवति न वा ऽअरे क्षत्रस्य कामाय क्षत्रम्प्रियम्भवत्यात्मनस्तु कामाय क्षत्रम्प्रियम्भवति न वा ऽअरे लोकानाङ्कामाय लोकाः प्प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्प्रिया भवन्ति न वा ऽअरे देवानाङ्कामाय देवाः प्प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्प्रिया भवन्ति न वा ऽअरे भूतानाङ्कामाय भूतानि प्प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्प्रियाणि भवन्ति न वा ऽअरे सर्वस्य कामाय सर्वम्प्रियम्भवत्यात्मनस्तु कामाय सर्वम्प्रियम्भवत्यात्मा वा ऽअरे द्रष्टव्व्यः श्रोतव्व्यो मन्तव्व्यो निदिध्यासितव्व्यो मैत्रेय्यात्मनो वा ऽअरे दर्शनेन श्रवणेन

मत्या विज्ञानेनेदꣳ सर्वं विदितम् ॥ ५ ॥ ब्रह्म तम्परादात् ।
योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रन्तम्परादाद्योऽन्यत्रात्मनः
क्षत्रं वेद लोकास्तम्परादुर्योऽन्यत्रात्मनो लोकान्वेद देवा-
स्तम्परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तम्परादुर्योऽ-
न्यत्रात्मनो भूतानि वेद सर्वन्तम्परादाद्योऽन्यत्रात्मनः
सर्वं वेदेदम्ब्रह्मेदं क्षत्रमिमे लोका ऽइमे देवा ऽइमानि
भूतानीदꣳ सर्वं यदयमात्मा ॥ ६ ॥ स यथा दुन्दुभेर्हन्य-
मानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु
ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो * गृहीतः ॥ ७ ॥
स यथा वीणायै वाद्यमानायै । न बाह्याञ्छब्दाञ्छक्नुया-
द्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो
गृहीतः ॥ ८ ॥ स यथा शङ्खस्य द्ध्मायमानस्य । न
बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्ख-
द्ध्मस्य वा शब्दो गृहीतः ॥ ९ ॥ स यथार्द्रैधाग्नेरभ्या-
हितस्य । पृथग्धूमा विनिश्चरन्त्येवं वा ऽअरेऽस्य महतो
भूतस्य निश्श्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वा-
ङ्गिरस ऽइतिहासः पुराणं विद्या ऽउपनिषदः श्लोकाः
सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि
निश्श्वसितानि ॥ १० ॥ स यथा सर्वासामपाꣳ समुद्र
ऽएकायनम् । एवꣳ सर्वेषाꣳ स्पर्शानान्त्वगेकायनमेवꣳ
सर्वेषाङ्गन्धानान्नासिके ऽएकायनमेवꣳ सर्वेषाꣳ रसानाञ्जि-
ह्वैकायनमेवꣳ सर्वेषाꣳ रूपाणाञ्चक्षुरेकायनमेवꣳ सर्वेषाꣳ

* अत्र 'ग' 'ज' पुस्तकयोः 'भवति'' इत्यधिकः पाठ उपलभ्यते ।

शब्दानाᳪं श्रोत्रमेकायनमेवᳪं सर्वेषाᳪं सङ्कल्पानाम्मन ऽएकायनमेवᳪं सर्वेषां वेदानाᳪं हृदयमेकायनमेवᳪं सर्वेषाङ्कर्म्मणाᳪं हस्तावेकायनमेवᳪं सर्वेषामध्वनाम्पादावेकायनमेवᳪं सर्वेषामानन्दानामुपस्थ ऽएकायनमेवᳪं सर्वेषां विसर्गाणाम्पायुरेकायनमेवᳪं सर्वासां विद्यानां वागेकायनम् ॥ ११ ॥ स यथा सैन्धवखिल्ल्यᳪं । उदके प्प्रास्त ऽउदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा ऽअर ऽइदम्महद्भूतमनन्तमपारं विज्ञानघन ऽएवैतेभ्यो भूतेभ्यᳪं समुत्थाय तान्न्येवानुविनश्यति न प्प्रेत्त्य संज्ञास्तीत्त्यरे ब्रवीमीति होवाच याज्ञवल्क्यᳪं ॥१२॥ [अर्धः प्रपाठकः ॥५२॥] सा होवाच मैत्रेयी । अत्रैव मा भगवानमूमुहन्न प्प्रेत्त्य संज्ञास्तीति ॥ १३ ॥ स होवाच याज्ञवल्क्यᳪं । न वा ऽअरेऽहम्मोहम्ब्रवीम्म्यलं वा ऽअर ऽइदं विज्ञानाय ॥१४॥ यत्र हि द्वैतमिव भवति । तदितर ऽइतरम्पश्यति तदितर ऽइतरञ्जिघ्रति तदितर इतरमभिवदति तदितर ऽइतरᳪं शृणोति तदितर ऽइतरम्मनुते तदितर ऽइतरं विजानाति ॥ १५ ॥ यत्र त्वस्य सर्वमात्मैवाभूत् । तत्केन कम्पश्येत्तत्केन कञ्जिघ्रेत्तत्केन कमभिवदेत्तत्केन कᳪं शृणुयात्तत्केन कम्मन्न्वीत तत्केन कं विजानीयाद्येनेदᳪं सर्वं विजानाति तङ्केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥ १६ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ उक्तस्याध्यायद्वयस्यार्थोपसंहारः, आचार्यपरम्पराक्रमरूपवंशकथनञ्च ]

इयम्पृथिवी । सर्व्वेषाम्भूतानाम्मद्ध्वस्यै पृथिव्यै सर्व्वाणि भूतानि मधु यश्चायमस्याम्पृथिव्यान्तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ १ ॥ इमा ऽआपः । सर्व्वेषाम्भूतानाम्मद्ध्वासामपाꣳ सर्व्वाणि भूतानि मधु यश्चायमास्वप्प्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ २ ॥ अयमग्निः । सर्व्वेषाम्भूतानाम्मद्ध्वस्याग्नेः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ३ ॥ अयमाकाशः । सर्व्वेषाम्भूतानाम्मद्ध्वस्याकाशस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ४ ॥ अयं वायुः । सर्व्वेषाम्भूतानाम्मद्ध्वस्य वायोः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मम्प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ५ ॥ अयमादित्यः । सर्व्वेषाम्भूतानाम्मद्ध्वस्यादित्यस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽ-

मृतमयः पुरुषो यश्चायमध्यात्मञ्चाक्षुषस्तेजोमयोऽमृत-
मयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्वम्
॥ ६ ॥ अयञ्चन्द्रः । सर्वेषाम्भूतानाम्मध्वस्य चन्द्रस्य
सर्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽ-
मृतमयः पुरुषो यश्चायमध्यात्मम्मानसस्तेजोमयोऽमृत-
मयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्वम्
॥ ७ ॥ इमा दिशः । सर्वेषाम्भूतानाम्मध्वासान्दिशाꣳ
सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृत-
मयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः प्रातिश्रुत्कस्तेजो-
मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिद-
म्ब्रह्मेदꣳ सर्वम् ॥ ८ ॥ इयं विद्युत् । सर्वेषाम्भूतानाम्मध्वस्यै
विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति
तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मन्तैजसस्तेजो-
मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिद-
म्ब्रह्मेदꣳ सर्वम् ॥ ९ ॥ अयꣳ स्तनयित्नुः । सर्वेषाम्भू-
तानाम्मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चा-
यमस्मिन्त्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चा-
यमध्यात्मꣳ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव
स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्वम् ॥१०॥ अयन्धर्म्मः ।
सर्वेषाम्भूतानाम्मध्वस्य धर्म्मस्य सर्वाणि भूतानि मधु यश्चा-
यमस्मिन्धर्म्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्या-
त्मन्धार्म्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे-
दममृतमिदम्ब्रह्मेदꣳ सर्वम् ॥११॥ इदꣳ सत्यम् । सर्वेषाम्भूता-

नाम्मद्धस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्त्स-त्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मछं सात्यस्तेजो-मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिद-म्ब्रह्मेदछं सर्वम् ॥१२॥ इदम्मानुषम् । सर्वेषाम्भूतानाम्मद्धस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजो-मयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्मानुषस्तेजोमयोऽ-मृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदछं सर्वम् ॥ १३ ॥ अयमात्मा । सर्वेषाम्भूतानाम्मद्धस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृ-तमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽ-यमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदछं सर्वम् ॥ १४ ॥ स वा ऽअयमात्मा । सर्वेषाम्भूतानामधिपतिः सर्वेषाम्भू-तानाछं राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्प्पिता ऽएवमेवास्मिन्नात्मनि सर्वे प्प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व ऽएत ऽआत्मानः सम-र्प्पिताः ॥ १५ ॥ इदं वै तन्मधु । दध्यङ्ङाथर्वणोऽश्विव-भ्यामुवाच तदेतदृषिः पश्यन्नवोचत् ॥ '[1]तद्वान्नरा सनये दुछंस ऽउग्रमाविष्कृणोमि तन्न्यतुर्न्न व्वृष्टिम् ॥ दध्यङ् ह यन्मद्ध्वाथर्वणो वामश्वस्य शीर्ष्णा प्प्र यदीमुवाचे'ति ॥ १६ ॥ इदं वै तन्मधु । दध्यङ्ङाथर्वणोऽश्विभ्या-मुवाच तदेतदृषिः पश्यन्नवोचत् ॥ '[2]आथर्वणायाश्विना दधीचेऽश्व्यछं शिरः प्प्रत्यैरयतम् ॥ स वाम्मधु प्प्रवोचदृता-

(१) ऋ० सं १. ८ १० । (२) ऋ० सं १. ८. १७ ।

यन्त्वाष्ट्रं रुग्यद्स्त्रावपि कक्ष्यं वा'मिति ॥ १७ ॥ इदं वै तन्न्मधु । दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् ॥ पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ॥ पुरः स पक्षी भूत्वा पुरः पुरुष ऽआविशदिति स वा ऽअयम्पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतन्नैनेन किञ्चनासंवृतम् ॥ १८ ॥ इदं वै तन्न्मधु । दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् ॥ 'रूपꣳरूपम्प्रतिरूपो बभूव तदस्य रूपम्प्रतिचक्षणाय ॥ इन्द्रो मायाभिः पुरुरूप ऽईयते युक्ता ह्यस्य हरयः शता दश'-त्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥ १९ ॥ अथ वꣳशः । तदिदं वयꣳ शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्याच्च पाराशर्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज ऽऔदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्न्यायनाच्च कौण्डिन्न्यायनः कौण्डिन्न्यात्कौण्डिन्न्यः कौण्डिन्न्यात्कौण्डिन्न्यः कौण्डिन्न्याच्चाग्निवेश्याच्च ॥ २० ॥ अग्निवेश्यः सैतवात् । सैतवः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजा-

(१) ऋ० सं० ४. ७. ३३ ।

द्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो वैजवापायनाद्वैजवापायनः कौशिकायनेः-कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज ऽआत्रेयात् ॥२१॥ आत्रेयो माण्टेः। माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य ऽआङ्गिरस ऽआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच ऽआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन ऽएकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ २२ ॥

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

[ तत्त्वज्ञाने आगमोपपत्त्योरावश्यकत्वप्रतिपादनम् ]

( तत्र च ब्रह्मविद्यास्तुत्यर्थाऽऽख्यायिका )

जनको ह वैदेहः । बहुदक्षिणेन * यज्ञेनेजे तत्र ह कुरुपञ्चालानाम्ब्राह्मणा ऽअभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषाम्ब्राह्मणानामनूचानतम ऽइति ॥ १ ॥ स ह गवाᳬं सहस्रमवरुरोध । दश दश पादा ऽएकैकस्याः शृङ्गयोराबद्धा बभूवुस्तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स ऽएता गा ऽउदजतामिति ते ह ब्राह्मणा न दधृषुः ॥ २ ॥ अथ ह याज्ञवल्क्यः । स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सामश्रवा३ ऽइति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथन्नु नो ब्रह्मिष्ठो ब्रुवीतेति ॥ ३ ॥ अथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव । स हैनम्प्रपच्छ त्वन्नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ ऽइति स होवाच नमो वयम्ब्रह्मिष्ठाय कुर्म्मो गोकामा ऽएव वयᳬं स्म ऽइति तᳬं ह तत ऽएव प्रष्टुन्दध्रे होताऽश्वलः ॥ ४ ॥ याज्ञवल्क्येति होवाच । यदिदᳬं सर्वम्मृत्युनाप्तᳬं सर्वम्मृत्युनाभिपन्नङ्केन यजमानो मृत्योराप्तिमतिमुच्यत ऽइति होत्रऽर्त्विजाग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक्सोऽयमग्निः स होता सा मुक्तिः सातिमुक्तिः ॥५॥ याज्ञवल्क्येति होवाच । यदिदᳬं सर्वमहोरात्राभ्यामाप्तᳬं सर्वमहोरात्राभ्यामभिपन्नङ्केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत

---

* शाखान्तरप्रसिद्धेन, बहुदक्षिणाविशिष्टेनाश्वमेधेन वा ।

ऽइत्यद्ध्वर्य्युणर्त्विजा चक्षुषादित्येन चक्षुर्वै यज्ञस्याद्ध्वर्य्युस्तद्यदिदञ्चक्षुः सोऽसावादित्यः सोऽद्ध्वर्य्युः सा मुक्तिः सातिमुक्तिः ॥ ६ ॥ याज्ञवल्क्येति होवाच । यदिदꣳ सर्वम्पूर्वपक्षापरपक्षाब्भ्यामाप्तꣳ सर्वम्पूर्वपक्षापरपक्षाब्भ्यामभिपन्नङ्केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्च्यत ऽइति ब्ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्ब्रह्मा तद्यदिदम्मनः सोऽसौ चन्द्रः स ब्ब्रह्मा सा मुक्तिः सातिमुक्तिः ॥७॥ याज्ञवल्क्येति होवाच। यदिदमन्तरिक्षमनारम्बणमिवाथ केनाक्क्रमेण यजमानः स्वर्ग्गँल्लोकमाक्क्रमत ऽइत्युद्गात्रर्त्विजा वायुना प्प्राणेन प्प्राणो वै यज्ञस्योद्गाता तद्योऽयम्प्राणः स वायुः स ऽउद्गाता सा मुक्तिः सातिमुक्तिरित्यतिमोक्षा ऽअथ सम्पदः ॥ ८ ॥ याज्ञवल्क्येति होवाच । कतिभिरयमद्यऽर्ग्भिर्होतास्म्मिन्न्यज्ञे करिष्ष्यतीति तिसृभिरिति कतमास्तास्तिस्त्र ऽइति पुरोऽनुवाक्क्या च याज्ज्या च शस्यैव तृतीया किन्ताभिर्ज्जयतीति पृथिवीलोकमेव पुरोऽनुवाक्क्यया जयत्यन्तरिक्षलोकं ऽयाज्ज्यया द्यौल्लोकꣳ शस्यया ॥९॥ याज्ञवल्क्येति होवाच । कत्ययमद्याद्ध्वर्य्युरस्म्मिन्न्यज्ञ ऽआहुतीर्होष्ष्यतीति तिस्त्र ऽइति कतमास्तास्तिस्त्र ऽइति या हुता ऽउज्ज्वलन्ति या हुता ऽअतिनेदन्ति या हुता ऽअधिशेरते किन्ताभिर्ज्जयतीति या हुता ऽउज्ज्वलन्ति देवलोकमेव ताभिर्ज्जयति दीप्प्यत ऽइव हि देवलोको या हुता ऽअतिनेदन्ति मानुष्ष्यलोकमेव ताभि-

( १ ) "मनुष्यलोक०" इति 'ग' 'ज' पुस्तकयोः । काण्वशाखायामपि "मनुष्यलो०" इत्येव पाठ उपलभ्यते ॥

ज्जयत्त्यतीव हि मानुष्ष्यलोको या हुता ऽअधिशेरते पितृलोकमेव ताभिर्ज्जयत्त्यध ऽइव हि पितृलोकः ॥ १० ॥ याज्ञवल्क्येति होवाच । कतिभिरयमद्य ब्ब्रह्मा यज्ञन्दक्षिणतो देवताभिग्गोपायिष्ष्यतीत्त्येकयेति कतमा सैकेति मन ऽएवेत्त्यनन्तं वै मनोऽनन्ता व्विश्श्वे देवा ऽअनन्तमेव स तेन लोकञ्जयति ॥ ११ ॥ याज्ञवल्क्येति होवाच । कत्त्ययमद्योद्गातास्मिन्न्यज्ञे स्तोत्त्रिया स्तोष्ष्यतीति तिस्र ऽइति कतमास्तास्तिस्र ऽइति पुरोऽनुवाक्क्या च याज्ज्या च शस्यैव तृतीयाधिदेवतमथाद्ध्यात्त्मङ्कतमास्ता या ऽअद्ध्यात्त्ममिति प्प्राण ऽएव पुरोनुवाक्क्यापानो याज्ज्या व्व्यानः शस्या किन्ताभिर्ज्जयतीति यत्किञ्चेदम्प्राणभृदिति ततो ह होताश्श्वल ऽउपरराम ॥ १२ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ ग्रहातिग्रहविषये आर्तभागयाज्ञवल्क्यसंवादः ]

अथ हैनञ्जारत्कारव ऽआर्त्तभागः पप्प्रच्छ । याज्ञवल्क्येति होवाच कति ग्ग्रहाः कत्त्यतिग्ग्रहा ऽइत्त्यष्टौ ग्ग्रहा ऽअष्टावतिग्ग्रहा ये तेऽष्टौ ग्ग्रहा ऽअष्टावतिग्ग्रहाः कतमे त ऽइति ॥ १ ॥ प्राणो वै ग्ग्रहः । सोऽपानेनातिग्ग्रहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्घ्रति ॥ २ ॥ जिह्वा वै ग्ग्रहः । स रसेनातिग्ग्रहेण गृहीतो जिह्वया हि रसान्विजानाति

---

(१) "मनुष्यलोक०" इति 'ग' 'ज' पुस्तकयोः । काण्वशाखायामपि "मनुष्यलोक०" इत्येव ॥

॥ ३ ॥ वाग्वै ग्रहः । स नाम्नातिग्रहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ४ ॥ चक्षुर्वै ग्रहः । स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः । स शब्देनातिग्रहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥६॥ मनो वै ग्रहः । स कामेनातिग्रहेण गृहीतो मनसा हि कामान्कामयते ॥७॥ हस्तौ वै ग्रहः । स कर्म्मणातिग्रहेण गृहीतो हस्ताभ्याᳫं हि कर्म्म करोति ॥ ८ ॥ त्वग्वै ग्रहः । स स्पर्शेनातिग्रहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत ऽइत्यष्टौ ग्रहा ऽअष्टावतिग्रहाः ॥ ९ ॥ याज्ञवल्क्येति होवाच । यदिदᳫं सर्वम्मृत्योरन्नङ्कास्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्म्मृत्युञ्जयति ॥ १० ॥ याज्ञवल्क्येति होवाच । यत्रायम्पुरुषो म्रियते किमेनन्न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वे देवा ऽअनन्तमेव स तेन लोकञ्जयति ॥ ११ ॥ याज्ञवल्क्येति होवाच । यत्रायम्पुरुषो म्रियत ऽउदस्म्मात्प्राणाः क्रामन्त्याहो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स ऽउच्छ्वयत्याद्ध्मायत्याद्ध्मातो मृतः शेते ॥ १२ ॥ याज्ञवल्क्येति होवाच । यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातम्प्राणश्चक्षुरादित्यम्मनश्चन्द्रन्दिशः श्रोत्रम्पृथिवीᳫं शरीरमाकाशमात्मौषधीर्ल्लोमानि वनस्पतीन्केशा ऽअप्सु लोहितञ्च रेतश्च निधीयते क्वायन्तदा पुरुषो भवतीत्याहर सौम्य हस्तम् ॥ १३ ॥ आर्त्तभागेति होवाच । आवमेवैतद्वेदिष्यावो न

नावेतत्सजन ऽइति तौ होत्क्रम्म्य मन्त्रयाञ्चक्रतुस्तौ ह यदूचतुः कर्म्म हैव तदूचतुरथ ह यत्प्रशशᳪसतुः कर्म्म हैव तत्प्रशशᳪसतुः पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेति ततो ह जारत्कारव ऽआर्त्तभाग ऽउपरराम ॥ १४ ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥

कण्डिकासंख्या ॥ १०४ ॥

---

[ कर्मफलानां संसारत्वप्रदर्शनायैव भुज्युयाज्ञवल्क्यसंवादः ]

अथ हैनम्भुज्ज्युर्ल्लाह्यायनिः पप्रच्छ । याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्य्यव्व्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्व्वगृहीता तमपृच्छाम कोऽसीति सोऽब्ब्रवीत्सुधन्न्वाङ्गिरस ऽइति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम[1] क्व पारिक्षिता ऽअभवन्न्क पारिक्षिता ऽअभवन्निति तत्त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता ऽअभवन्निति ॥ १ ॥ स होवाच । उवाच वै स तदगच्छन्न्वै ते तत्र यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिᳪंशतं वै देवरथाह्न्यान्न्ययँल्लोकस्तᳪं समन्तँल्लोकन्द्विस्तावत्पृथिवी पर्य्येति ताम्पृथिवीन्द्विस्तावत्समुद्रः पर्य्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रन्तावानन्तरेणाकाशस्तानिन्द्रः सुपर्ण्णो भूत्वा वायवे प्प्रायच्छत्तान्वा-

---

(१) "त" इति 'ग' 'ज' पुस्तकयोः ।

युरात्मनि धित्वा तत्रागमयद्यत्र पारिक्षिता ऽअभवन्नित्त्ये-वमिव वै स वायुमेव प्प्रशशꣳस तस्म्माद्वायुरेव व्व्यष्टि-र्व्वायुः समष्टिरप पुनर्म्मृत्युञ्जयति सर्व्वमायुरेति य ऽएवं व्वेद ततो ह भुज्ज्युर्ल्लाह्यायनिरुपरराम ॥ २ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—— ० ——

[ ससंन्यासात्मज्ञानविषये कहोडयाज्ञवल्क्यसंवादः ]

अथ हैनङ्कहोडः कौषीतकेयः पप्प्रच्छ । याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य ऽआत्मा सर्व्वान्तरस्तम्मे व्व्याचक्ष्वेत्त्येष त ऽआत्मा सर्व्वान्तरः कतमो याज्ञवल्क्य सर्व्वान्तरो योऽशनायापिपासे शोकम्मोहञ्जराम्मृत्युमत्त्येत्त्येतं वै तमात्मानं विदित्वा ब्ब्राह्मणाः पुत्त्रैषणायाश्च वित्तैषणाया-श्च लोकैषणायाश्च व्व्युत्थायाथ भिक्षाचर्य्यञ्चरन्ति या ह्येव पुत्त्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते ऽएषणे ऽएव भवतस्तस्म्मात्पण्डितः पाण्डित्त्यन्निर्व्विद्य बाल्येन तिष्ठासेद्बाल्यञ्च पाण्डित्त्यञ्च निर्व्विद्याथ मुनि-रमौनञ्च मौनञ्च निर्व्विद्याथ ब्ब्राह्मणः स ब्ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश ऽएव भवति य ऽएवं व्वेद ततो ह कहोडः कौषीतकेय ऽउपरराम ॥ १ ॥

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—— ० ——

[ आत्मविषये उषस्तयाज्ञवल्क्यसंवादः ]

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ। याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य ऽआत्मा सर्वान्तरस्तम्मे व्याचक्ष्वेत्येष त ऽआत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त ऽआत्मा सर्वान्तरो योऽपानेनापानिति स त ऽआत्मा सर्वान्तरो यो व्यानेन व्यनिति स त ऽआत्मा सर्वान्तरो य ऽउदानेनोदनिति स त ऽआत्मा सर्वान्तरो यः समानेन समानिति[1] स त ऽआत्मा सर्वान्तरः स होवाचोषस्तश्चाक्रायणो यथा वै ब्रूयादसौ गौरसावश्व ऽइत्येवमेवैतद्व्यपदिष्टम्भवति यदेव साक्षादपरोक्षाद्ब्रह्म य ऽआत्मा सर्वान्तरस्तम्मे व्याचक्ष्वेत्येष त ऽआत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो न दृष्टेर्द्रष्टारम्पश्येर्न्न श्रुतेः श्रोतारꣳ शृणुया न मतेर्म्मन्तारम्मन्वीथा न विज्ञातेर्व्विज्ञातारं व्विजानीया ऽएष त ऽआत्मा सर्वान्तरोऽतोऽन्यदार्त्तन्ततो होषस्तश्चाक्रायण ऽउपरराम ॥ १ ॥

षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—o—

[ सर्वान्तरस्यात्मनः स्वरूपाधिगमाय गार्गीयाज्ञवल्क्यसंवादः ]

अथ हैनङ्गार्गी वाचक्नवी पप्रच्छ। याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्न्वाप ऽओताश्च प्रोताश्चेति वायौ गार्ग्गीति कस्मिन्नु वायुरोतश्च प्रोतश्चेत्याकाश ऽएव गार्ग्गीति कस्मिन्न्वाकाश

(१) "समनिति" इति 'ग' 'ज' पुस्तकयोः।

ऽओतश्च प्प्रोतश्चेत्यन्तरिक्षलोकेषु गार्ग्गीति कस्म्मिन्न्व-न्तरिक्षलोका ऽओताश्च प्प्रोताश्चेति द्यौर्ल्लोकेषु[1] गार्ग्गीति कस्म्मिन्नु द्यौर्ल्लोका[2] ऽओताश्च प्प्रोताश्चेत्यादित्त्यलोकेषु गार्ग्गीति कस्म्मिन्न्वादित्त्यलोका ऽओताश्च प्प्रोताश्चेति चन्द्रलोकेषु गार्ग्गीति कस्म्मिन्नु चन्द्रलोका ऽओताश्च प्प्रोताश्चेति नक्षत्रलोकेषु गार्ग्गीति कस्म्मिन्नु नक्षत्र-लोका ऽओताश्च प्प्रोताश्चेति देवलोकेषु गार्ग्गीति क-स्म्मिन्नु देवलोका ऽओताश्च प्प्रोताश्चेति गन्धर्वलोकेषु गार्ग्गीति कस्म्मिन्नु गन्धर्वलोका ऽओताश्च प्प्रोताश्चेति प्प्रजापतिलोकेषु गार्ग्गीति कस्म्मिन्नु प्प्रजापतिलोका ऽओ-ताश्च प्प्रोताश्चेति ब्ब्रह्मलोकेषु गार्ग्गीति कस्म्मिन्नु ब्ब्रह्मलोका ऽओताश्च प्प्रोताश्चेति स होवाच गार्ग्गि मातिप्प्राक्षीर्म्मा ते मूर्द्धा व्व्यपप्तदनतिप्प्रश्न्या वै देवता ऽअतिपृच्छसि गार्ग्गि मातिप्प्राक्षीरिति ततो ह गार्ग्गी व्वाचक्क्नव्व्युपरराम ॥ १ ॥

षष्ठाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

---

[ ब्रह्मलोकानामन्तरतमं सूत्रं दर्शयितुमुद्दालकयाज्ञवल्क्यसंवादः ]

अथ हैनमुद्दालक ऽआरुणिः पप्प्रच्छ । याज्ञवल्क्येति होवाच मद्द्रेष्ष्ववसाम पतञ्चलस्य काप्प्यस्य गृहेषु यज्ञ-मधीयानास्तस्यासीद्भार्य्या गन्धर्व्वगृहीता तमपृच्छाम कोऽ-

---

( १ ) 'ग' 'ज' पुस्तकयोः "द्यौर्ल्लोके" इति पाठो दृश्यते ।

( २ ) "द्यौर्ल्लोक" इति 'ग' 'ज' पुस्तकयोः । तथैव तद्विशेषणीभूतौ ओतप्रोतशब्दावप्येक-वचनान्तावेवोक्तपुस्तकयोरुपलभ्येते ।

सीति सोऽब्रवीत्कबन्ध ऽआथर्वण ऽइति ॥ १ ॥ सोऽब्रवीत् । पतञ्चलङ्काप्प्यं य्याज्ञिकाँश्च व्वेत्थ नु त्वङ्काप्प्य तत्सूत्रं य्येनायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्प्यो नाहन्तद्भगवन्न्वेदेति ॥ २ ॥ सोऽब्रवीत् । पतञ्चलङ्काप्प्यं य्याज्ञिकाँश्च व्वेत्थ नु त्वङ्काप्प्य तमन्तर्य्यामिणं य्य ऽइमञ्च लोकम्परञ्च लोकᳪ सर्व्वाणि च भूतान्न्यन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्प्यो नाहन्तम्भगवन्न्वेदेति ॥ ३ ॥ सोऽब्रवीत् । पतञ्चलङ्काप्प्यं य्याज्ञिकाँश्च यो वै तत्काप्प्य सूत्रं व्विद्यात्तञ्चान्तर्य्यामिणᳪ स ब्रह्मवित्स लोकवित्स देववित्स व्वेदवित्स यज्ञवित्स भूतवित्स ऽआत्मवित्स सर्व्वविदिति तेभ्योऽब्रवीत्तदहं व्वेद तच्चेत्त्वं य्याज्ञवल्क्य सूत्रमविद्वाँस्तञ्चान्तर्य्यामिणम्ब्रह्मगवीरुदजसे मूर्द्धा ते व्विपतिष्ष्यतीति ॥ ४ ॥ व्वेद व्वा ऽअहङ्गौतम । तत्सूत्रन्तञ्चान्तर्य्यामिणमिति यो व्वा ऽइदङ्कश्चच ब्ब्रूयाद्वेद वेदेति यथा व्वेत्थ तथा ब्ब्रूहीति ॥ ५ ॥ व्वायुर्व्वै गौतम तत्सूत्रम् । व्वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषम्प्रेतमाहुर्व्व्यस्रᳪसिषतास्याङ्गानीति व्वायुना हि गौतम सूत्रेण सन्दृब्धानि भवन्तीत्त्येवमेवैतद्याज्ञवल्क्यान्तर्य्यामिणम्ब्रूहीति ॥ ६ ॥ यः पृथिव्व्यान्तिष्ठन् । पृथिव्व्या ऽअन्तरो यम्पृथिवी न व्वेद यस्य पृथिवी शरीरं य्यः पृथिवीमन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्य-

मृतः ॥ ७ ॥ योऽप्सु तिष्ठन् । अद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ ८ ॥ * योऽग्नौ तिष्ठन् । अग्नेरन्तरो यमग्निर्न्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ ९ ॥ य ऽआकाशे तिष्ठन् । आकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य ऽआकाशमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १० ॥ यो वायौ तिष्ठन् । वायोरन्तरो यं वायुर्न्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ ११ ॥ य ऽआदित्ये तिष्ठन् । आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य ऽआदित्यमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १२ ॥ यश्चन्द्रतारके तिष्ठन् । चन्द्रतारकादन्तरो यञ्चन्द्रतारकन्न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १३ ॥ यो दिक्षु तिष्ठन् । दिग्भ्योऽन्तरो यन्दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १४ ॥ यो विद्युति तिष्ठन् । विद्युतोऽन्तरो यं विद्युन्न वेद यस्य विद्युच्छरीरं यो विद्युतमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १५ ॥ य स्तनयित्नौ तिष्ठन् । स्तनयित्नोरन्तरो यꣳ स्तनयित्नुर्न्न वेद यस्य स्तनयित्नुः शरीरं य स्तनयित्नुमन्तरो

* शतम् ७३००

यमयति स त ऽआत्मान्तर्य्याम्म्यमृत ऽइत्त्यधिदेवतमथा-
धिलोकम् ॥ १६ ॥ यः सर्वेषु लोकेषु तिष्ठन् । सर्वेभ्यो
लोकेभ्योऽन्तरो यꣳ सर्वे लोका न विदुर्य्यस्य सर्वे लोकाः
शरीरं ऽयः सर्वाँल्लोकानन्तरो यमयति स त ऽआत्मान्त-
र्य्याम्म्यमृत ऽइत्त्यु ऽएवाधिलोकमथाधिवेदम् ॥ १७ ॥
यः सर्वेषु वेदेषु तिष्ठन् । सर्वेभ्यो वेदेभ्योऽन्तरो यꣳ
सर्वे वेदा न विदुर्य्यस्य सर्वे वेदाः शरीरं ऽयः सर्वान्न्वे-
दानन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृत ऽइत्त्यु
ऽएवाधिवेदमथाधियज्ञम् ॥ १८ ॥ यः सर्वेषु यज्ञेषु तिष्ठन् ।
सर्वेभ्यो यज्ञेभ्योऽन्तरो यꣳ सर्वे यज्ञा न विदुर्य्यस्य
सर्वे यज्ञाः शरीरं ऽयः सर्वान्न्यज्ञानन्तरो यमयति स त
ऽआत्मान्तर्य्याम्म्यमृत इत्त्यु ऽएवाधियज्ञमथाधिभूतम्
॥ १९ ॥ यः सर्वेषु भूतेषु तिष्ठन् । सर्वेभ्यो भूतेभ्योऽ-
न्तरो यꣳ सर्वाणि भूतानि न विदुर्य्यस्य सर्वाणि भूतानि
शरीरं ऽयः सर्वाणि भूतान्न्यन्तरो यमयति स त ऽआत्मा-
न्तर्य्याम्म्यमृत ऽइत्त्यु ऽएवाधिभूतमथाद्ध्यात्मम् ॥ २० ॥
यः प्प्राणे तिष्ठन् । प्राणादन्तरो यम्प्राणो न वेद यस्य
प्प्राणः शरीरं ऽयः प्प्राणमन्तरो यमयति स त ऽआत्मान्त-
र्य्याम्म्यमृतः ॥२१॥ यो वाचि तिष्ठन् । वाचोऽन्तरो यं वाङ्न
वेद यस्य वाक् शरीरं ऽयो वाचमन्तरो यमयति स
त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २२ ॥ यश्चक्षुषि तिष्ठन् ।
चक्षुषोऽन्तरोयश्चक्षुर्न्न वेद यस्य चक्षुः शरीरं ऽय-
श्चक्षुरन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥२३॥

यः श्रोत्रे तिष्ठन् । श्रोत्रादन्तरो यꣳ श्रोत्रन्न वेद यस्य श्रोत्रꣳ शरीरं ऽयः श्रोत्रमन्तरो यमयति स त ऽआत्मान्तऽर्याम्म्यमृतः ॥ २४ ॥ यो मनसि तिष्ठन् । मनसोऽन्तरो यम्मनो न वेद यस्य मनः शरीरं ऽयो मनोऽन्तरो यमयति स त ऽआत्मान्तऽर्याम्म्यमृतः ॥ २५ ॥ यस्त्वचि तिष्ठन् । त्वचोऽन्तरो यन्त्वङ्न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयति स त ऽआत्मान्तऽर्याम्म्यमृतः ॥ २६ ॥ यस्तेजसि तिष्ठन् । तेजसोऽन्तरो यन्तेजो न वेद यस्य तेजः शरीरं ऽयस्तेजोऽन्तरो यमयति स त ऽआत्मान्तऽर्याम्म्यमृतः ॥ २७ ॥ यस्तमसि तिष्ठन् । तमसोऽन्तरो यन्तमो न वेद यस्य तमः शरीरं ऽयस्तमोऽन्तरो यमयति स त ऽआत्मान्तऽर्याम्म्यमृतः ॥ २८ ॥ यो रेतसि तिष्ठन् । रेतसोऽन्तरो यꣳ रेतो न वेद यस्य रेतः शरीरं ऽयो रेतोऽन्तरो यमयति स त ऽआत्मान्तऽर्याम्म्यमृतः ॥ २९ ॥ य ऽआत्मनि तिष्ठन् । आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं ऽय ऽआत्मानमन्तरो यमयति स त ऽआत्मान्तऽर्याम्म्यमृतः ॥ ३० ॥ अदृष्टो द्रष्टा । अश्रुतः श्रोतामतो मन्ताविज्ञातो विज्ञाता नान्योऽस्ति द्रष्टा नान्योऽस्ति श्रोता नान्योऽस्ति मन्ता नान्योऽस्ति विज्ञातैष त ऽआत्मान्तऽर्याम्म्यमृतोऽतोऽन्यदार्त्तन्ततो होद्दालक ऽआरुणिरुपरराम ॥ ३१ ॥

षष्ठाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

[ अशनायादिविनिर्मुक्तं निरुपाधिकं सर्वान्तरं ब्रह्म वर्णयितुं गार्गीयाज्ञवल्क्यसंवादः ]

अथ ह वाचक्नव्युवाच । ब्राह्मणा भगवन्तो हन्ताहमिमं याज्ञवल्क्यं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे विवक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति तौ चेन्मे न विवक्ष्यति मूर्द्धास्य विपतिष्यतीति पृच्छ गार्गीति ॥ १ ॥ सा होवाच । अहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ[1] हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥ सा होवाच । यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥ ३ ॥ स होवाच । यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ॥ ४ ॥ सा होवाच । नमस्ते याज्ञवल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥ ५ ॥ सा होवाच । यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिन्नेव तदोतं च प्रोतं चेति ॥ ६ ॥ स होवाच । यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे

( १ ) "सपत्नाधिव्याधिनौ" इति 'ग' 'ज' पुस्तकयोः ।

यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत ऽआकाश ऽएव तदो-
तञ्च प्प्रोतञ्चेति कस्मिन्न्वाकाश ऽओतश्च प्प्रोतश्चेति
॥ ७ ॥ स होवाच । एतद्वै तदक्षरङ्गार्ग्गि ब्ब्राह्मणा ऽअभि-
वदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमत-
मोऽवाय्वनाकाशमसङ्गमस्प्पर्शमगन्धमरसमचक्षुष्कमश्श्रोत्र-
मवागमनोऽतेजस्कमप्प्राणममुखमनामागोत्रमजरममरमभ-
यममृतमरजोऽशब्दमविवृतमसँव्वृतमपूर्व्वमनपरमनन्तरमबा-
ह्यन्न तदश्नोति कञ्चन न तदश्नोति कश्चन ॥ ८ ॥
एतस्य वा ऽअक्षरस्य । प्प्रशासने गार्ग्गि द्यावा-
पृथिवी व्विधृते तिष्ठत ऽएतस्य वा ऽअक्षरस्य प्प्रशा-
सने गार्ग्गि सूर्य्याचन्द्रमसौ व्विधृतौ तिष्ठत ऽएतस्य वा
ऽअक्षरस्य प्प्रशासने गार्ग्यहोरात्राण्यर्द्धमासा मासा
ऽऋतवः सँव्वत्सरा व्विधृतास्तिष्ठन्त्येतस्य वा ऽअक्षरस्य
प्प्रशासने गार्ग्गि प्प्राच्च्योऽन्न्या नद्यः स्यन्दन्ते श्वेतेब्भ्यः
पर्व्वतेब्भ्यः प्प्रतीच्च्योऽन्या यां यांञ्च दिशमेतस्य वा
ऽअक्षरस्य प्प्रशासने गार्ग्गि ददतम्मनुष्याः प्प्रशंसन्ति
यजमानन्देवा दर्व्यम्पितरोऽन्न्वायत्ताः ॥ ९ ॥ यो वा
ऽएतदक्षरमविदित्वा गार्ग्गि । अस्मिँल्लोके जुहोति ददाति
तपस्यत्यपि बहूनि व्वर्षसहस्राण्यन्तवानेवास्य स लोको
भवति यो वा ऽएतदक्षरमविदित्वा गार्ग्यस्म्माल्लोकात्प्रैति
स कृपणोऽथ य ऽएतदक्षरङ्गार्ग्गि विदित्वास्म्माल्लोकात्प्रैति
स ब्ब्राह्मणः ॥ १० ॥ तद्वा ऽएतदक्षरङ्गार्ग्गि । अदृष्टन्द्र-
ष्टृश्रुतꣳ श्श्रोत्रमतम्मन्त्रविज्ञातं विज्ञातृ नान्यदस्ति

द्रष्टृ नान्यदस्ति श्रोतृ नान्यदस्ति मन्तृ नान्यदस्ति विज्ञात्रेतद्वै तदक्षरङ्गार्गि यस्मिन्नाकाश ऽओतश्च प्प्रोतश्चेति ॥ ११ ॥ सा होवाच । ब्राह्मणा भगवन्तस्तदेव बहु मन्यध्वं यदस्मान्नमस्कारेण मुच्यध्वै न वै जातु युष्माकमिमङ्कश्चिद्ब्रह्मोद्यञ्जेतेति ततो ह वाचक्क्नव्यु-पराम ॥ १२ ॥

षष्ठाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ ब्रह्मणो नियन्तव्यदेवताभेदसंकोचविकासद्वारेणाधिगन्तव्यं साक्षाद-परोक्षत्वं वर्णयितुं शाकल्ययाज्ञवल्क्यसंवादः ]

अथ हैनं विदग्धः शाकल्ल्यः पप्प्रच्छ । कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्च्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच ॥ १ ॥ कत्येव देवा याज्ञवल्क्येति । त्रयस्त्रिꣳशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय ऽइत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्यो-मिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्द्ध ऽइत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक ऽइत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ २ ॥ स होवाच । महिमान ऽएवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा ऽइति कतमे ते त्रयस्त्रिꣳशदित्यष्टौ वसव ऽएकादश

रुद्रा द्वादशादित्यास्त ऽएकत्रिꣳशदिन्द्रश्चैव प्प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ ३ ॥ कतमे वसव ऽइति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव ऽएतेषु हीदꣳ सर्वं वसु हितमेते हीदꣳ सर्वं वासयन्ते तद्यदिदꣳ सर्वं वासयन्ते तस्माद्वसव ऽइति ॥४॥ कतमे रुद्रा ऽइति । दशेमे पुरुषे प्प्राणा ऽआत्मैकादशस्ते यदास्म्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा ऽइति ॥ ५ ॥ कतम ऽआदित्या ऽइति । द्वादश मासाः सँवत्सरस्यैत ऽआदित्या ऽएते हीदꣳ सर्वमाददाना यन्ति तद्यदिदꣳ सर्वमाददाना यन्ति तस्मादादित्या ऽइति ॥ ६ ॥ [ अर्धः प्रपाठकः ॥ ५४ ॥ ] कतम ऽइन्द्रः कतमः प्प्रजापतिरिति । स्तनयित्नुरेवेन्द्रो यज्ञः प्प्रजापतिरिति कतम स्तनयित्नुरित्यशनिरिति कतमो यज्ञ ऽइति पशव ऽइति ॥ ७ ॥ कतमे षडिति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्चैते षडित्येते ह्येवेदꣳ सर्वꣳ षडिति ॥ ८ ॥ कतमे ते त्रयो देवा ऽइति । इम ऽएव त्रयो लोका ऽएषु हीमे सर्वे देवा ऽइति कतमौ तौ द्वौ देवावित्यन्नञ्चैव प्प्राणश्चेति कतमोऽद्ध्यर्द्ध ऽइति योऽयम्पवत ऽइति ॥ ९ ॥ तदाहुः । यदयमेक ऽएव पवतेऽथ कथमद्ध्यर्द्ध ऽइति यदस्मिन्निदꣳ सर्वमद्ध्यार्ध्नोत्तेनाद्ध्यर्द्ध ऽइति कतम ऽएको देव ऽइति स ब्ब्रह्म त्यदित्याचक्षते ॥ १० ॥ पृथिव्येव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ

स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवायꣳ शारीरः पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति स्त्रिय ऽइति होवाच ॥ ११ ॥ रूपाण्येव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवासावादित्ये पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति चक्षुरिति होवाच ॥ १२ ॥ आकाश ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवायं वायौ पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति प्राण ऽइति होवाच ॥ १३ ॥ काम ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवासौ चन्द्रे पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति मन ऽइति होवाच ॥ १४ ॥ तेज ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवायमग्नौ पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति वागिति होवाच ॥ १५ ॥

तम ऽएव यस्यायतनम् । चक्षुर्लोको मनोज्ज्योतिर्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवायञ्छायामयः पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति मृत्युरिति होवाच ॥ १६ ॥ आप ऽएव यस्यायतनम् । चक्षुर्लोको मनोज्ज्योतिर्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवायमप्सु पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति वरुण ऽइति होवाच ॥ १७ ॥ रेत ऽएव यस्यायतनम् । चक्षुर्लोको मनोज्ज्योतिर्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य ऽएवायम्पुत्रमयः पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति प्प्रजापतिरिति होवाच ॥ १८ ॥ शाकल्ल्येति होवाच याज्ञवल्क्यः । त्वाꣳ स्विदिमे ब्ब्राह्मणा ऽअङ्गारावक्षयणमक्रूता३ ऽइति ॥ १९ ॥ याज्ञवल्क्येति होवाच शाकल्ल्यः । यदिदङ्कुरुपञ्चालानाम्ब्राह्मणानत्यवादीः किम्ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्प्रतिष्ट्ठा ऽइति यद्दिशो वेत्थ सदेवाः सप्प्रतिष्ठाः ॥ २० ॥ किन्देवतोऽस्याम्प्राच्च्यान्दिश्यसीति । आदित्यदेवत ऽइति स ऽआदित्यः कस्म्मिन्प्रतिष्ठित ऽइति चक्षुषीति कस्म्मिन्नु चक्षुः प्प्रतिष्ट्ठितम्भवतीति रूपेष्ष्विति

चक्षुषा हि रूपाणि पश्श्यति कस्म्मिन्नु रूपाणि प्प्रतिष्ठितानि भवन्तीति हृदय ऽइति हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्प्रतिष्ठितानि भवन्तीत्त्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥ किन्देवतोऽस्यान्दक्षिणायान्दिश्श्यसीति । यमदेवत ऽइति स यमः कस्म्मिन्प्प्रतिष्ठित ऽइति दक्षिणायामिति कस्म्मिन्नु दक्षिणा प्प्रतिष्ठिता भवतीति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणान्ददाति श्रद्धायांᳬ ह्येव दक्षिणा प्प्रतिष्ठिता भवतीति कस्म्मिन्नु श्रद्धा प्प्रतिष्ठिता भवतीति हृदय ऽइति हृदयेन हि श्रद्धत्ते हृदये ह्येव श्रद्धा प्प्रतिष्ठिता भवतीत्त्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥ किन्देवतोऽस्याम्प्रतीच्च्यान्दिश्श्यसीति । वरुणदेवत ऽइति स वरुणः कस्म्मिन्प्प्रतिष्ठित ऽइत्त्यप्प्स्विति कस्म्मिन्न्वापः प्प्रतिष्ठिता भवन्तीति रेतसीति कस्म्मिन्नु रेतः प्प्रतिष्ठितम्भवतीति हृदय ऽइति तस्म्मादपि प्प्रतिरूपञ्जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्म्मित ऽइति हृदये ह्येव रेतः प्प्रतिष्ठितम्भवतीत्त्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥ किन्देवतोऽस्यामुदीच्च्यान्दिश्श्यसीति । सोमदेवत ऽइति स सोमः कस्म्मिन्प्प्रतिष्ठित ऽइति दीक्षायामिति कस्म्मिन्नु दीक्षा प्प्रतिष्ठिता भवतीति सत्त्य ऽइति तस्म्मादपि दीक्षितमाहुः सत्त्यं वदेति सत्त्ये ह्येव दीक्षा प्प्रतिष्ठिता भवतीति कस्म्मिन्नु सत्त्यम्प्रतिष्ठितम्भवतीति हृदय ऽइति हृदयेन हि सत्त्यञ्जानाति हृदये ह्येव सत्त्यम्प्रतिष्ठितम्भवतीत्त्येवमेवैतद्याज्ञवल्क्य ॥ २४ ॥ किन्देवतोऽस्यान्ध्रुवाया-

न्दिश्श्यसीति । अग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित ऽइति वाचीति कस्मिन्नु वाक्प्रतिष्ठिता भवतीति मनसीति कस्मिन्नु मनः प्रतिष्ठितम्भवतीति हृदय ऽइति कस्मिन्नु हृदयम्प्रतिष्ठितम्भवतीति ॥ २५ ॥ अहल्लिकेति होवाच याज्ञवल्क्यः । यत्रैतदन्यत्रास्मन्मन्यासै यत्रैतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयाꣳसि वैनद्विमथ्नीरन्निति ॥ २६ ॥ कस्मिन्नु त्वञ्चात्मा च प्रतिष्ठितौ स्थ ऽइति । प्राण ऽइति कस्मिन्नु प्राणः प्रतिष्ठित ऽइत्यपान ऽइति कस्मिन्न्वपानः प्रतिष्ठित ऽइति व्यान ऽइति कस्मिन्नु व्यानः प्रतिष्ठित ऽइत्युदान ऽइति कस्मिन्नूदानः प्रतिष्ठित ऽइति समान ऽइति ॥ २७ ॥ स ऽएष नेति नेत्यात्मा । अगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो न सज्यते न व्यथत ऽइत्येतान्यष्टावायतनान्यष्टौ लोका ऽअष्टौ पुरुषाः स यस्तान्पुरुषान्व्युदुह्य प्रत्युह्यात्यक्रामीत्तन्त्वौपनिषदम्पुरुषम्पृच्छामि तञ्चेन्मे न विवक्ष्यसि मूर्द्धा ते विपतिष्यतीति तꣳ ह शाकल्यो न मेने तस्य ह मूर्द्धा विपपात तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः ॥२८॥ अथ ह याज्ञवल्क्य ऽउवाच । ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत[1] यो वः कामयते तं वः पृच्छानि सर्वान्वा वः पृच्छानीति ते ह ब्राह्मणा न दधृषुः ॥ २९ ॥ तान्हैतैः श्लोकैः पप्रच्छ ।

(१) "पृच्छथ" इति 'क' पुस्तके ।

यथा व्वृक्षो व्वनस्प्पतिस्तथैव पुरुषोऽमृषा ॥ तस्य पर्ण्णानि लोमानि त्वगस्योत्पाटिका बहिः ॥ ३० ॥ त्वच ऽएवास्य रुधिरम्प्रस्यन्दि त्वच ऽउत्पटः ॥ तस्म्मात्तदातुन्नात्प्रैति रसो व्वृक्षादिवाहतात् ॥ ३१ ॥ माꣳसान्न्यस्य शकराणि किनाटꣳ स्नाव तत्स्थिरम् ॥ अस्त्थीन्न्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥ ३२ ॥ यद्वृक्षो व्वृक्क्णो रोहति मूलान्नवतरः पुनः ॥ मर्त्त्यः स्विन्न्मृत्युना व्वृक्क्णः कस्म्मान्न्मूलात्प्ररोहति ॥ ३३ ॥ रेतस ऽइति मा व्वोचत जीवतस्तत्प्रजायते ॥ जात ऽएव न जायते को न्न्वेनञ्जनयेत्पुनः ॥ धानारुह ऽउ वै व्वृक्षोऽन्न्यतः प्प्रेत्य सम्भवः ॥ यत्समूलमुद्वृहेयुर्व्वृक्षन्न पुनराभवेत् ॥ मर्त्त्यः स्विन्न्मृत्युना व्वृक्क्णः कस्म्मान्न्मूलात्प्ररोहति । व्विज्ञानमानन्दम्ब्रह्म रातेर्द्दातुः परायणम् ॥ तिष्ठमानस्य तद्विद ऽइति ॥३४॥

षष्ठाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

[ उपदिष्टस्यैव ब्रह्मणोऽधिगमने उपायान्तरस्य प्रदर्शनं ब्राह्मणद्वयेन ]

जनको ह व्वैदेह ऽआसाञ्चक्क्रे । अथ ह याज्ञवल्क्य ऽआवव्राज स होवाच जनको व्वैदेहो याज्ञवल्क्य किमर्त्थमचारीः पशूनिच्छन्नण्ण्वन्तानित्युभयमेव सम्म्राडिति होवाच यत्ते कश्चिदब्रवीत्तच्छृणवामेति ॥ १ ॥ अब्रवीन्न्म ऽउदङ्कः शौल्ल्वायनः ॥ प्प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छौल्ल्वायनोऽ-

ब्ब्रवीत्त्प्राणो वै ब्ब्रह्मेत्त्यप्प्राणतो हि किꣳ स्यादित्त्यब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्ब्रवीदित्त्येकपाद्वा ऽएतत्त्सम्म्राडिति ॥२॥ स वै नो ब्ब्रूहि याज्ञवल्क्य । प्प्राण ऽएवायतनमाकाशः प्प्रतिष्ठा प्प्रियमित्त्येनदुपासीत का प्प्रियता याज्ञवल्क्य प्प्राण ऽएव सम्म्राडिति होवाच प्प्राणस्य वै सम्म्राट्कामायायाज्ज्यं ꣳयाजयत्त्यप्प्रतिगृह्यस्य प्प्रतिगृह्णात्त्यपि तत्र वधशङ्का भवति यान्दिशमेति प्प्राणस्यैव सम्म्राट्कामाय प्प्राणो वै सम्म्राट् परमम्ब्रह्म नैनम्प्राणो जहाति सर्व्वाण्ण्येनम्भूतान्न्यभिक्षरन्ति ॥ ३ ॥ देवो भूत्वा देवानप्प्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको व्वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति क ऽएव ते किमब्ब्रवीदिति ॥ ४ ॥ अब्ब्रवीन्न्मे जित्त्वा शैलिनः । व्वाग्ग्वै ब्ब्रह्मेति यथा मातृमान्न्पितृमानाचार्य्यवान्न्ब्रूयात्तथा तच्छैलिनोऽब्ब्रवीद्वाग्ग्वै ब्ब्रह्मेत्त्यवदतो हि किꣳ स्यादित्त्यब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्ब्रवीदित्त्येकपाद्वा ऽएतत्त्सम्म्राडिति ॥ ५ ॥ स वै नो ब्ब्रूहि याज्ञवल्क्य । व्वागेवायतनमाकाशः प्प्रतिष्ठा प्प्रज्ञेत्त्येनदुपासीत का प्प्रज्ञता याज्ञवल्क्य व्वागेव सम्म्राडिति होवाच व्वाचा वै सम्म्राड्बन्धुः प्प्रज्ञायत ऽऋग्ग्वेदो यजुर्व्वेदः सामवेदोऽ-

(१) "स ऽएवायत०" इति 'ग' 'ज' पुस्तकयोः ।
(२) "वधाशङ्का" इत्युक्तपुस्तकयोः ।
(३) "स्यादब्ब्रवीत्तु" इति 'ग' ज' पुस्तकयोः ।

थर्वाङ्गिरस ऽइतिहासः पुराणं विद्या ऽउपनिषदः श्लोकाः सूत्राण्यनुव्व्याख्यानानि व्व्याख्यानानि व्वाचैव सम्म्राट् प्रजायन्ते व्वाग्वै सम्म्राट् परमम्ब्रह्म नैनं व्वाग्जहाति सर्व्वाण्येनम्भूतान्न्यभिक्षरन्ति ॥६॥ देवो भूत्वा देवानप्प्येति। य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको व्वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति क ऽएव ते किमब्ब्रवीदिति ॥ ७ ॥ अब्ब्रवीन्न्मे व्वर्क्कुर्व्वार्ष्ष्णः। चक्षुर्व्वै ब्ब्रह्मेति यथा मातृमान्न्पितृमानाचार्य्यवान्न्ब्रूयात्तथा तद्वार्ष्ष्णोऽब्ब्रवीच्चक्षुर्व्वै ब्ब्रह्मेत्त्यपश्श्यतो हि किꣳ स्यादित्त्यब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्ब्रवीदित्त्येकपाद्वा ऽएतत्सम्म्राडिति ॥ ८ ॥ स वै नो ब्ब्रूहि याज्ञवल्क्य। चक्षुरेवायतनमाकाशः प्प्रतिष्ठा सत्त्यमित्त्येनदुपासीत का सत्त्यता याज्ञवल्क्य चक्षुरेव सम्म्राडिति होवाच चक्षुषा वै सम्म्राट् पश्श्यन्तमाहुरद्राक्षीरिति स ऽआहाद्राक्षमिति तत्सत्त्यम्भवति चक्षुर्व्वै सम्म्राट् परमम्ब्रह्म नैनञ्चक्षुर्ज्जहाति सर्व्वाण्येनम्भूतान्न्यभिक्षरन्ति ॥ ९ ॥ देवो भूत्वा देवानप्प्येति। य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको व्वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति क ऽएव ते किमब्ब्रवीदिति ॥ १० ॥ अब्ब्रवीन्न्मे गर्द्दभीविपीतो भारद्वाजः। श्रोत्रं वै ब्ब्रह्मेति यथा मातृमान्न्पितृमानाचार्य्यवान्न्ब्रूयात्तथा तद्भारद्वाजोऽब्ब्रवीच्छ्रोत्रं वै ब्ब्रह्मेत्त्यशृण्ण्वतो हि किꣳ स्यादित्त्यब्ब्रवीत्तु ते तस्यायतनम्प्रति-

ष्ट्ठानन्न मेऽब्ब्रवीदित्त्येकपाद्वा . ऽएतत्त्सम्म्राडिति ॥ ११ ॥ स
वै नो ब्ब्रूहि याज्ञवल्क्य । श्श्रोत्त्रमेवायतनमाकाशः प्प्रति
ष्ट्ठानन्त ऽइत्त्येनदुपासीत कानन्तता याज्ञवल्क्य दिश
ऽएव सम्म्राडिति होवाच तस्म्माद्वै सम्म्राड्याङ्काञ्च
दिशङ्गच्छति नैवास्या ऽअन्तङ्गच्छत्त्यनन्ता हि दिशः
श्श्रोत्त्रꣳ हि दिशः श्श्रोत्त्रं वै सम्म्राट् परमम्ब्रह्म नैनꣳ
श्श्रोत्त्रञ्जहाति सर्वाण्ण्येनम्भूतान्न्यभिक्षरन्ति ॥ १२ ॥ देवो
भूत्त्वा देवानप्प्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ
सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञ-
वल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति क ऽएव ते
किमब्ब्रवीदिति ॥ १३ ॥ अब्ब्रवीन्न्मे सत्त्यकामो जावालः ।
मनो वै ब्ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्ब्रूया-
त्तथा तत्त्सत्त्यकामोऽब्ब्रवीन्न्मनो वै ब्ब्रह्मेत्त्यमनसो हि
किꣳ स्यादित्त्यब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ट्ठानन्न मेऽब्ब्रवी-
दित्त्येकपाद्वा ऽएतत्त्सम्म्राडिति ॥ १४ ॥ स वै नो ब्ब्रूहि
याज्ञवल्क्य । मन ऽएवायतनमाकाशः प्प्रतिष्ट्ठानन्द ऽइत्त्ये-
नदुपासीत कानन्दता याज्ञवल्क्य मन ऽएव सम्म्राडिति
होवाच मनसा वै सम्म्राट् स्त्रियमभिहर्य्यति तस्याम्प्र-
तिरूपः पुत्त्रो जायते स ऽआनन्दो मनो वै सम्म्राट् परम-
म्ब्रह्म नैनम्मनो जहाति सर्वाण्ण्येनम्भूतान्न्यभिक्षरन्ति
॥ १५ ॥ देवो भूत्त्वा देवानप्प्येति । य ऽएवं विद्वानेतदु-
पास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः
स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य

हुरेतेति क ऽएव ते किमब्रवीदिति ॥ १६ ॥ अब्रवीन्मे विदग्धः शाकल्यः हृदयं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य हि किंᳬ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्येकपाद्वा ऽएतत्सम्राडिति ॥ १७ ॥ स वै नो ब्रूहि याज्ञवल्क्य । हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितिता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट् सर्वेषाम्भूतानाम्प्रतिष्ठा हृदयेन हि सर्वाणि भूतानि प्रतितिष्ठन्ति हृदयं वै सम्राट् परमम्ब्रह्म नैनꣳ हृदयञ्जहाति सर्वाण्येनम्भूतान्यभिक्षरन्ति ॥ १८ ॥ देवो भूत्वा देवानप्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ १९ ॥

षष्ठाध्याये दशमं ब्राह्मणम् ॥ १० ॥

अथ ह जनको वैदेहः कूर्चादुपावसर्प्पन्नुवाच । नमस्ते याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमद्धानमेष्यन्रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्मास्येवं वृन्दारक ऽआढ्यः सन्नधीतवेद ऽउक्तोपनिषत्क ऽइतो विमुच्यमानः क्व गमिष्यसीति नाहन्तद्भगवन्वेद यत्र गमिष्यामीत्यथ

वै तेऽहन्तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥ स होवाच । इन्धो वै नामैष योऽयन्दक्षिणेऽक्षन्पुरुषस्तं वा ऽएतमिन्धꣳ सन्तमिन्द्र ऽइत्याचक्षते परोऽक्षेणेव परोऽक्षप्प्रिया ऽइव हि देवाः प्प्रत्यक्षद्विषः ॥ २ ॥ अथैतद्वामेऽक्षिणि पुरुषरूपम् । एषास्य पत्नी विराट् तयोरेष सꣳस्तावो य ऽएषोऽन्तर्हृदय ऽआकाशोऽथैनयोरेतदन्नं य ऽएषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सती सञ्चरणी यैषा हृदयादूर्द्ध्वा नाड्युच्चरति ॥ ३ ॥ ता वा ऽअस्यैताः । हिता नाम नाड्यो यथा केशः सहस्रधा भिन्न ऽएताभिर्वा ऽएतमास्रवदास्रवति तस्मादेष प्प्रविविक्ताहारतर ऽइव भवत्यस्माच्छारीरादात्मनः ॥ ४ ॥ तस्य वा ऽएतस्य पुरुषस्य । प्प्राची दिक्क्प्राञ्चः प्प्राणा दक्षिणा दिग्ग्दक्षिणाः प्प्राणाः प्प्रतीची दिक्क्प्रत्यञ्चः प्प्राणा ऽउदीची दिगुदञ्चः प्प्राणा ऽऊर्द्ध्वा दिगूर्द्ध्वाः प्प्राणा ऽअवाची दिगवाञ्चः प्प्राणाः सर्वा दिशः सर्वे प्प्राणाः ॥५॥ स ऽएष नेति नेत्यात्मा । अगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गोऽसितो न सज्ज्यते न व्यथतेऽभयं वै जनक प्प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको वैदेहो नमस्ते याज्ञवल्क्याभयन्त्वागच्छताद्यो नो भगवन्नभयं वेदयस ऽइमे विदेहा ऽअयमहमस्मीति ॥ ६ ॥

षष्ठाध्याय एकादशं ब्राह्मणम् ॥ ११ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमः प्रपाठकः ॥५॥ कण्डिकासंख्या ॥१०७॥

इति षष्ठोऽध्यायः ॥ ६ ॥

[ प्रस्तुतस्य ब्रह्मणो व्यतिरिक्तत्वशुद्धत्वाद्वैतत्वादिकप्रदर्शनम् ]

जनकꣳ ह वैदेहं ऽयाज्ञवल्क्यो जगाम । समेनेन वदिष्य ऽइत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदतुस्तस्मै ह याज्ञवल्क्यो वरन्ददौ स ह कामप्प्रश्नमेव वव्रे तꣳ हास्मै ददौ तꣳ ह सम्म्राडेव पूर्वꣳ पप्प्रच्छ ॥ १ ॥ याज्ञवल्क्य किञ्ज्योतिरयम्पुरुष ऽइति । आदित्यज्ज्योतिꣳ सम्म्राडिति होवाचादित्येनैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्ल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥ अस्तमित ऽआदित्ये याज्ञवल्क्य । किञ्ज्योतिरेवायम्पुरुष ऽइति चन्द्रज्ज्योतिꣳ सम्म्राडिति होवाच चन्द्रेणैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्ल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ३ ॥ अस्तमित ऽआदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते किञ्ज्योतिरेवायम्पुरुष ऽइत्यग्निज्योतिꣳ सम्म्राडिति होवाचाग्निनैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्ल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥ अस्तमित ऽआदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते शान्तेऽग्नौ किञ्ज्योतिरेवायम्पुरुष ऽइति वाग्ज्योतिꣳ सम्म्राडिति होवाच वाचैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्ल्येतीति तस्माद्वै सम्म्राडपि यत्र स्वꣳ पाणिर्न्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥ अस्तमित ऽआदित्ये याज्ञवल्क्य । चन्द्र-

( १ ) "न्येती०" इति 'ग' 'ज' पुस्तकयोः ।

मस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किञ्ज्योतिरेवाय-म्पुरुष ऽइत्यात्मज्ज्योतिः सम्म्राडिति होवाचात्मनैवाय-ञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्ल्येतीति ॥ ६ ॥*
कतम ऽआत्मेति। योऽयं विज्ञानमयः पुरुषः प्प्राणेषु हृद्यन्तर्ज्योतिः स समानः सन्नुभौ लोकौ सञ्चरति ध्यायतीव लेलायतीव सधीः स्वप्प्नो भूत्वेमँल्लोकमतिक्क्रामति ॥ ७ ॥ स वा ऽअयम्पुरुषो जायमानः। शरीरमभिस-म्पद्यमानः पाप्प्मभिः सꣳसृज्यते स ऽउत्क्रामन्म्रिय-माणः पाप्प्मनो विजहाति मृत्यो रूपाणि ॥ ८ ॥ तस्य वा ऽएतस्य पुरुषस्य। द्वे ऽएव स्थाने भवत ऽइदञ्च परलोकस्थानञ्च सन्ध्यन्तृतीयꣳ स्वप्प्नस्थानन्तस्मिम-न्त्सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्श्यतीदञ्च परलोक-स्थानञ्च ॥ ९ ॥ अथ यथाक्क्रमोऽयम्परलोकस्थाने भवति। तमाक्क्रममाक्क्रम्म्योभयान्पाप्प्मन ऽआनन्दाँश्च पश्श्यति स यत्रायम्प्रस्वपिती[1]त्यस्य लोकस्य सर्व्वावतो मात्रामपादाय स्वयं विहत्य स्वयन्निर्म्माय स्वेन भासा स्वेन ज्योतिषा प्प्रस्वपित्यत्रायम्पुरुषः स्वयञ्ज्योतिर्भवति ॥ १० ॥ न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान्र-थयोगान्पथः सृजते न तत्रानन्दा मुदः प्प्रमुदो भवन्त्यथा-नन्दान्मुदः प्प्रमुदः सृजते न तत्र वेशान्ताः स्रवन्त्यः[2] पुष्क्करिण्योः भवन्त्यथ वेशान्ताः स्रवन्तीः पुष्क्करिणीः

* शतम् ७४००।

( १ ) "प्रस्वपित्यस्य" इति 'ग' 'ज' पुस्तकयोः।

( २ ) "स्रवन्त्यः" इत्युक्तपुस्तकयोः।

सृजते स हि कर्त्ता ॥ ११ ॥ तदप्येते श्लोकाः ।
स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ॥
शुक्रमादाय पुनरैति स्थानꣳ हिरण्मयः पौरुष ऽएकहꣳसः
॥ १२ ॥ प्राणेन रक्षन्नपरङ्कुलायम्बहिष्कुलायादमृतश्च-
रित्वा ॥ स ऽईयते ऽअमृतो यत्रकामꣳ हिरण्मयः पौरुष
ऽएकहꣳसः ॥ १३ ॥ स्वप्नान्त ऽउच्चावचमीयमानो रूपाणि
देवः कुरुते बहूनि ॥ उतेव स्त्रीभिः सह मोदमानो जक्षदु-
तेवापि भयानि पश्यन् ॥ १४ ॥ आराममस्य पश्यन्ति ।
न तङ्कश्चन पश्यतीति तन्नायतम्बोधयेदित्याहुर्दुर्भि-
षज्यꣳ हास्मै भवति यमेष न प्रतिपद्यते ॥ १५ ॥
अथो खल्वाहुः । जागरितदेश ऽएवास्यैष यानि ह्येव
जाग्रत्पश्यति तानि सुप्त ऽइत्यत्रायम्पुरुषः स्वयञ्ज्योति-
र्भवतीत्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददा-
म्यत ऽऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥ स वा ऽएष
ऽएतस्मिन्त्स्वप्नान्ते । रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च
पापञ्च पुनः प्रतिन्यायम्प्रतियोन्याद्रवति बुद्धान्तायैव स
यदत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययम्पुरुष
ऽइत्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददाम्यत
ऽऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १७ ॥ तद्यथा महामत्स्यः ।
उभे कूले ऽअनुसञ्चरति पूर्वञ्चापरञ्चैवमेवायम्पुरुष ऽएता
ऽउभावन्तावनुसञ्चरति स्वप्नान्तञ्च बुद्धान्तञ्च ॥ १८ ॥
तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य
श्रान्तः सꣳहृत्य पक्षौ सल्लयायैव ध्रियत ऽएवमेवायम्पुरुष

ऽएतस्म्मा ऽअन्ताय धावति यत्र सुप्तो न कञ्चन कामङ्कामयते न कञ्चन स्वप्नम्पश्श्यति ॥१९॥ ता वा ऽअस्यैताः हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्म्ना तिष्ठन्ति शुक्क्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्ण्णा ऽअथ यत्रैनङ्घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्त्तमिव पतति यदेव जाग्रद्भयम्पश्श्यति तदत्राविद्यया भयम्मन्यतेऽथ यत्र राजेव देव ऽइवाहमेवेदꣳ सर्व्वमस्म्मीति मन्यते सोऽस्य परमो लोकोऽथ यत्र सुप्तो न कञ्चन कामङ्कामयते न कञ्चन स्वप्नम्पश्श्यति ॥ २० ॥ तद्वा ऽअस्यैतत् । आत्मकाममाप्तकाममकामꣳ रूपन्तद्यथा प्प्रियया स्त्रिया सम्परिष्ष्वक्तो न बाह्यङ्किञ्चन वेद नान्तरमेवमेवायꣳ शारीर ऽआत्मा प्प्राज्ञेनात्मना सम्परिष्ष्वक्तो न बाह्यङ्किञ्चन वेद नान्तरम् ॥ २१ ॥ तद्वा ऽअस्यैतत् । अतिच्छन्दोऽपहतपाप्प्माभयꣳ रूपमशोकान्तरमत्र पितापिता भवति मातामाता लोका ऽअलोका देवा ऽअदेवा वेदा ऽअवेदा यज्ञा ऽअयज्ञा ऽअत्र स्तेनोऽस्तेनो भवति भ्रूणहाभ्रूणहा पौल्क्कसोऽपौल्क्कसश्श्चाण्डालोऽचाण्डालः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्न्वागतम्पुण्ण्येनानन्न्वागतम्पापेन[1] तीर्ण्णो हि तदा सर्व्वाꣳल्लोकान्न्हृदयस्य भवति ॥ २२ ॥ यद्वै तन्न पश्श्यति । पश्श्यन्न्वै तद्द्रष्ट्टव्यन्न पश्श्यति न हि द्रष्टुर्द्दृष्टेर्व्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्वि-

( १ ) "ऽनन्वागतः पुण्येनानन्वागतः पापेन" इति 'ग' 'ज' पुस्तकयोः पाठः ।

तीयमस्ति ततोऽन्न्यद्विभक्तं य्यत्पश्येत् ॥ २३ ॥ यद्वै तन्न जिघ्रति । जिघ्रन्न्वै तद्घ्रातव्व्यन्न जिघ्रति न हि घ्रातुर्ग्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं य्यज्जिघ्रेत् ॥ २४ ॥ यद्वै तन्न रसयति । विजानन्न्वै तद्रसन्न रसयति न हि रसयितू रसाद्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्रसयेत् ॥ २५ ॥ यद्वै तन्न वदति । वदन्न्वै तद्वक्तव्व्यन्न वदति न हि वक्तुर्व्वचो विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं य्यद्वदेत् ॥ २६ ॥ यद्वै तन्न शृणोति । शृण्वन्न्वै तच्छ्रोतव्व्यन्न शृणोति न हि श्रोतुः श्रुतेर्व्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं य्यच्छृणुयात् ॥ २७ ॥ यद्वै तन्न मनुते । मन्न्वानो वै तन्मन्तव्व्यन्न मनुते न हि मन्तुर्म्मतेर्व्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं य्यन्मन्न्वीत ॥ २८ ॥ यद्वै तन्न स्पृशति । स्पृशन्न्वै तत्स्प्रष्टव्व्यन्न स्पृशति न हि स्प्रष्टु स्पृष्टेर्व्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं य्यत्स्पृशेत् ॥ २९ ॥ यद्वै तन्न विजानाति । विजानन्न्वै तद्विज्ञेयन्न विजानाति न हि विज्ञातुर्व्विज्ञानाद्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं य्यद्विजानीयात् ॥ ३० ॥ सलिल ऽएको द्रष्टाद्वैतो भवति । एष ब्रह्मलोकः सम्राडिति हैनमुवा-

चैषास्य परमा सम्पदेषोऽस्य परमो लोक ऽएषोऽस्य परम
ऽआनन्द ऽएतस्यैवानन्दस्यान्न्यानि भूतानि मात्रामुपजी-
वन्ति ॥ ३१ ॥ स यो मनुष्ष्याणाᳪ राद्धः समृद्धो भवति ।
अन्न्येषामधिपतिः सर्व्वैर्म्मानुष्ष्यकैः कामैः सम्पन्नतमः
स मनुष्ष्याणाम्परम ऽआनन्दः ॥ ३२ ॥ अथ ये शत-
म्मनुष्ष्याणामानन्दाः । स ऽएकः पितॄणाञ्जितलोकाना-
मानन्दः ॥ ३३ ॥ अथ ये शतम्पितॄणाञ्जितलोकानामा-
नन्दाः । स ऽएकः कर्म्मदेवानामानन्दो ये कर्म्मणा देव-
त्वमभिसम्पद्यन्ते ॥ ३४ ॥ अथ ये शतङ्कर्म्मदेवानामा-
नन्दाः । स ऽएक ऽआजानदेवानामानन्दो यश्च श्रोत्रियोऽ-
वृजिनोऽकामहतः ॥ ३५ ॥ अथ ये शतमाजानदेवानामा-
नन्दाः । स ऽएको देवलोक ऽआनन्दो यश्च श्रोत्रियोऽ-
वृजिनोऽकामहतः ॥ ३६ ॥ अथ ये शतन्देवलोक ऽआ-
नन्दाः । स ऽएको गन्धर्व्वलोक ऽआनन्दो यश्च श्रोत्रियोऽ-
वृजिनोऽकामहतः ॥ ३७ ॥ अथ ये शतङ्गन्धर्व्वलोक
ऽआनन्दाः । स ऽएकः प्प्रजापतिलोक ऽआनन्दो यश्च
श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३८ ॥ अथ ये शतम्प्रजा-
पतिलोक ऽआनन्दाः । स ऽएको ब्ब्रह्मलोक ऽआनन्दो
यश्च श्रोत्रियोऽवृजिनोऽकामहत ऽएष ब्ब्रह्मलोकः सम्म्रा-
डिति हैनमनुशशासैतदमृतᳲ सोऽहम्भगवते सहस्रन्द-
दाम्म्यत्र ऽऊर्द्ध्वं विमोक्षायैव ब्ब्रूहीति ॥ ३९ ॥ स वा ऽएष
ऽएतस्म्मिन्त्सम्प्रसादे । रत्वा चरित्वा दृष्ट्वैव पुण्ण्यञ्च
पापञ्च पुनः प्प्रतिन्न्यायम्प्रतियोन्न्याद्रवति बुद्धान्तायैव

स यदुत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययम्पुरुष ऽइत्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्दादाम्म्यत ऽऊर्द्ध्वं विमोक्षायैव ब्रूहीति ॥ ४० ॥ अत्र ह याज्ञवल्क्यो बिभयाञ्चकार । मेधावी राजा सर्व्वेभ्यो मान्तेभ्य ऽउदरौत्सीदिति स यत्राणिमानन्न्येति जरया वोपतपता वाणिमानन्निगच्छति यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यतैवमेवायꣳ शारीर ऽआत्मैभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्प्रतिन्न्यायम्प्रतियोन्न्याद्रवति प्प्राणायैव ॥ ४१ ॥ तद्यथा नः सुसमाहितम् । उत्सर्ज्ज्याद्यादेवमेवायꣳ शारीर ऽआत्मा प्प्राज्ञेनात्मनान्न्वारूढ ऽउत्सर्ज्ज्याति ॥ ४२ ॥ तद्यथा राजानमायन्तम् । उग्राः प्प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्प्रतिकल्प्पन्तेऽयमायात्ययमागच्छतीत्येवꣳ हैवंविदꣳ सर्व्वाणि भूतानि प्प्रतिकल्प्पन्त ऽइदम्ब्रह्मायातीदमागच्छतीति ॥ ४३ ॥ तद्यथा राजानम्प्रयियासन्तम् । उग्राः प्प्रत्येनसः सूतग्रामण्य ऽउपसमायन्त्येवꣳ हैवंविदꣳ सर्व्वे प्प्राणा ऽउपसमायन्ति यत्रैतदूर्द्ध्वोच्छ्वासी भवति ॥ ४४ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ उक्तस्यात्मनोऽङ्गेभ्यः संप्रमोक्षणस्य विस्तरेणोपपादनम् ]

स यत्रायꣳ शारीर ऽआत्माबल्ल्यन्नीत्य । सम्मोहमिव न्न्येत्यथैनमेते प्प्राणा ऽअभिसमायन्ति स ऽएता-

स्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ॥ १ ॥ स यत्रैष चाक्षुषः । पुरुषः पराङ् पर्य्यावर्त्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत ऽइत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुः ॥ २ ॥ तस्य हैतस्य । हृदयस्याग्रम्प्रद्योतते तेन प्रद्योतेनैष ऽआत्मा निष्क्रामति चक्षुष्टो वा मूर्द्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तम्प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तः सर्वे प्राणा ऽअनूत्क्रामन्ति संज्ञानमेवान्ववक्रामति स ऽएष ज्ञः सविज्ञानो भवति तं विद्याकर्म्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ ३ ॥ तद्यथा तृणजलायुका । तृणस्यान्तङ्गत्वात्मानमुपसꣳहरत्येवमेवायम्पुरुष ऽइदꣳ शरीरन्निहत्याविद्याङ्गमयित्वात्मानमुपसꣳहरति ॥४॥ तद्यथा पेशस्कारी । पेशसो मात्रामपादायान्न्यन्नवतरङ्कल्याणतरꣳ रूपन्तनुत ऽएवमेवायम्पुरुष ऽइदꣳ शरीरन्निहत्याविद्याङ्गमयित्वान्यन्नवतरङ्कल्याणतरꣳ[1] रूपन्तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्न्येभ्यो वा भूतेभ्यः ॥५॥ स वा ऽअयमात्मा । ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्राणमयश्चक्षुर्म्मयः श्रोत्रमय ऽआकाशमयो वायुमयस्तेजोमय ऽआपोमयः पृथिवीमयः क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमयो धर्म्ममयोऽधर्म्ममयः सर्वमयस्तद्यदेदम्मयोऽ-

(१) "०० न्नवतरꣳ रूपन्तनुते" इति 'ग' 'ज' पुस्तकयोः ।

दोमय ऽइति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्ब्भवति पापकारी पापो भवति पुण्ण्यः पुण्ण्येन कर्म्मणा भवति पापः पापेनेति ॥ ६ ॥ अथो खल्ल्वाहुः । काममय ऽएवायम्पुरुष ऽइति स यथाकामो भवति तत्क्रतुर्ब्भवति यथाक्क्रतुर्ब्भवति तत्कर्म्म कुरुते यत्कर्म्म कुरुते तदभिसम्पद्यत ऽइति ॥ ७ ॥ तदेष श्लोको भवति । तदेव सक्तः सह कर्म्मणैति लिङ्गम्मनो यत्र निषक्तमस्य ॥ प्राप्प्यान्तङ्कर्म्मणस्तस्य यत्किञ्चेह करोत्ययम् ॥ तस्माल्लोकात्पुनरैत्यस्म्मै लोकाय कर्म्मण ऽइति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम ऽआत्मकाम ऽआप्तकामो भवति न तस्म्मात्प्राणा ऽउत्क्रामन्त्यत्रैव समवनीयन्ते ब्ब्रह्मैव सन्ब्रह्माप्प्येति ॥ ८ ॥ तदेष श्लोको भवति । यदा सर्वे प्प्रमुच्च्यन्ते कामा येऽस्य हृदि श्रिताः[1] ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्ब्रह्म समश्नुत ऽइति ॥ ९ ॥ तद्यथाहिनिर्ल्वयनी । वल्म्मीके मृता प्प्रत्यस्ता शयीतैवमेवेदꣳ शरीरꣳ शेतेऽथायमनस्थिकोऽशरीरः प्प्राज्ञ ऽआत्मा ब्ब्रह्मैव लोक ऽएव सम्म्राडिति होवाच याज्ञवल्क्यः सोऽहम्भगवते सहस्रन्ददामीति होवाच जनको ब्वैदेहः ॥ १० ॥ तदप्प्येते श्लोकाः । अणुः पन्था व्वितरः पुराणो माꣳ स्पृष्टोऽनुवित्तो मयैव । तेन धीरा ऽअपियन्ति ब्ब्रह्मविद ऽउत्क्रम्म्य स्वर्ग्गँल्लोकमितो व्विमुक्ताः ॥ ११ ॥ तस्मिम्मञ्छुक्क्लमुत

---

( १ ) "स्थिताः" इति 'ग' 'ज' पुस्तकयोः ।

नीलमाहुः पिङ्गलꣳ हरितँल्लोहितञ्च ॥ एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च ॥ १२ ॥ अन्धन्तमः प्प्रविशन्ति येऽसम्भूतिमुपासते ॥ ततो भूय ऽइव ते तमो य ऽउ सम्भूत्याꣳ रताः ॥ १३ ॥ असुर्या नाम ते लोकाः । अन्धेन तमसावृताः ॥ ताँस्ते प्प्रेत्यापिगच्छन्त्यविद्वाꣳसोऽबुधा जनाः ॥ १४ ॥ तदेव सन्तः । तदु तद्भवामो न चेदवेदी महती विनष्टिः ॥ ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति ॥१५॥ आत्मानञ्चेद्विजानीयात् । अयमस्मीति पूरुषः[1] ॥ किमिच्छन्कस्य कामाय शरीरमनु सञ्चरेत् ॥ १६ ॥ यस्यानुवित्तः प्प्रतिबुद्ध ऽआत्मा । अस्मिन्त्सन्देहे गहने प्प्रविष्टः ॥ स विश्वकृत्स हि सर्वस्य कर्त्ता तस्य लोकः स ऽउ लोक ऽएव ॥ १७ ॥ यदैतमनुपश्यति । आत्मानन्देवमञ्जसा ॥ ईशानम्भूतभव्यस्य न तदा विचिकित्सति ॥ १८ ॥ यस्मिन्पञ्च पञ्चजनाः । आकाशश्च प्प्रतिष्ठितः ॥ तमेव मन्य ऽआत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥१९॥ यस्माद्र्वाक्सँवत्सरः । अहोभिः परिवर्त्तते ॥ तद्देवा ज्योतिषाञ्ज्योतिरायुर्होपासतेऽमृतम् ॥२०॥ प्राणस्य प्प्राणम् । उत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नम्मनसो ये मनो विदुः ॥ ते निचिक्युर्ब्रह्म पुराणमग्ग्र्यम्मनसैवाप्तव्यन्नेह नानास्ति किञ्चन ॥ २१ ॥ [ अर्धः प्रपाठकः ॥६४॥ ] मृत्योः स मृत्युमाप्प्नोति य ऽइह नानेव पश्यति ॥ मनसैवानुद्रष्ट-

(१) 'ग' 'ज' पुस्तकयोः "पुरुषः" इति पाठो दृश्यते । स तु प्रामादिक एव प्रतीयते 'पूरुषोऽवसाने' ( शु० य० प्रा० शा० ३. १२० ) इति दीर्घनिपातनात् ।

व्व्यमेतदप्प्रमयन्ध्रुवम् ॥२२॥ व्विरजः पर ऽआकाशात् । अज ऽआत्मा महान्ध्रुवः[1] ॥ तमेव धीरो विज्ञाय प्प्रज्ञाङ्कुर्वीत ब्ब्राह्मणः ॥ नानुद्ध्यायाद्बहूञ्छब्ब्दान्न्वाचो विग्ग्लापनꣳ हि तदिति ॥२३॥ स वा ऽअयमात्मा । सर्व्वस्य व्वशी सर्व्वस्येशानः सर्व्वस्याधिपतिः सर्व्वमिदम्प्रशास्ति यदिदङ्किञ्च स न साधुना कर्म्मणा भूयान्नो ऽएवासाधुना कनीयानेष भूताधिपतिरेष लोकेश्श्वर ऽएष लोकपालः स सेतुर्व्विधरण ऽएषाँल्लोकानामसम्भेदाय ॥ २४ ॥ तमेतं व्वेदानुवचनेन व्विविदिषन्ति । ब्ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्त्वा मुनिर्ब्भवत्येतमेव प्प्रव्व्राजिनो लोकमीप्प्सन्तः प्प्रव्व्रजन्ति ॥ २५ ॥ एतद्ध स्म्म वै तत्पूर्व्वे ब्ब्राह्मणा ऽअनूचाना व्विद्वाꣳसः प्प्रजान्न कामयन्ते किम्प्रजया करिष्ष्यामो येषान्नोऽयमात्मायँल्लोक ऽइति ते ह स्म्म पुत्त्रैषणायाश्च व्वित्तैषणायाश्च लोकैषणायाश्च व्व्युत्थायाथ भिक्षाचर्य्यञ्चरन्ति या ह्येव पुत्त्रैषणा सा व्वित्तैषणा या व्वित्तैषणा सा लोकैषणोभे ह्येते ऽएषणे ऽएव भवतः ॥ २६ ॥ स ऽएष नेति नेत्यात्मा । अगृह्यो नहि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गोऽसितो न सज्यते न व्व्यथते ऽइत्यतः पापमकरवमित्यतः कल्ल्याणमकरवमित्युभे ऽउभे ह्येष ऽएते तरत्यमृतः साद्ध्वसाधुनी नैनङ्कृताकृते तपतो नास्य केन चन कर्म्मणा लोको मीयते ॥ २७ ॥ तदेतदृचाब्भ्युक्तम् । एष नित्यो महिमा ब्ब्राह्मणस्य न कर्म्मणा

( २ ) "महा ध्रुवः" इति 'ग' 'ज' पुस्तकयोः ।

वर्द्धते नो कनीयान् ॥ तस्यैव स्यात्पदवित्तं विदित्वा न कर्म्मणा लिप्प्यते पापकेनेति तस्म्मादेवंविच्छान्तो दान्त ऽउपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्न्येवात्मानम्पश्श्ये-त्सर्व्वमेनम्पश्यति सर्व्वोऽस्यात्मा भवति सर्व्वस्यात्मा भवति सर्व्वम्पाप्प्मानन्तरति नैनम्पाप्प्मा तरति सर्व्वम्पाप्प्मानन्त-पति नैनम्पाप्प्मा तपति विपापो विजरो विजिघत्सोऽपि-पासो ब्ब्राह्मणो भवति य ऽएवं व्वेद ॥ २८ ॥ स वा ऽएष महानज ऽआत्मा । अन्नादो व्वसुदानः स यो हैवमेतम्म-हान्तमजमात्मानमन्नादं व्वसुदानं व्वेद व्विन्दते व्वसु ॥ २९ ॥ स वा ऽएष महानज ऽआत्मा । अजरोऽमरोऽभयोऽ-मृतो ब्ब्रह्माभयं व्वै जनक प्प्राप्प्तोऽसीति होवाच याज्ञ-वल्क्यः सोऽहम्भगवते विदेहान्ददामि माञ्चापि सह दास्यायेति ॥ ३० ॥ स वा ऽएष महानज ऽआत्मा । अज-रोऽमरोऽभयोऽमृतो ब्ब्रह्माभयं वै ब्ब्रह्माभयः हि वै ब्ब्रह्म भवति य ऽएवं व्वेद ॥ ३१ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ आत्मज्ञाने आगमेनाधिगतस्यामृतत्वसाधनत्वस्य तर्केणापि प्रतिपादनम्, याज्ञवल्क्यकाण्डस्याचार्यपरम्परोपदेशश्च ]

अथ ह याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुः । मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्ब्रह्मवादिनी बभूव स्त्रीप्प्रज्ञैव कात्यायनी सोऽन्न्यद्वृत्तमुपाकरिष्ष्यमाणः ॥ १ ॥ याज्ञवल्क्यो मैत्रेयीति होवाच । प्प्रव्व्रजिष्ष्यन्न्वा ऽअरेऽ-

हमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्त-
ङ्करवाणीति ॥ २ ॥ सा होवाच मैत्रेयी । यन्नु म ऽइय-
म्भगोः सर्वा पृथिवी वित्तेन पूर्ण्णा स्यात्स्यान्न्वहन्तेना-
मृताहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवता-
ञ्जीवितन्तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाशास्ति
वित्तेनेति ॥ ३ ॥ सा होवाच मैत्रेयी । येनाहन्नामृता स्या-
ङ्किमहन्तेन कुर्य्यां य्यदेव भगवान्वेद तदेव मे ब्ब्रूहीति
॥ ४ ॥ स होवाच याज्ञवल्क्यः । प्रिया खलु नो भवती
सती प्प्रियमवृतद्धन्त खलु भवति तेऽहन्तद्वक्ष्यामि व्व्या-
ख्यास्यामि ते व्वाचन्तु मे व्व्याचक्षाणस्य निदिद्ध्यासस्वेति
ब्ब्रवीतु भगवानिति ॥ ५ ॥ स होवाच याज्ञवल्क्यः । न
वा ऽअरे पत्युः कामाय पतिः प्प्रियो भवत्यात्मनस्तु कामाय
पतिः प्प्रियो भवति न वा ऽअरे जायायै कामाय जाया
प्प्रिया भवत्यात्मनस्तु कामाय जाया प्प्रिया भवति न
वा ऽअरे पुत्त्राणाङ्कामाय पुत्त्राः प्प्रिया भवन्त्यात्मनस्तु
कामाय पुत्त्राः प्प्रिया भवन्ति न वा ऽअरे वित्तस्य कामाय
वित्तम्प्प्रियम्भवत्यात्मनस्तु कामाय वित्तम्प्प्रियम्भवति न
वा ऽअरे ब्ब्रह्मणः कामाय ब्ब्रह्म प्प्रियम्भवत्यात्मनस्तु
कामाय ब्ब्रह्म प्प्रियम्भवति न वा ऽअरे क्षत्त्रस्य कामाय क्षत्त्र-
म्प्प्रियम्भवत्यात्मनस्तु कामाय क्षत्त्रम्प्प्रियम्भवति न वा ऽअरे
लोकानाङ्कामाय लोकाः प्प्रिया भवन्त्यात्मनस्तु कामाय लोकाः
प्प्रिया भवन्ति न वा ऽअरे देवानाङ्कामाय देवाः प्प्रिया
भवन्त्यात्मनस्तु कामाय देवाः प्प्रिया भवन्ति न वा ऽअरे

व्वेदानाङ्कामाय व्वेदाः प्प्रिया भवन्त्यात्मनस्तु कामाय व्वेदाः प्प्रिया भवन्ति न वा ऽअरे यज्ञानाङ्कामाय यज्ञाः प्रिया भवन्त्यात्मनस्तु कामाय यज्ञाः प्प्रिया भवन्ति न वा ऽअरे भूतानाङ्कामाय भूतानि प्प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्प्रियाणि भवन्ति न वा ऽअरे सर्वस्य कामाय सर्वम्प्रियम्भवत्यात्मनस्तु कामाय सर्वम्प्रियम्भवत्यात्मा व्वरे[1] द्रष्टव्व्यः श्रोतव्व्यो मन्तव्व्यो निदिद्ध्यासितव्व्यो मैत्रेय्यात्मनि वा ऽअरे दृष्टे श्रुते मते विज्ञात ऽइदꣳ सर्वं विदितम् ॥ ६ ॥ ब्रह्म तम्परादाद्यो ऽन्न्यत्रात्मनो ब्ब्रह्म व्वेद क्षत्रन्तम्परादाद्योऽन्न्यत्रात्मनः क्षत्रं व्वेद लोकास्तम्परादुर्योऽन्न्यत्रात्मनो लोकान्व्वेद देवास्तम्परादुर्योऽन्न्यत्रात्मनो देवान्व्वेद व्वेदास्तम्परादुर्योऽन्न्यत्रात्मनो व्वेदान्व्वेद यज्ञास्तम्परादुर्योऽन्न्यत्रात्मनो यज्ञान्व्वेद भूतानि तम्परादुर्योऽन्न्यत्रात्मनो भूतानि व्वेद सर्वन्तम्परादाद्योऽन्न्यत्रात्मनः सर्वं व्वेदेदम्ब्रह्मेदं क्षत्रमिमे लोका ऽइमे देवा ऽइमे व्वेदा ऽइमे यज्ञा ऽइमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ७ ॥ स यथा दुन्दुभेर्हन्न्यमानस्य न बाह्याञ्छब्दाञ्छक्क्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा व्वीणायै व्वाद्यमानायै । न बाह्याञ्छब्दाञ्छक्क्नुयाद्ग्रहणाय व्वीणायै तु ग्ग्रहणेन व्वीणावादस्य वा शब्दो गृहीतः ॥९॥ स यथा शङ्खस्य ध्मायमानस्य । न

(१) "न्वरे" इति 'ग' 'ज' पुस्तकयोः ।

बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ १० ॥ स यथार्द्रैधाग्नेरभ्याहितस्य। पृथग्धूमा विनिश्चरन्त्येवं वा ऽअरेऽस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस ऽइतिहासः पुराणं विद्या ऽउपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि दत्तꣳ हुतमाशितम्पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्श्वसितानि ॥ ११ ॥ स यथा सर्वासामपाꣳ समुद्र ऽएकायनम्। एवꣳ सर्वेषाꣳ स्पर्शानान्त्वगेकायनमेवꣳ सर्वेषाङ्गन्धानान्नासिके ऽएकायनमेवꣳ सर्वेषाꣳ रसानाञ्जिह्वैकायनमेवꣳ सर्वेषाꣳ रूपाणाञ्चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ सङ्कल्पानाम्मन ऽएकायनमेवꣳ सर्वेषां वेदानाꣳ हृदयमेकायनमेवꣳ सर्वेषाङ्कर्म्मणाꣳ हस्तावेकायनमेवꣳ सर्वेषामद्ध्वनाम्पादावेकायनमेवꣳ सर्वेषामानन्दानामुपस्थ ऽएकायनमेवꣳ सर्वेषां विसर्ग्गाणाम्पायुरेकायनमेवꣳ सर्वासां विद्यानां वागेकायनम् ॥ १२ ॥ स यथा सैन्धवघनः । अनन्तरोऽबाह्यः कृत्स्नो रसघन ऽएव स्यादेवं वा ऽअर ऽइदम्महद्भूतमनन्तमपारङ्कृत्स्नः प्रज्ञानघन ऽएवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १३ ॥ सा होवाच मैत्रेयी । अत्रैव मा भगवान्मोहान्तमापीपदन्न वा ऽअहमिदं विजानामि

न प्प्रेत्य संज्ञास्तीति ॥ १४ ॥ स होवाच याज्ञवल्क्यः । न वा ऽअरेऽहम्मोहम्ब्रवीम्म्यविनाशी वा ऽअरेऽयमात्मा-नुच्छित्तिधर्म्मा मात्रासꣳसर्ग्गस्त्वस्य भवति ॥ १५ ॥ यद्वै तन्न पश्श्यति । पश्श्यन्वै तद्द्रष्टव्यन्न पश्श्यति न हि द्रष्टुर्द्दृष्टेर्व्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीय-मस्ति ततोऽन्न्यद्विभक्तं यत्पश्श्येत् ॥ १६ ॥ यद्वै तन्न जिग्घ्रति । जिग्घ्रन्वै तद्घ्रातव्यन्न जिग्घ्रति न हि घ्रातुर्ग्घ्रा-णाद्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यज्जिग्घ्रेत् ॥ १७ ॥ यद्वै तन्न रसयति । व्विजानन्वै तद्रसन्न रसयति न हि रसयितू रसाद्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ १८ ॥ यद्वै तन्न वदति । वदन्वै तद्वक्तव्यन्न वदति न हि वक्तुर्व्वचो व्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्वदेत् ॥ १९ ॥ यद्वै तन्न शृणोति । शृण्वन्वै तच्छ्रोतव्यन्न शृणोति न हि श्रोतुः श्रुतेर्व्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीय-मस्ति ततोऽन्न्यद्विभक्तं यच्छृणुयात् ॥ २० ॥ यद्वै तन्न मनुते । मन्न्वानो वै तन्न्मन्तव्यन्न मनुते न हि मन्तुर्म्मते-र्व्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽ-न्न्यद्विभक्तं यन्न्मन्न्वीत ॥ २१ ॥ यद्वै तन्न स्प्पृशति । स्प्पृशन्वै तत्स्प्रष्टव्यन्न स्प्पृशति न हि स्प्रष्टु स्प्पृष्टेर्व्वि-परिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽ-न्न्यद्विभक्तं यत्स्पृशेत् ॥ २२ ॥ यद्वै तन्न विजानाति ।

विजानन्वै तद्विज्ञेयन्न विजानाति न हि विज्ञातुर्विज्ञाना-
द्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽ-
न्यद्विभक्तं यद्विजानीयात् ॥ २३ ॥ यत्र वा ऽअन्यदिव
स्यात्। तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्र-
सयेदन्योऽन्यदभिवदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वी-
तान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥ २४ ॥ यत्र
त्वस्य सर्वमात्मैवाभूत् । तत्केन कम्पश्येत्तत्केन कञ्जि-
घ्रेत्तत्केन कᳪं रसयेत्तत्केन कमभिवदेत्तत्केन कᳪं शृणु-
यात्तत्केन कम्मन्वीत तत्केन कᳪं स्पृशेत्तत्केन कं विजा-
नीयाद्येनेदᳪं सर्वं विजानाति तङ्केन विजानीयाद्विज्ञातारमरे
केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्व-
मृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज ॥ २५ ॥ अथ
वᳪंशः । तदिदं वयᳪं शौर्प्पणाय्याच्छौर्प्पणाय्यो गौतमाद्गौ-
तमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यः
साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज ऽऔदवाहेश्च शाण्डि-
ल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैज-
वापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहि-
णायनाच्च रौहिणायनः शौनकाच्च जैवन्तायनाच्च रैभ्याच्च
रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्या-
यनः कौण्डिन्याभ्याङ्कौण्डिन्या ऽऔर्णवाभेभ्य ऽऔ-
र्णवाभाः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः
कौण्डिन्याच्चाग्निवेश्याच्च ॥ २६ ॥ आग्निवेश्यः सैत-
वात् । सैतवः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातू-

कण्वर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो वलाकाकौशिकाद्वलाकाकौशिकः काषायणात्काषायणः सौकरायणात्सौकरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज ऽआत्रेयात् ॥ २७ ॥

आत्रेयो माण्टेः । माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्न्याद्विदर्भीकौण्डिन्न्यो वत्सनपातो वाभ्रवाद्वत्सनपाद्वाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य ऽआङ्गिरस ऽआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच ऽआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन ऽएकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ २८ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ सर्वोपनिषदर्थस्य ब्रह्मण उत्तरसम्बन्धार्थमनुवादः ]

पूर्णमदः पूर्णमिदम्पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत ऽओ३म् खम्ब्रह्म खम्पुराणं वायुरम्खमिति ह स्माह कौरव्यायणीपुत्रो वेदोऽयम्ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥ १ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ दमदानदयानां सकलब्रह्मोपासनाङ्गत्वेन प्रतिपादनम् ]

त्रयाः प्राजापत्याः । प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या ऽअसुराः ॥ १ ॥ उषित्वा ब्रह्मचर्यन्देवा ऽऊचुः । ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द ऽइति व्यज्ञासिष्टा३ ऽइति व्यज्ञासिष्मेति होचुर्दाम्यतेति न ऽआत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥* अथ हैनम्मनुष्या ऽऊचुः । ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द ऽइति व्यज्ञासिष्टा३ ऽइति व्यज्ञासिष्मेति होचुर्दत्तेति न ऽआत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ ३ ॥ अथ हैनमसुरा ऽऊचुः । ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द ऽइति व्यज्ञासिष्टा३ ऽइति व्यज्ञासिष्मेति होचुर्दयध्वमिति न ऽआत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द ऽइति दाम्यत दत्त दयध्वमिति तदेतत्त्रयः शिक्षेद्दमन्दानन्दयामिति ॥ ४ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

* शतम् ७५०० ।

[ कृतोपासनस्य योगिनोऽन्तकाले प्रार्थना ]

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ओ३म् । क्रतो स्मर क्लिबे स्मर । अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं विधेमेति ॥ १ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—— ० ——

[ हृदयस्य ब्रह्मत्वेनोपासनम् ]

एष प्रजापतिर्यद्धृदयम् । एतद्ब्रह्मैतत्सर्वन्तदेतत्त्र्यक्षरꣳ हृदयमिति हृ ऽइत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य ऽएवं वेद द ऽइत्येकमक्षरन्ददत्यस्मै स्वाश्चान्ये च य ऽएवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य ऽएवं वेद ॥ १ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—— ० ——

[ हृदयाख्यस्य ब्रह्मणः सत्यत्वेनोपासनम् ]

तद्वै तदेतदेव तदास । सत्यमेव स यो हैवमेतन्महद्यक्षम्प्रथमजं वेद सत्यम्ब्रह्मेति जयतीमाँल्लोकाञ्जित ऽइन्न्वसावसद्य ऽएवमेतन्महद्यक्षम्प्रथमजं वेद सत्यम्ब्रह्मेति सत्यꣳ ह्येव ब्रह्म ॥ १ ॥

अष्टमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—— ० ——

[ सत्यस्य ब्रह्मणः प्रथमजत्वप्रतिपादनम् ]

आप ऽएवेदमग्र आसुः । ता ऽआपः सत्यमसृजन्त सत्यम्ब्रह्म ब्रह्म[1] प्प्रजापतिम्प्रजापतिर्द्देवान् ॥ १ ॥ ते देवाः सत्यमित्युपासते । तदेतत्त्र्यक्षरꣳ सत्यमिति स ऽइत्येकमक्षरन्तीत्येकमक्षरममित्येकमक्षरम्प्रथमोत्तमे ऽअक्षरे सत्यम्मद्ध्यतोऽनृतन्तदेतदनृतꣳ सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैवंविद्वाꣳसमनृतꣳ हिनस्ति ॥ २ ॥ तद्यत्तत्सत्यम् । असौ स ऽआदित्यो य ऽएष ऽएतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेऽक्षन्पुरुषस्तावेतावन्योऽन्यस्मिन्प्रतिष्ठितौ रश्मिभिर्वा ऽएषोऽस्मिन्प्रतिष्ठितः प्प्राणैरयममुष्मिन्त्स[2] यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलम्पश्यति नैनमेते रश्मयः प्प्रत्यायन्ति ॥ ३ ॥ य ऽएष ऽएतस्मिन्मण्डले पुरुषः । तस्य भूरिति शिर ऽएकꣳ शिर ऽएकमेतदक्षरम्भुव ऽइति बाहू द्वौ बाहू द्वे ऽएते ऽअक्षरे स्वरिति प्प्रतिष्ठा द्वे प्प्रतिष्ठे द्वे ऽएते ऽअक्षरे तस्योपनिषदहरिति हन्ति पाप्मानञ्जहाति च य ऽएवं वेद ॥ ४ ॥ अथ योऽयन्दक्षिणेऽक्षन्पुरुषः । तस्य भूरिति शिर ऽएकꣳ शिर ऽएकमेतदक्षरम्भुव ऽइति बाहू द्वौ बाहू द्वे ऽएते ऽअक्षरे स्वरिति प्प्रतिष्ठा द्वे प्प्रतिष्ठे द्वे ऽएते ऽअक्षरे तस्योपनिषदहमिति हन्ति पाप्मानञ्जहाति च य ऽएवं वेद ॥ ५ ॥

अष्टमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

---

( १ ) 'ग' 'ज' पुस्तकयोः "ब्रह्म" इति नास्ति ।
( २ ) "न्स" इति 'ग' 'ज' पुस्तकयोः ।

[ विद्युद्ब्रह्मेत्युपासनविधानम् ]

विद्युद्ब्रह्मेत्याहुः । विदानाद्विद्युद्विद्यत्येनः सर्वस्मात्पाप्मनो य ऽएवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥

अष्टमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

[ मनउपाधिविशिष्टस्य ब्रह्मण उपास्तिः ]

मनोमयोऽयम्पुरुषः । भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वैवमयमन्तरात्मन्पुरुषः स ऽएष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदम्प्रशास्ति यदिदङ्किञ्च य ऽएवं वेद ॥ १ ॥

अष्टमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ वाग्धेनुः ब्रह्मेत्युपास्तिः ]

वाचन्धेनुमुपासीत । तस्याश्चत्वार स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा ऽउपजीवन्ति स्वाहाकारञ्च वषट्कारञ्च हन्तकारम्मनुष्याः स्वधाकारम्पितरस्तस्याः प्राण ऽऋषभो मनो वत्सः ॥ १ ॥

अष्टमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

[ वैश्वानराग्न्युपाधिकस्य ब्रह्मण उपासनम् ]

अयमग्निर्वैश्वानरः । योऽयमन्तः पुरुषे येनेदमन्नम्पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णा-

वपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैतद्घोषꣳ शृणोति ॥ १ ॥

अष्टमाध्याये दशमं ब्राह्मणम् ॥ १० ॥

[ व्याधितस्तप्यमानस्य तापे तप इति दृष्टिः ]

एतद्वै परमन्तपः । यद्व्याहितस्तप्यते परमꣳ हैव लोकञ्जयति य ऽएवं वेदैतद्वै परमन्तपो यम्प्रेतमरण्यꣳ हरन्ति परमꣳ हैव लोकञ्जयति य ऽएवं वेदैतद्वै परमन्तपो यम्प्रेतमग्नावभ्यादधति परमꣳ हैव लोकञ्जयति य ऽएवं वेद ॥ १ ॥

अष्टमाध्याय एकादशं ब्राह्मणम् ॥ ११ ॥

[ एतत्प्रकरणस्थानां सर्वेषामुपासनानां गतिकथनम्, अश्रुतफलोपासनानां ब्रह्मलोकफलकथनञ्च ]

यदा वै पुरुषः । अस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खन्तेन स ऽऊर्द्ध्व ऽआक्रमते स ऽआदित्यमागच्छति तस्मै स तत्र विजिहीते यथाडम्बरस्य खन्तेन स ऽउर्द्ध्व ऽआक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खन्तेन स ऽऊर्द्ध्व ऽआक्रमते स लोकमागच्छत्यशोकमहिमन्तस्मिन्न्वसति शश्वतीः समाः ॥ १ ॥

अष्टमाध्याये द्वादशं ब्राह्मणम् ॥ १२ ॥

[ विरमितिगुणद्वयविशिष्टान्नप्राणोपाधिकब्रह्मोपासनम् ]

अन्नम्ब्रह्मेत्येक ऽआहुः । तन्न तथा पूयति वा ऽअन्न-मृते प्प्राणात्प्राणो ब्ब्रह्मेत्येक ऽआहुस्तन्न तथा शुष्ष्यति वै प्प्राण ऽऋतेऽन्नादेते हुत्वेव देवते ऽएकधाभूयम्भूत्वा परमताङ्गच्छतः ॥ १ ॥ तद्ध स्माह प्प्रातृदः पितरम् । किᳬस्विदेवैवं विदुषे साधु कुर्य्यात्किमेवास्म्मा ऽअसाधु कुर्य्यादिति स ह स्माह पाणिना मा प्प्रातृद कुस्त्वेन-योरेकधाभूयम्भूत्वा परमताङ्गच्छतीति ॥ २ ॥ तस्म्मा ऽउ हैतदुवाच । वीत्यन्नं वै व्व्यन्ने हीमानि सर्व्वाणि भूतानि विष्टानि रमिति प्प्राणो वै रम्प्राणे हीमानि सर्व्वाणि भूतानि रतानि सर्व्वाणि ह वा ऽअस्म्मिन्न्भूतानि विशन्ते सर्व्वाणि भूतानि रमन्ते य ऽएवं वेद ॥ ३ ॥

अष्टमाध्याये त्रयोदशं ब्राह्मणम् ॥ १३ ॥

———— ० ————

[ उक्तस्य ब्रह्मण उक्थादिगुणविशिष्टत्वेनोपासनम् ]

उक्क्थम् । प्राणो वा ऽउक्क्थम्प्राणो हीदᳬ सर्व्व-मुत्थापयत्युद्धास्म्मा ऽउक्क्थविद्वीरस्तिष्ठत्युक्क्थस्य सा-युज्यᳬ सलोकताञ्जयति य ऽएवं वेद ॥ १ ॥ यजुः । प्प्राणो वै यजुः प्प्राणे हीमानि सर्व्वाणि भूतानि युज्ज्यन्ते युज्यन्ते हास्म्मै सर्व्वाणि भूतानि श्रैष्ठ्याय यजुषः सायु-ज्यᳬ सलोकताञ्जयति य ऽएवं वेद ॥ २ ॥ साम । प्प्राणो वै साम प्प्राणे हीमानि सर्व्वाणि भूतानि सम्म्यञ्चि

सम्म्यञ्चि ह्यास्म्मिन्त्सर्व्वाणि भूतानि श्रैष्ठ्याय कल्प्यन्ते[1] साम्म्नᳬ सायुज्ज्यᳬ सलोकताञ्जयति य ऽएवं व्वेद ॥ ३ ॥ क्षत्त्रम् । प्राणो वै क्षत्त्रम्प्राणो हि वै क्षत्त्रन्त्रायते हैनम्प्राणᳬ क्षणितोᳬ प्र क्षत्त्रमात्त्रमाप्नोति क्षत्त्रस्य सायुज्ज्यᳬ सलोकताञ्जयति य ऽएवं व्वेद ॥ ४ ॥

अष्टमाध्याये चतुर्दशं ब्राह्मणम् ॥ १४ ॥

माध्यन्दिनीये शतपथब्राह्मणे षष्ठः प्रपाठकः ॥ ६ ॥

कण्डिकासंख्या ॥ १२९ ॥

—— ० ——

[ गायत्र्युपाधिकब्रह्मोपासनम् ]

भूमिरन्तरिक्षन्द्यौरिति । अष्टावक्षराण्यष्टाक्षरᳬ ह वा ऽएकङ्गायत्र्यै पदमेतदु हास्या ऽएतत्स यावदेषु लोकेषु तावद्ध जयति योऽस्या ऽएतदेवम्पदं व्वेद ॥ १ ॥ ऋचो यजूᳬषि सामानीति । अष्टावक्षराण्यष्टाक्षरᳬ ह वा ऽएकङ्गायत्र्यै पदमेतदु हैवास्या ऽएतत्स यावतीयन्त्रयी विद्या तावद्ध जयति योऽस्या ऽएतदेवम्पदं व्वेद ॥२॥ प्राणोऽपानो व्व्यान ऽइति । अष्टावक्षराण्यष्टाक्षरᳬ ह वा ऽएकङ्गायत्र्यै पदमेतदु हैवास्या ऽएतत्स यावदिदम्प्राणि तावद्ध जयति योऽस्या ऽएतदेवम्पदं व्वेद ॥ ३ ॥ अथास्या ऽएतदेव । तुरीयन्दर्शतम्पदम्परोरजा य ऽएष तपति यद्वै चतुर्त्थन्तत्तुरीयन्दर्शतम्पदमिति ददृश ऽइव ह्येष परोरजा ऽइति सर्व्वमु ह्येष रज ऽउपर्य्युपरि तपत्त्येवᳬ

(१) "कल्पन्ते" इति 'ग' 'ज' पुस्तकयोः ।

हैव श्रिया यशसा तपति योऽस्या ऽएतदेवम्पदं वेद ॥ ४ ॥ सैषा गायत्री । एतस्मिँस्तुरीये दर्शते पदे परोरजसि प्प्रतिष्ठिता तद्वै तत्सत्ये प्प्रतिष्ठिता चक्षुर्वै सत्यञ्चक्षुर्हि वै सत्यन्तस्माद्यदिदानीन्द्वौ विवदमानावेयातामहमद्राक्षमहमश्रौषमिति य ऽएव ब्ब्रूयादहमद्राक्षमिति तस्म्मा ऽएव श्रद्दध्यात्[1] ॥ ५ ॥ तद्वै तत्सत्यम्बले प्प्रतिष्ठितम् । प्राणो वै बलन्तत्प्राणे प्प्रतिष्ठितन्तस्म्मादाहुर्ब्बलꣳ सत्यादोजीय ऽइत्येवम्म्वेषा गायत्र्यद्ध्यात्मम्प्रतिष्ठिता ॥ ६ ॥ सा हैषा गयाँस्तत्रे । प्राणा वै गयास्तत्प्राणाँस्तत्रे तद्यद्गयाँस्तत्रे तस्म्माद्गायत्री नाम स यामेवामूमन्न्वाहैषैव सा स यस्म्मा ऽअन्न्वाह तस्य प्प्राणाँस्त्रायते ॥ ७ ॥ ताꣳ हैके । सावित्रीमनुष्टुभमन्न्वाहुर्व्वागनुष्टुबेतद्वाचमनुब्ब्रूम ऽइति न तथा कुर्य्याद्गायत्रीमेवानुब्ब्रूयाद्यदि ह वा ऽअपि बह्विव प्प्रतिगृह्णाति न हैव तद्गायत्र्या ऽएकञ्चन पदम्प्रति ॥ ८ ॥ स य ऽइमाँस्त्रीँल्लोकान् । पूर्ण्णान्प्रतिगृह्णीयात्सोऽस्या ऽएतत्प्रथमम्पदमाप्नुयादथ यावतीयन्त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या ऽएतद्द्वितीयम्पदमाप्नुयादथ यावदिदम्प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या ऽएतत्तृतीयम्पदमाप्नुयादथास्या ऽएतदेव तुरीयन्दर्शतम्पदम्परोरजा य ऽएष तपति नैव केन चनाप्प्यम्कुत ऽउ ऽएतावत्प्रतिगृह्णीयात् ॥ ९ ॥ तस्या ऽउपस्थानम् । गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि

(१) "श्रद्दध्याम" इति 'क' पुस्तके ।

न हि पश्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यन्द्विष्ष्यादसावस्मै कामो मा समर्द्धीति वा न हैवास्मै स कामः समृद्ध्यते यस्मा ऽएवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥ १० ॥ एतद्ध वै तज्जनको वैदेहः । बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविद्ब्रूथा ऽअथ कथꣳ हस्ती भूतो वहसीति मुखꣳ ह्यस्याः सम्राण्णन विदाञ्चकरेति होवाच ॥ ११ ॥ तस्या ऽअग्निरेव मुखम् । यदि ह वा ऽअपि बह्विवाग्नावभ्यादधति सर्वमेव तत्सन्दहत्येवꣳ हैवैवंविद्यद्यपि बह्विव पापङ्करोति सर्वमेव तत्सम्प्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति ॥ १२ ॥

अष्टमाध्याये पञ्चदशं ब्राह्मणम् ॥ १५ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

---

[ विहितस्य केवलस्य कर्मणस्तत्सहितस्य च ज्ञानस्य निषिद्धयोश्च तयोः क्रमेण दक्षिणोदगधोमार्गकथनम् ]

श्वेतकेतुर्ह वा ऽआरुणेयः । पञ्चालानाम्परिषदमाजगाम स ऽआजगाम जैवलम्प्रवाहणम्परिचारयमाणन्तमुदीक्ष्याभ्युवाद कुमारा३ ऽइति स भो३ ऽइति प्रतिशुश्रावानुशिष्टो न्वसि पित्रेत्योमिति होवाच ॥ १ ॥ वेत्थ यथेमाः प्रजाः । प्रयत्यो विप्रतिपद्यान्ता३ ऽइति नेति होवाच वेत्थ यथेमँल्लोकम्पुनरापद्यान्ता३ ऽइति नेति हैवोवाच वेत्थ यथासौ लोक ऽएवम्बहुभिः पुनः पुनः प्रयद्भिर्न्न सम्पूर्य्यता३ ऽइति नेति हैवोवाच

॥ २ ॥ वेत्थ यतिथ्यामाहुत्याᳬं हुतायाम् । आपः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ ऽइति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्प्रतिपदम्पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानम्प्रतिपद्यते पितृयाणं वा ॥ ३ ॥ अपि हि न ऽऋषेर्वचः श्रुतम् । 'द्वे सृती ऽअश्रृणवम्पितॄणामहन्देवानामुत मर्त्यानाम् ॥ ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरम्मातरञ्चे'ति नाहमत ऽएकञ्चन वेदेति होवाच ॥ ४ ॥ अथ हैनं वसत्योपमन्त्रयाञ्चक्रे । अनादृत्य वसतिङ्कुमारः प्रदुद्राव स ऽआजगाम पितरन्तᳬं होवाचेति वाव किल नो भवान्पुरानुशिष्टानवोच ऽइति कथᳬं सुमेध ऽइति पञ्च मा प्प्रश्नान्राजन्यबन्धुरप्राक्षीत्ततो नैकञ्चन वेदेति होवाच कतमे त ऽइतीम ऽइति ह प्प्रतीकान्न्युदाजहार ॥ ५ ॥ स होवाच । तथा नस्त्वन्तात जानीथा यथा यदहङ्किञ्च वेद सर्वमहन्तत्तुभ्यमवोचम्प्रेहि तु तत्र प्प्रतीत्य ब्ब्रह्मचर्यं वत्स्याव ऽइति भवानेव गच्छत्विति ॥ ६ ॥ स ऽआजगाम गौतमः । यत्र प्प्रवाहणस्य जैवलेरास तस्म्मा ऽआसनमाहार्योदकमाहार्याञ्चकाराथ हास्म्मा ऽअर्घ्यञ्चकार ॥ ७ ॥ स होवाच । वरम्भवते गौतमाय दद्म ऽइति स होवाच प्प्रतिज्ञातो म ऽएष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्ताम्मे ब्ब्रूहीति ॥ ८ ॥ स होवाच । दैवेषु वै गौतम तद्वरेषु मानुषाणाम्ब्रूहीति ॥ ९ ॥ स होवाच । विज्ञायते हास्ति हिरण्य-

(१) शु॰ य॰ सं॰ १९. ४७ ।

स्यापात्तङ्गो ऽअश्श्वानान्दासीनाम्प्रवराणाम्परिधानानाम्मा नो भवान्न्बहोरनन्तस्यापर्य्यन्तस्याभ्यवदान्यो भूदिति स वै गौतम तीर्त्थेनेच्छासा ऽइत्युपैम्म्यहम्भवन्तमिति वाचा ह स्म्मैव पूर्व्वे ऽउपयन्ति ॥१०॥ स होपायनकीर्त्या ऽउवाच । तथा नस्त्वङ्गौतम मापराधास्तव च पितामहा यथेयं विद्येतः पूर्व्वन्न कस्मिँश्चन ब्राह्मण ऽउवास तान्त्वहन्तुभ्यं वक्ष्यामि को हि त्वैवम्ब्रुवन्तमर्हति प्प्रत्याख्यातुमिति ॥११॥ असौ वै लोकोऽग्निर्ग्गौतम । तस्यादित्य ऽएव समिद्रश्म्मयो धूमोऽहरर्च्चिश्चन्द्रमा ऽअङ्गारा नक्षत्राणि विष्फुलिङ्गास्तस्म्मिन्नेतस्म्मिन्नग्नौ देवाः श्रद्धाञ्जुह्वति तस्या ऽआहुतेः सोमो राजा सम्भवति ॥१२॥ पर्ज्जन्यो वा ऽअग्निर्ग्गौतम । तस्य सँवत्सर ऽएव समिदभ्राणि धूमो विद्युदर्च्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गास्तस्म्मिन्नेतस्म्मिन्नग्नौ देवाः सोमञ्जुह्वति तस्या ऽआहुतेर्व्वृष्टिः सम्भवति ॥ १३ ॥ अयं वै लोकोऽग्निर्ग्गौतम । तस्य पृथिव्येव समिद्वायुर्द्धूमो रात्रिरर्च्चिर्द्दिशोऽङ्गारा ऽअवान्तरदिशो विष्फुलिङ्गास्तस्म्मिन्नेतस्म्मिन्नग्नौ देवा व्वृष्टिञ्जुह्वति तस्या ऽआहुतेरन्नः सम्भवति ॥ १४ ॥ पुरुषो वा ऽअग्निर्ग्गौतम । तस्य व्यात्तमेव समित्प्राणो धूमो वागर्च्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गास्तस्म्मिन्नेतस्म्मिन्नग्नौ देवा ऽअन्नञ्जुह्वति तस्या ऽआहुते रेतः सम्भवति ॥ १५ ॥ योषा वा ऽअग्निर्ग्गौतम । तस्या ऽउपस्थ ऽएव समिल्लोमानि धूमो योनिरर्च्चिर्यदन्तः करोति तेऽङ्गारा ऽअभिनन्दा विष्फुलिङ्गास्त-

स्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या ऽआहुतेः पुरुषः सम्भवति स जायते स जीवति यावज्जीवत्यथ यदा म्रियतेऽथैनमग्नये हरन्ति ॥ १६ ॥ तस्याग्निरेवाग्नि-र्भवति । समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा ऽअङ्गारा विष्फुलिङ्गा विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरु-षञ्जुह्वति तस्या ऽआहुतेः पुरुषो भास्वरवर्णः सम्भवति ॥ १७ ॥ ते य ऽएवमेतद्विदुः । ये चामी ऽअरण्ये श्रद्धाᳫं सत्यमुपासते तेऽर्चिरभिसम्भवन्त्यर्चिषोऽहरह्न ऽआपूर्य्य-माणपक्षमापूर्य्यमाणपक्षाद्यान्षण्णमासानुदङ्ङादित्य ऽएति मासेभ्यो देवलोकन्देवलोकादादित्यमादित्याद्वैद्युतन्तान्वैद्यु-तात्पुरुषो मानस ऽएत्य ब्रह्मलोकान्गमयति ते तेषु ब्रह्म-लोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्तिरस्ति ॥ १८ ॥ अथ ये यज्ञेन दानेन । तपसा लोकञ्जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिᳪं रात्रेरपक्षीयमाणपक्षम-पक्षीयमाणपक्षाद्यान्षण्णमासान्दक्षिणादित्य ऽएति मासे-भ्यः पितृलोकम्पितृलोकाच्चन्द्रन्ते चन्द्रम्प्राप्यान्नम्भवन्ति ताँस्तत्र देवा यथा सोमᳪं राजानमाप्यायस्वापक्षीयस्वे-त्येवमेनाँस्तत्र भक्षयन्ति तेषां यदा तत्पर्य्यवैत्यथेममे-वाकाशमभिनिष्पद्यन्त ऽआकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीन्ते पृथिवीम्प्राप्यान्नम्भवन्ति त ऽएवमेवानुपरिवर्त्त-न्तेऽथ य ऽएतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदन्द-न्दशूकम् ॥ १९ ॥

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ ज्येष्ठत्वश्रेष्ठत्वादिगुणविशिष्टप्राणोपासनम् ]

यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद । ज्येष्ठश्च श्रेष्ठश्च स्वानाम्भवति प्प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानाम्भवत्यपि च येषाम्बुभूषति य ऽएवं वेद ॥ १ ॥ यो ह वै वसिष्ठां वेद । वसिष्ठः स्वानाम्भवति वाग्वै वसिष्ठा वसिष्ठः स्वानाम्भवति य ऽएवं वेद ॥ २ ॥ यो ह वै प्प्रतिष्ठां वेद । प्प्रतितिष्ठति समे प्प्रतितिष्ठति दुर्गे चक्षुर्वै प्प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्प्रतितिष्ठति प्प्रतितिष्ठति समे प्प्रतितिष्ठति दुर्गे य ऽएवं वेद ॥ ३ ॥ यो ह वै सम्पदं वेद । सꣳ हास्मै पद्यते यङ्कामङ्कामयते श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा ऽअभिसम्पन्नाः सꣳ हास्मै पद्यते यङ्कामङ्कामयते य ऽएवं वेद ॥ ४ ॥ यो ह वा ऽआयतनं वेद । आयतनꣳ स्वानाम्भवत्यायतनञ्जनानाम्मनो वा ऽआयतनमायतनꣳ स्वानाम्भवत्यायतनञ्जनानां य ऽएवं वेद ॥ ५ ॥ यो ह वै प्प्रजातिं वेद । प्प्रजायते प्प्रजया पशुभी रेतो वै प्प्रजातिः प्प्रजायते प्प्रजया पशुभिर्य्य ऽएवं वेद ॥ ६ ॥ ते हेमे प्प्राणाः । अहꣳ श्रेयसे विवदमाना ब्रह्म जग्मुः को नो वसिष्ठ ऽइति [1]तद्धोवाच यस्मिन्व ऽउत्क्रान्त ऽइदꣳ शरीरम्पापीयो मन्यते स वो वसिष्ठ ऽइति ॥ ७ ॥ वाग्घोच्चक्राम । सा सँवत्सरम्प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथा कडा ऽअवदन्तो वाचा प्प्राणन्तः

(१) 'ग' 'ज' पुस्तकयोः "तद्धोवाच" इति पाठो नास्ति ।

प्प्राणेन पश्श्यन्तश्चक्षुषा · शृण्वन्तः श्श्रोत्रेण विद्वाꣳसो मनसा प्प्रजायमाना रेतसैवमजीविष्मेति प्प्रविवेश ह वाक् ॥ ८ ॥ चक्षुर्होच्चक्राम । तत्सँवत्सरम्प्रोष्ष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथान्धा ऽअपश्श्यन्तश्चक्षुषा प्प्राणन्तः प्प्राणेन वदन्तो वाचा शृण्वन्तः · श्श्रोत्रेण विद्वाꣳसो मनसा प्प्रजायमाना रेतसैवमजीविष्मेति प्प्रविवेश ह चक्षुः ॥ ९ ॥ श्श्रोत्रꣳ होच्चक्राम । तत्सँवत्सरम्प्रोष्ष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथा बधिरा ऽअशृण्वन्तः श्श्रोत्रेण प्प्राणन्तः प्प्राणेन वदन्तो वाचा पश्श्यन्तश्चक्षुषा विद्वाꣳसो मनसा प्प्रजायमाना रेतसैवमजीविष्मेति प्प्रविवेश ह श्श्रोत्रम् ॥ १० ॥ मनो होच्चक्राम । तत्सँवत्सरम्प्रोष्ष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथा मुग्धा ऽअविद्वाꣳसो मनसा प्प्राणन्तः प्प्राणेन वदन्तो वाचा पश्श्यन्तश्चक्षुषा शृण्वन्तः श्श्रोत्रेण प्प्रजायमाना रेतसैवमजीविष्मेति प्प्रविवेश ह मनः ॥ ११ ॥ रेतो होच्चक्राम । तत्सँवत्सरम्प्रोष्ष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथा क्लीबा ऽअप्प्रजायमाना रेतसा प्प्राणन्तः प्प्राणेन वदन्तो वाचा पश्श्यन्तश्चक्षुषा शृण्वन्तः श्श्रोत्रेण विद्वाꣳसो मनसैवमजीविष्मेति प्प्रविवेश ह रेतः ॥ १२ ॥ अथ ह प्प्राण ऽउत्क्रमिष्ष्यन् । यथा महासुहयः सैन्धवः पड्वीशशङ्कून्त्संवृहेदेवꣳ हैवेमान्प्राणान्त्सँवबर्ह ते होचुर्म्मा भगव ऽउत्क्रमीर्न्न वै

शक्ष्यामस्त्वदृते जीवितुमिति तस्य वै मे बलिङ्कुरुतेति तथेति ॥ १३ ॥ सा ह वागुवाच । यद्वा ऽअहं वसिष्ठास्मि त्वन्तद्वसिष्ठोऽसीति चक्षुर्यद्वा ऽअहम्प्रतिष्ठास्मि त्वन्तत्प्रतिष्ठोऽसीति श्रोत्रं यद्वा ऽअहꣳ सम्पदस्मि त्वन्तत्सम्पदसीति मनो यद्वा ऽअहमायतनमस्मि त्वन्तदायतनमसीति रेतो यद्वा ऽअहम्प्रजातिरस्मि त्वन्तत्प्रजातिरसीति तस्यो मे किमन्नङ्किं वास ऽइति यदिदङ्किञ्चा श्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास ऽइति न ह वा ऽअस्यानन्नञ्जग्धम्भवति नानन्नम्प्रतिगृहीतं य ऽएवमेतदनस्यान्नं वेद ॥ १४ ॥ तद्विद्वाꣳसः श्रोत्रियाः । अशिष्यन्त ऽआचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नङ्कुर्वन्तो मन्यन्ते तस्मादेवंविदशिष्यन्नाचामेदशित्वाचामेदेतमेव तदनमनग्नङ्कुरुते ॥ १५ ॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ श्रीमन्थाख्यं कर्म ]

स यः कामयेत[1] । महत्प्राप्नुयामित्युदगयन ऽआपूर्यमाणपक्षे पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कꣳसे चमसे वा सर्वौषधम्फलानीति सम्भृत्य परिसमुह्य परिलिप्याग्निमुपसमाधायावृताज्यꣳ संस्कृत्य पुꣳसा नक्षत्रेण मन्थꣳ सन्नीय जुहोति ॥ १ ॥ यावन्तो देवास्त्वयि जातवेदः । तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् ॥ तेभ्योऽहम्भागधेयञ्जुहोमि ते मा तृप्ताः कामैस्तर्पयन्तु

(१) "कामयते" इति 'ग' 'ज' पुस्तकयोः ।

स्वाहा ॥२॥ या तिरश्ची निपद्यसे ऽअहं विधरणी ऽइति । तान्त्वा घृतस्य धारया यजे सꣳराधनीमहꣳ स्वाहा ॥ 'प्रजापते न त्वदेतान्यन्य' ऽइति तृतीयाञ्जुहोति ॥ ३ ॥ ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रोत्राय स्वाहायतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ४ ॥ भूताय स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ५ ॥ [अर्धः प्रपाठकः ॥५१॥] पृथिव्यै स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयत्यन्तरिक्षाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति दिवे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति दिग्भ्यः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ६ ॥ भूः

(१) "निपद्यसेऽहं" इति 'ग' 'ज' पुस्तकयोः ।

(२) ऋ० सं० ८. ७. ४ । शु० य० सं० १०. २० ।

स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ७ ॥ अग्नये स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति तेजसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रियै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति लक्ष्म्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सवित्रे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सरस्वत्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वेभ्यो देवेभ्यः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ८ ॥ अथैनमभिमृशति । भ्रमसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि विभूरसि प्रभूरसि ज्योतिरस्यन्नमसि निधनमसि संवर्गोऽसीति ॥ ९ ॥ अथैनमुद्यच्छति । आमोऽस्यामꣳ हि ते मयि ॥ स हि राजेशानोऽधिपतिः स मा राजेशानोऽधिपतिङ्करोत्विति ॥ १० ॥ अथैनमाचामति । 'तत्सवितुर्वरेण्यम्'[1] ॥ 'मधु वाता ऽऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः'[2] ॥ भूः

---

(१) शु० य० सं० ३. ३५ । (२) शु० य० सं० १३. २७ ।

स्वाहा ॥११॥ 'भर्ग्गो देवस्य धीमहि' ॥ 'मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ॥ मधु द्यौरस्तु नः पिता' भुवः स्वाहा ॥ १२ ॥ 'धियो यो नः प्प्रचोदयात्' । 'मधुमान्नो वनस्प्पतिर्म्मधुमाँ२॥ ऽअस्तु सूर्य्यः ॥ माद्ध्वीर्ग्गावो भवन्तु नः' स्वः स्वाहेति सर्व्वाञ्च सावित्त्रीमन्न्वाह सर्व्वाश्च मधुमतीः सर्व्वाश्च व्व्याहृतीरहमेवेदꣳ सर्व्वम्भूयासम्भूर्भुवः स्वः स्वाहेत्यन्तत ऽआचम्म्य प्प्रक्षाल्ल्य पाणी जघनेनाग्निम्प्राक्शिराः संविशति ॥ १३ ॥ प्रातरादित्यमुपतिष्ठते । दिशामेकपुण्डरीकमस्यहम्मनुष्ष्याणामेकपुण्डरीकम्भूयासमिति यथेतमेत्त्य जघनेनाग्निमासीनो वꣳशञ्जपति ॥ १४ ॥ तꣳ हैतमुद्दालक ऽआरुणिः । वाजसनेयाय याज्ञवल्क्यायान्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्क्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्प्ररोहेयुः पलाशानीति ॥ १५ ॥ एतमु हैव वाजसनेयो याज्ञवल्क्यः । मधुकाय पैङ्ग्यायान्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्क्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्प्ररोहेयुः पलाशानीति ॥ १६ ॥ एतमु हैव मधुकः पैङ्ग्यः । चूडाय भागवित्तयेऽन्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्क्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्प्ररोहेयुः पलाशानीति ॥ १७ ॥ एतमु हैव चूडो भागवित्तिः । जानकय ऽआयस्स्थूणायान्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्क्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः

(१) शु० य० सं० ३. ३५। (२) शु० य० सं० १३. २८। (३) शु० य० सं० ३. ३५। (४) शु० य० सं० १३. २९।

प्प्ररोहेयुः पलाशानीति ॥ १८ ॥ एतमु हैव जानकिराय-स्स्थूणः । सत्त्यकामाय जाबालायान्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्प्ररोहेयुः पलाशानीति ॥ १९ ॥ एतमु हैव सत्त्यकामो जाबालः । अन्तेवासिब्भ्य ऽउक्त्वोवाचापि य ऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्प्ररोहेयुः पलाशानीति तमेतन्ना-पुत्राय वानन्तेवासिने वा ब्रूयात् ॥ २० ॥ चतुरौदुम्बरो भवति । औदुम्बरश्चमस ऽऔदुम्बरः स्रुव ऽऔदुम्बर ऽइद्ध्म ऽऔदुम्बर्य्यौ ऽउपमन्थन्यौ ॥ २१ ॥ दश ग्राम्म्याणि धान्न्यानि भवन्ति । व्रीहियवास्तिलमाषा ऽअणुप्प्रियङ्गवो गोधूमाश्च मसूराश्च खल्लवाश्च खलकुलाश्च तान्त्सार्द्धं-म्पिष्ट्वा दध्ना मधुना घृतेनोपसिञ्चत्त्याज्ज्यस्य जुहोति ॥२२॥

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

---

[ पुत्रमन्थाख्यं कर्म, आचार्यपरम्परोपदेशश्च ]

एषां वै भूतानाम्पृथिवी रसः । पृथिव्व्या ऽआपो ऽपामोषधय ऽओषधीनाम्पुष्प्पाणि पुष्प्पाणाम्फलानि फला-नाम्पुरुषः पुरुषस्य रेतः ॥ १ ॥ स ह प्प्रजापतिरीक्षाञ्चक्रे । हन्तास्म्मै प्प्रतिष्ठाङ्कल्प्पयानीति स स्त्रियꣳ ससृजे ताꣳ सृष्ट्वाध ऽउपास्त तस्म्मात्स्त्रियमध ऽउपासीत श्रीर्ह्येषा स ऽएतम्प्राञ्चङ्ग्रावाणमात्त्मन ऽएव समु-दपारयत्तेनैनामभ्भ्यसृजत् ॥ २ ॥ तस्या वेदिरुपस्थः । लोमानि बर्हिश्चर्म्माधिषवणे समिद्धो मद्ध्यतस्तौ मुष्कौ

स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य ऽएवं विद्वानधोपहासञ्चरत्या स स्त्रीणाᳬं सुकृतं व्वृङ्क्तेऽथ य ऽइदमविद्वानधोपहासञ्चरत्यास्य स्त्रियः सुकृतं व्वृञ्जते ॥ ३ ॥ एतद्ध स्म वै तद्विद्वानुद्दालक ऽआरुणिराह । एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य ऽआहैतद्ध स्म वै तद्विद्वान्कुमारहारित ऽआह बहवो मर्य्या ब्ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य ऽइदमविद्वाᳬंसोऽधोपहासञ्चरन्तीति ॥४॥ बहु वा ऽइदᳬं सुप्तस्य वा जाग्रतो वा रेत स्कन्दति । तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्प्यसरद्यदपः ॥ इदमहन्तद्रेत ऽआददे पुनर्म्मामैत्विन्द्रियम्पुनस्तेज पुनर्ब्भगः पुनरग्नयो धिष्ण्या यथास्थानङ्कल्पन्तामित्यनामिकाङ्गुष्ठाब्भ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृञ्ज्यात् ॥ ५ ॥ अथ यद्युदक ऽआत्मानम्पश्श्येत् । तदभिमन्त्रयेत मयि तेज ऽइन्द्रियं य्यशो द्रविणᳬं सुकृतमिति ॥ ६ ॥ श्रीर्ह वा ऽएषा स्त्रीणाम् । यन्मलोद्वासास्तस्मान्मलोद्वाससं य्यशस्विनीमभिक्रम्म्योपमन्त्रयेत सा चेदस्मै न दद्यात्काममेनामपक्क्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां य्यष्ट्या वा पाणिना वोपहत्यातिक्क्रामेदिन्द्रियेण ते यशसा यश ऽआदद ऽइत्ययशा ऽएव भवति ॥ ७ ॥ स यामिच्छेत् । कामयेत मेति तस्यामर्थन्निष्ठाप्प्य मुखेन मुखᳬं सन्धायोपस्थमस्या ऽअभिमृश्श्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधि

जायसे ॥ स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेति ॥ ८ ॥ अथ यामिच्छेत् । न गर्भन्दधीतेति तस्यामर्थं निष्ठाप्य मुखेन मुखꣳ सन्धायाभिप्प्राण्ण्यापान्न्यादिन्द्रियेण ते रेतसा रेत ऽआदद ऽइत्यरेता ऽएव भवति ॥ ९ ॥* अथ यामिच्छेत् । गर्भन्दधीतेति तस्यामर्थन्निष्ठाप्य मुखेन मुखꣳ सन्धायापान्न्याभिप्प्राण्ण्यादिन्द्रियेण ते रेतसा रेत ऽआदधामीति गर्भिण्ण्येव भवति ॥ १० ॥ अथ यस्य जायायै जारꣳ स्यात् । तञ्चेद्द्विष्ष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हि स्तीर्त्त्वा तस्मिन्नेतास्तिस्रꣳ शरभृष्टीꣳ प्प्रतिलोमाꣳ सर्प्पिषाक्त्वा जुहुयान्मम समिद्धेऽहौषीराशापराकाशौ त ऽआददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीꣳ पुत्रपशूँस्त ऽआददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीꣳ प्प्राणापानौ त ऽआददेऽसाविति नाम गृह्णाति स वा ऽएष निरिन्द्रियो विसुकृदस्म्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणꣳ शपति तस्मादेवंविच्छ्रोत्रियस्य जायाया ऽउपहासन्नेच्छेदुत ह्येवंवित्परो भवति ॥ ११ ॥ अथ यस्य जायामार्त्तवं विन्देत् । त्र्यहङ्कꣳसे न पिबेदुहतवासा नैनां व्वृषलो न व्वृषल्ल्युपहन्न्यात्त्रिरात्रान्त ऽआप्प्लुत्य व्व्रीहीनवघातयेत् ॥ १२ ॥ स य ऽइच्छेत् । पुत्रो मे गौरो जायेत व्वेदमनुब्ब्रुवीत सर्व्वमायुरियादिति क्षीरौदनम्पाचयित्वा सर्प्पिष्म्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १३ ॥ अथ य ऽइच्छेत् । पुत्रो मे कपिलꣳ पिङ्गलो

* अत्र शतम् ७६०० ।

जायेत द्वौ वेदावनुब्ब्रुवीत सर्वमायुरियादिति दद्ध्योदन-म्पाचयित्वा सर्प्पिष्म्मन्तमश्श्नीयातामीश्श्वरौ जनयितवै ॥ १४ ॥ अथ य ऽइच्छेत् । पुत्त्रो मे श्यामो लोहिताक्षो जायेत त्रीन्न्वेदाननुब्ब्रुवीत सर्वमायुरियादित्युदौदनम्पा-चयित्वा सर्प्पिष्म्मन्तमश्श्नीयातामीश्श्वरौ जनयितवै ॥१५॥ अथ य ऽइच्छेत् । दुहिता मे पण्डिता जायेत सर्वमायुरि-यादिति तिलौदनम्पाचयित्वा सर्प्पिष्म्मन्तमश्श्नीयाता-मीश्श्वरौ जनयितवै ॥ १६ ॥ अथ य ऽइच्छेत् । पुत्त्रो मे पण्डितो विजिगीथः समितिङ्गमः शुश्श्रूषितां व्वाचम्भाषिता जायेत सर्व्वान्न्वेदाननुब्ब्रुवीत सर्वमायुरियादिति माᳬसौदन-म्पाचयित्वा सर्प्पिष्म्मन्तमश्न्नीयातामीश्श्वरौ जनयितवा ऽऔक्ष्णेन व्वार्षभेण वा ॥ १७ ॥ अथाभिप्प्रातरेव । स्थाली-पाकावृताज्यञ्चेष्ट्वित्वा स्थालीपाकस्योपघातञ्जुहोत्यग्नये स्वा-हानुमतये स्वाहा देवाय सवित्त्रे सत्त्यप्प्रसवाय स्वाहेति हुत्वोद्धृत्य प्प्राश्नाति प्प्राश्श्येतरस्याः प्प्रयच्छति प्प्रक्षाल्ल्य पाणी ऽउदपात्रम्पूरयित्वा तेनैनान्त्रिरब्भ्युक्षत्युत्तिष्ठातो विश्श्वावसोऽन्न्यामिच्छ प्प्रफर्व्व्यम् ॥ सञ्जायाम्पत्त्या सहेति ॥ १८ ॥ अथैनामभिपद्यते । अमोऽहमस्स्मि सा त्वᳬ सा त्वमस्यमो ऽअहम् ॥ सामाहमस्स्मि ऽऋक्त्वन्द्यौरहम्पृथिवी त्वम् ॥ तावेहि सᳬरभावहै सह रेतो दधावहै पुᳬसे पुत्त्राय वित्तय ऽइति ॥ १९ ॥ अथास्या ऽऊरू विहापयति । विजिहीथान्द्यावापृथिवी ऽइति तस्यामर्थन्निष्ट्वाप्प्य मुखेन मुखᳬ सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि 'विष्णुर्योनिं-

निष्कल्पयतु त्वष्टा रूपाणि पिंशतु ॥ आसिञ्चतु प्रजापतिर्धाता गर्भन्दधातु ते ॥ गर्भन्धेहि सिनीवालि गर्भन्धेहि पृथुष्टुके ॥ गर्भन्ते ऽअश्विनौ देवावाधत्ताम्पुष्करस्रजौ ॥ २० ॥ हिरण्ययी ऽअरणी । याभ्यान्निर्मन्थतामश्विनौ देवौ तन्ते गर्भन्दधामहे दशमे मासि सूतवे' ॥ यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी ॥ वायुर्दिशां यथा गर्भ ऽएवङ्गर्भन्दधामि तेऽसाविति नाम गृह्णाति ॥ २० ॥ सोष्यन्तीमद्भिरभ्युक्षति । 'यथा वातः[2] पुष्करिणीं समिङ्गयति सर्वतः ॥ एवा ते गर्भ ऽएजतु सहावैतु जरायुणा ॥ इन्द्रस्यायं व्रजः कृतः सार्गडः सपरिश्रयः ॥ तमिन्द्र निर्जहि गर्भेण सावरां सहेति ॥२२॥ जातेऽग्निमुपसमाधाय । अङ्क ऽआधाय कंसे पृषदाज्यमानीय पृषदाज्यस्योपघातञ्जुहोत्यस्मिन्त्सहस्रम्पुष्यासमेधमानः स्वे[3] गृहे ॥ अस्योपसद्याम्माच्छैत्सीत्प्रजया च पशुभिश्च स्वाहा ॥ मयि प्राणास्त्वयि मनसा जुहोमि स्वाहा ॥२३॥ यत्कर्मणात्यरीरिचम् । यद्वा न्यूनमिहाकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्स्विष्टं सुहुतङ्करोतु स्वाहेति ॥२४॥ अथास्यायुष्यङ्करोति । दक्षिणङ्कर्णमभिनिधाय वाग्वागिति त्रिरथास्य नामधेयङ्करोति 'वेदो[4]ऽसी'ति तदस्यैतद्गुह्यमेव नाम स्यादथ दधि मधु घृतं संसृज्यानन्तर्हितेन जातरूपेण प्राशयति

( १ ) ऋ० सं० ८. ८. ४१ । ( २ ) ऋ० सं० ४. ४. २० ।
( ३ ) "स्वगृहे" इति 'ग' 'ज' पुस्तकयोः । ( ४ ) शु० य० सं० २. २१

भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वन्त्वयि दधामीति ॥ २५ ॥ अथैनमभिमृशति । अश्मा भव परशुर्भव हिरण्यमस्तृतम्भव ॥ आत्मा वै पुत्त्रनामासि स जीव शरदः शतमिति ॥ २६ ॥ अथास्य मातरमभिमन्त्रयते । इडासि मैत्त्रावरुणी वीरे वीरमजीजनथाः ॥ सा त्वं वीरवती भव यास्मान्वीरवतोऽकरदिति ॥ २७ ॥ अथैनम्मात्रे प्प्रदाय स्तनम्प्रयच्छति । '[1]यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्त्रः ॥ येन विश्श्वा पुष्यसि वार्य्याणि सरस्वति तमिह धातवेऽक'रिति ॥ २८ ॥ तं वा ऽएतमाहुः । अतिपिता बताभूरतिपितामहो बताभूः परमाम्बत काष्ठाम्प्राप श्रिया यशसा ब्ब्रह्मवर्च्चसेन य ऽएवंविदो ब्ब्राह्मणस्य पुत्त्रो जायत ऽइति ॥ २९ ॥ अथ वंशः । तदिदं वयम्भारद्वाजीपुत्त्राद्भारद्वाजीपुत्त्रो वात्सीमाण्डवीपुत्त्राद्वात्सीमाण्डवीपुत्त्रः पाराशरीपुत्त्रात्पाराशरीपुत्त्रो गार्ग्गीपुत्त्राद्गार्ग्गीपुत्त्रः पाराशरीकौण्डिनीपुत्त्रात्पाराशरीकौण्डिनीपुत्त्रो गार्ग्गीपुत्त्राद्गार्ग्गीपुत्त्रो गार्ग्गीपुत्त्राद्गार्ग्गीपुत्त्रो वाडेयीपुत्त्राद्वाडेयीपुत्त्रो मौषिकीपुत्त्रान्मौषिकीपुत्त्रो हारिकर्ण्णीपुत्त्राद्धारिकर्ण्णीपुत्त्रो भारद्वाजीपुत्त्राद्भारद्वाजीपुत्त्रः पैङ्गीपुत्त्रात्पैङ्गीपुत्त्रः शौनकीपुत्त्राच्छौनकीपुत्त्रः ॥ ३० ॥ काश्श्यपीबालाक्क्यामाठरीपुत्त्रात् । काश्श्यपीबालाक्क्यामाठरीपुत्त्रः

(१) शु० य० सं० ३८. ५

कौत्सीपुत्त्रात्कौत्सीपुत्त्रो बौधीपुत्त्राद्बौधीपुत्त्रः शालङ्कायनीपुत्त्राच्छालङ्कायनीपुत्त्रो वार्षगणीपुत्त्राद्वार्षगणीपुत्त्रो गौतमीपुत्त्राद्गौतमीपुत्त्र ऽआत्त्रेयीपुत्त्रादात्त्रेयीपुत्त्रो गौतमीपुत्त्राद्गौतमीपुत्त्रो वात्सीपुत्त्राद्वात्सीपुत्त्रो भारद्वाजीपुत्त्राद्भारद्वाजीपुत्त्रः पाराशरीपुत्त्रात्पाराशरीपुत्त्रो वार्कारुणीपुत्त्राद्वार्कारुणीपुत्त्र ऽआर्त्तभागीपुत्त्रादार्त्तभागीपुत्त्रः शौङ्गीपुत्त्राच्छौङ्गीपुत्त्रः साङ्कृतीपुत्त्रात्साङ्कृतीपुत्त्रः ॥ ३१ ॥ आलम्बीपुत्त्रात् । आलम्बीपुत्त्र ऽआलम्बायनीपुत्त्रादालम्बायनीपुत्त्रो जायन्तीपुत्त्राज्जायन्तीपुत्त्रो माण्डूकायनीपुत्त्रान्माण्डूकायनीपुत्त्रो माण्डूकीपुत्त्रान्माण्डूकीपुत्त्रः शाण्डिलीपुत्त्राच्छाण्डिलीपुत्त्रो राथीतरीपुत्त्राद्राथीतरीपुत्त्रः क्रौञ्चिकीपुत्त्राभ्याङ्क्रौञ्चिकीपुत्त्रौ वैदभृतीपुत्त्राद्वैदभृतीपुत्त्रो भालुकीपुत्त्राद्भालुकीपुत्त्रः प्राचीनयोगीपुत्त्रात्प्राचीनयोगीपुत्त्रः साञ्जीवीपुत्त्रात्साञ्जीवीपुत्त्रः कार्शकेयीपुत्त्रात्कार्शकेयीपुत्त्रः ॥ ३२ ॥ प्राश्नीपुत्त्रात् । आसुरिवासिनः प्राश्नीपुत्त्र ऽआसुरायणादासुरायण ऽआसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य ऽउद्दालकादुद्दालकोऽरुणादरुण ऽउपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाद्ध्योगाज्जिह्वावान्बाद्ध्योगो[1]ऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो

( १ ) "बाद्ध्योगाज्जिह्वावा बाद्ध्यो॰" इति 'ग' 'ज' पुस्तकयोः

वागम्भिणय्या ऽअम्भिणय्यादित्यादादित्यानीमानि शुक्लानि यजूᳬषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३३ ॥

नवमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे सप्तमः प्रपाठकः ॥७॥ कण्डिकासंख्यका ॥१०१॥

इति नवमोऽध्यायः ॥ ९ ॥

उपनिषन्नाम चतुर्दशं काण्डं * समाप्तम् ॥ १४ ॥

समाप्तश्चेदं माध्यन्दिनीयं शतपथब्राह्मणम् † ।



* अस्मिन्काण्डे कण्डिकासंख्या ७९६ ।

† अत्र शतमध्यायाः १०० ।